# AHIRBUDHNYA-SAṂHITA
OF THE
# PĀÑCARĀTRĀGAMA

[I]

EDITED BY
**PANDIT M. D. RAMANUJACHARYA**
UNDER THE SUPERVISION OF
**F. OTTO SCHRADER**



REVISED BY
**PANDIT V. KRISHNAMACHARYA**

THE ADYAR LIBRARY AND RESEARCH CENTRE

विजयतां श्रीसुदर्शनः

येन त्रितो अर्णवान्निर्बभूव
येन सूर्यं तमसो निर्मुमोच ।
येनेन्द्रो विश्वा अजहादरातीस्-
तेनाहं ज्योतिषा ज्योतिरानशान आक्षि ॥

(तैत्तिरीयारण्यकम्, २.३.७)

## *PREFACE*

THE *Ahirbudhnya-saṃhitā* was first published in 1916 by the Adyar Library and Research Centre, under the supervision of its Director, Dr. F. Otto Schrader, to initiate investigation into the Pāñcarātra, which was then a much neglected field of study. Since this early publication, the Adyar Library has brought out other Pāñcarātra works, namely *Pāñcarātrarakṣā* and *Lakṣmītantra.* The next addition to this list will be the *Sanatkumāra-saṃhitā* which is in the course of publication.

As the *Ahirbudhnya-saṃhitā* has been out of print for several years, and since there has been a demand for it, this second edition is now published. The text has been revised by Pandit V. Krishnamacharya. As was pointed out by Johan van Manen in the Prefatory Note to the first edition, there was need for revision since Dr. Schrader could not supervise the entire work, being interned as a German national during the first World War when the publication was in progress.

For the revised edition, we have used an additional manuscript (J) kindly lent by the Madras Government Oriental Manuscripts Library. Details concerning the manuscripts used are given below:

A. Adyar Library, No. 73689. Palm leaf. 42 × 4 cm. 147 fo. 9 lines in a page. 46 letters in

a line. Grantha script. Old, slightly injured. Complete.

B. Government Oriental Library, Mysore. Incomplete.

C. Adyar Library, No. PM 1760. Paper. 30 × 23 cm. 99 fo. 18 lines in a page. 18 letters in a line. Grantha script. Old. Incomplete.

D. Palace Library, Trivandrum. 129 fo. Malayalam script. Old.

E. MS. of Sri Devarajabhattar, Kalale in Mysore State. Palm leaf. 103 fo. Grantha script.

F. MS. of Sri Ramaswami Bhattar of Melkote in Mysore state. Palm leaf. 174 fo. Grantha script.

G. MS. of Sri Ramaswami Bhattar of Melkote in Mysore state. Palm leaf. Grantha script.

H. and I. MSS. of Sri Narasimha Bhattar of Melkote in Mysore state.

J. Additional MS. used in 2nd edition. Government Oriental MSS. Library, Madras, No. D 5201. Paper. 35 × 22 cm. 52 fo. 20 lines in a page. 16 letters in a line. Grantha script. Chapters I to XVIII.

A detailed *Introduction to the Pāñcarātra and the Ahirbudhnya-saṃhitā* by Dr. Schrader being available in a separate volume (No. 5 of the Adyar Library Series), the present edition has been printed without any introduction.

Our thanks are due to Pandit K. Parameswara Aithal and Prof. A. A. Ramanathan who have rendered assistance to Pandit V. Krishnamacharya. We are also grateful to the Government of India, Ministry of Education, for their encouragement in reprinting this valuable work.

20 June 1966

RADHA BURNIER
*Director*

# विषयानुक्रमणिका

अध्यायः

अध्यायः

अध्यायः

# श्रीपाञ्चरात्रे अहिर्बुध्न्यसंहिता

## शास्त्रावतारो नाम प्रथमोऽध्यायः

[1]शुक्लाम्बरधरं विष्णुं शशिवर्णं चतुर्भुजम् ।
प्रसन्नवदनं ध्यायेत् सर्वविघ्नोपशान्तये ॥

मङ्गलाचरणम्

[2]अक्षरत्रितयाव्यक्तविकाराक्षादिरूपिणे ।
परव्यूहादितत्त्वाय नमश्चक्राय चक्रिणे ॥ १ ॥
सोमसूर्यानलाकल्पामकल्पामिन्दुशेखराम् ।
पञ्चबिन्दुं हरेः शक्तिं पञ्चकृत्यकरीं नुमः ॥ २ ॥

भरद्वाजस्य दुर्वाससं प्रति सुदर्शनमाहात्म्यकारणप्रश्नः

आप्लुतं दिव्यगङ्गायामुपासीनं परं पदम् ।
भरद्वाजोऽथ पप्रच्छ दुर्वाससमकल्मषम् ॥ ३ ॥

भरद्वाजः—

अनसूयाहृदानन्द भगवंस्तपसां निधे ।
अस्ति मे संशयः कश्चित् तं मे व्याख्यातुमर्हसि ॥४॥

[1] श्लोकोऽयं E F G J पुस्तकेषु दृश्यते.    [2] अक्षरत्रितयव्यक्त D.

अग्नीषोमक्रियायोगिन्याथर्वणविनिर्णये ।
महोदयेऽस्त्रसंघे च प्रवर्तकनिवर्तके ॥ ५ ॥
लोकपालास्त्रसंघे च तत्तत्सामर्थ्यसंभृते ।
महोदयासु शक्तीषु[1] वह्निसूर्येन्दुवर्त्मनाम्[2] ॥ ६ ॥
अस्त्राश्रये च शस्त्रौघे ब्रह्मरुद्रादिनिर्मिते ।
त्रैलोक्यत्राणसंहारजनिकर्मविचक्षणे ॥ ७ ॥
महर्षिगणसंदृष्टे मन्त्रग्रामे महोदये ।
वैष्णवे च गदाशार्ङ्गशङ्खखड्गादिपूर्वके ॥ ८ ॥
[3]लाक्ष्मे च [4]दलगण्डाब्जपूर्वेऽस्त्रौघे महोदये ।
अन्यत्रोच्चावचेऽप्येवं कीर्त्यमाने प्रभावतः ॥ ९ ॥
सुदर्शनाश्रयत्वं तु तत्र तत्र निरूपितम् ।
किंकृतं तस्य माहात्म्यं स्वतः संसर्गतोऽपि वा ॥ १० ॥
किं तत् सुदर्शनं नाम [5]कश्च शब्दार्थ इष्यते ।
तेन किं क्रियते कर्म जगद् व्याप्नोति तत् कथम् ॥ ११ ॥
कियन्तः कीदृशाः के च व्यूहास्तस्योदिता मुने ।
प्रयोजनं च किं तेषां व्यूही[6] तेषां च कीदृशी ॥ १२ ॥
विष्णुना तस्य संबन्धः कश्च कीदृक् च संमतः ।
किं तेन नियतं नित्यमुतान्यत्रापि दृश्यते ॥ १३ ॥

[1] All MSS. read thus.
[2] वर्त्मना D.
[3] लाक्ष्म्ये A B C E F J.
[4] हलकण्ठाब्ज D; हलघण्टाब्ज E.
[5] काल A B C J.
[6] व्यूहा J.

एष मे संशयो जातो नानाशास्त्रनिरीक्षणात् ।
छिन्द्ध्येनं भगवन् सम्यगुपसन्नोऽस्म्यधीहि भोः ॥१४॥

दुर्वाससः प्रश्नप्रशंसापूर्वकं तत्प्रतिवचनम्

दुर्वासाः—

उपपन्नमिदं वत्स यत् त्वयैवं विमृश्यते ।
तानि तानि तपांस्यद्य व्युच्छन्ति तव सुव्रत ॥ १५ ॥

पक्वकषायस्यैव परतत्त्वजिज्ञासोदयः

[1]आन्तःकरणिके तैस्तैः क्षयं नीते कषायके ।
मनीषा जायते पुंसां परतत्त्वविमर्शिनी[2] ॥ १६ ॥

अत्र ब्रह्मादीनामपि संशयः

न संशयी भवानेव पूर्वोपन्यस्तवस्तुनि ।
ब्रह्माद्याश्च [3]यतन्तेऽत्र संशयाना मनीषिणः ॥ १७ ॥

स्वस्याहिर्बुध्न्यात् तत्त्वनिर्णयप्राप्तिः

निर्णयोऽत्र मया प्राप्तो नारदाय सुरर्षये ।
साक्षात् कथयतः पृष्टाच्छंकराल्लोकशंकरात् ॥ १८ ॥

नारदस्योत्कर्षः

प्राप्याग्रयां [4]तपसो व्युष्टिं नारदो देवसंमतः ।

[1] आन्तं कारणिकैः A B C.
[2] विमर्शने J.
[3] यतस्तत्र E.
[4] तपसः पुष्टिं J.

छिन्दानः संशयान् सर्वान् ब्रह्मदेवमहर्षिषु ॥ १९ ॥

तस्यापि तत्त्वविषयसंदेहादहिर्बुध्न्याभिगमनम्

स्वयं तु संशयं प्राप्य गहनं दुर्विदं सुरैः ।
अरागरोगकलुषस्तपस्वी संयतेन्द्रियः ॥ २० ॥
पदवाक्यप्रमाणानां याथातथ्यविधानवित् ।
ब्रह्मचारी दमावासः [1]परापरविभागवित् ॥ २१ ॥
शुश्रूषुरनहंवादी यथार्थज्ञानतत्परः ।
नारदो मुनिशार्दूलस्त्रीन् लोकाननुसंचरन् ॥ २२ ॥
छेत्तारं संशयस्यास्य दुर्विदस्य सुरर्षिभिः
देवादनभिगम्यान्यं सर्वज्ञाचन्द्रशेखरात् ॥ २३ ॥

कैलासवर्णनम्

प्रभाभिः स्वाभिरखिलान् प्रहसन्तमिवाचलान् ।
उन्मेषमिव सत्त्वस्य प्रकृष्टज्ञानकारिणः[2] ॥ २४ ॥
सिद्धविद्याधराकीर्णं देवगन्धर्वसेवितम् ।
कैलासं शंकरावासं शंकरं द्रष्टुमाययौ ॥ २५ ॥

अहिर्बुध्न्यवर्णनम्

रुद्रैर्वसुभिरादित्यैः सिद्धैः साध्यैर्मरुद्गणैः ।
ऋषिभिर्योगिभिर्दिव्यैर्भूतैर्नानाविधैरपि ॥ २६ ॥

[1] परात्पर A B C E F J.
[2] कारणम् A B C E F J.

ददर्श सेवितं तत्र समासीनं सहोमया ।
त्र्यक्षं वरदमीशानं शूलिनं चन्द्रशेखरम् ॥ २७ ॥
पतिं पशूनामनिशं भवपाशविभेदिनम् ।
स्थितं मूर्तिभिरष्टाभिरवष्टभ्य जगत्त्रयम्[1] ॥ २८ ॥
तं दृष्ट्वा देवमीशानं नारदो देवदर्शनः ।
प्रणिपत्याथ तुष्टाव गीर्भिरग्र्याभिरादरात् ॥ २९ ॥

नारदकृताहिर्बुध्न्यस्तुतिः

**नारदः—**

नमस्ते देवदेवेश नमस्ते वृषकेतन ।
वृषप्रवरवाह्याय [2]वृष्णे कामप्रवर्षिणे ॥ ३० ॥
ओजीयसे परस्मै ते मीढुष्टम नमोऽस्तु ते ।
सर्वज्ञाय स्वतन्त्राय नित्यतृप्ताय[3] ते नमः ॥ ३१ ॥
अनादिबोधरूपाय नमस्ते नित्यशक्तये ।
कर्त्रे [4]हर्त्रे च जगतां षडङ्गाय नमोऽस्तु ते ॥ ३२ ॥
दशाव्यय नमस्तुभ्यं नमस्ते कृत्तिवाससे ।
अघोरायाथ घोराय [5]घोरघोरतराय [6]च ॥ ३३ ॥
[[7]सद्योजाताय देवाय वामदेवाय ते नमः ।

[1] त्रयीम् D. [2] वृष्णिकामप्रधर्षिणे A E F; विष्णो कामप्रधर्षिणे B.
[3] वृत्ताय D. [4] भर्त्रे A B C J.
[5] घोरघोराय ते नमः D. [6] ते E F.
[7] [ ] कुण्डलितं श्लोकद्वयं D पुस्तक एव दृश्यते.

नमो ज्येष्ठाय रुद्राय भवोद्भव नमोऽस्तु ते ॥ ३४ ॥
नमो बलविकाराय बलप्रमथनाय ते ।
नमः . . . . . . . . य ते नमः] ॥ ३५ ॥
नमः कलविकाराय कालाय कलनात्मने ।
नमस्ते सर्वभूतानां [1]दमनाय मनोन्मन ॥ ३६ ॥
नमः शर्वाय शान्ताय शंभवे शंभवे नमः ।
विद्येश्वर नमस्तुभ्यं भूतेश्वर नमोऽस्तु ते ॥ ३७ ॥
महादेव नमस्तेऽस्तु नमस्तत्पुरुषाय ते ।
ज्ञानरूप नमस्तुभ्यं नमो वैराग्यवारिधे ॥ ३८ ॥
ऐश्वर्यगुणपूर्णाय नमस्ते तपसां निधे ।
नित्यसत्य नमस्तेऽस्तु क्षमासार नमोऽस्तु ते ॥ ३९ ॥
धृतिसार नमस्तुभ्यं स्रष्ट्रे ते जगतां नमः ।
आत्मसंबोधपूर्णाय त्रीन् लोकानधितिष्ठते ॥ ४० ॥
दशाव्ययाय ते नित्यमव्ययाय नमो नमः ।
[2]क्षोण्यम्ब्वनलवाय्वभ्रचन्द्रादित्यात्मने नमः[3] ॥ ४१ ॥
नमः सर्वोपकाराय त्रिलोकीमधितस्थुषे ।

दुर्वासाः—

इति स्तुवानमग्र्याभिर्वाग्भिर्देवर्षिसत्तमम् ॥ ४२ ॥
प्रसादमधुरं वाक्यमित्युवाच वृषध्वजः ।

[1] आनन्दाय नमो नमः A B C E F J.
[2] क्षोण्यम्भो J.
[3] चन्द्रादित्यात्ममूर्तिभिः D.

अहिर्बुध्न्यः—

स्तोत्रेणानेन भक्त्या च तुष्टोऽस्मि मुनिपुंगव ॥ ४३ ॥

ब्रूहि किं करवाण्यद्य यद्यपि स्यात् सुदुर्लभम्[1] ।

नारदः—

[2]किमन्यदिह वक्तव्यं यदि तुष्टो जगत्पतिः ॥ ४४ ॥

एतदेव हि काङ्क्षन्ति यतमाना विपश्चितः ।

अहिर्बुध्न्यः—

प्रसन्नोऽस्मि तवाद्यास्तु दर्शनं सफलं मम ॥ ४५ ॥

ब्रूहि नारद तत्त्वेन यत् ते मनसि वर्तते ।

कालनेमिसंग्रामे नारदस्य सुदर्शनमहिमदर्शनम्

नारदः—

तारकामयसंकाशे संग्रामे कालनेमिनः ॥ ४६ ॥

संप्रवृत्ते जगद्धातुर्देवदेवस्य शार्ङ्गिणः ।

देवदानवगन्धर्वयक्षरक्षोभयावहे ॥ ४७ ॥

मध्याह्नार्कसहस्राभशस्त्रास्त्रगणसंकुले ।

सुरासुरेन्द्रसैन्येषु निकृत्तेषु महास्त्रतः ॥ ४८ ॥

[3]भीतविस्मितसंभूतहृतसंगतसंप्लुतैः ।

पिशाचप्रेतवेतालभूतसंघैः समाकुले[4] ॥ ४९ ॥

[1] सुदुष्करम् D.

[2] यदि स्यादिह J.

[3] भीतविस्मितसंप्रीत D E.

[4] समाकुलैः J.

उद्यन्तीष्वतिघोरासु ह्रादिनीष्वशनीषु च ।
देवदानवदेहेभ्यः क्षरद्भिः क्षतजैस्तथा ॥ ५० ॥
स्यन्दमानासु वेगेन स्यन्दिनीषु[1] समन्ततः ।
विद्रुतैः सर्वतो भीतैर्हतशेषैः[2] सुरासुरैः ॥ ५१ ॥
गरुडस्थे जगन्नाथे सुदर्शनकराम्बुजे ।
प्रादुश्चक्रे कालनेमिरस्त्रग्रामानशेषतः ॥ ५२ ॥
भृशाश्वतनया ये ते ये ते त्वन्मुखनिःसृताः ।
ये ते ब्रह्ममुखोद्भूता ये ते संवर्तकालजाः ॥ ५३ ॥
लोकपालोद्भवा ये ते ये ते पातालवासिनः ।
महाभूतमया ये ते ये ते वैकारिकोद्भवाः ॥ ५४ ॥
गुणत्रयमया ये ते ये ते गन्धर्वयोनयः ।
[3]रक्षोयक्षोद्भवा ये ते ये ते विद्याधराह्वयाः ॥ ५५ ॥
ये ते द्वन्द्वगुणोद्भूता ये ते शक्तिसमुद्भवाः ।
[4]अथर्वाङ्गिरसा ये ते ये ते मन्त्रान्तरोद्भवाः ॥ ५६ ॥
सर्वकार्यकरा ये ते प्रवर्तकनिवर्तकाः ।
यष्टयः शक्तयो यास्ता ये ते [5]दण्डादिरूपकाः ॥ ५७ ॥
महाबला महावीर्यास्त्रैलोक्यक्षपणोद्यताः ।
शैलेन्द्रसंनिभाः केचित् केचिन्नागेन्द्रसंनिभाः ॥ ५८ ॥

[1] स्यन्दनीषु J.
[2] हतिशिष्टैः F; हतशिष्टैः E J.
[3] यक्षरक्षोद्भवा A B C E F J.
[4] अथर्वाङ्गिरसो J.
[5] दग्धादि D.

पारावारनिभाः केचित् केचिद् गगनसंनिभाः ।
ज्वलज्ज्वालाशतालीढा रोदसीमध्यवर्तिनः ॥ ५९ ॥
नृत्यन्तश्च हसन्तश्च क्ष्वेलन्तः पतयालवः ।
अनिर्देश्या अनौपम्या गौराः श्वेतारुणासिताः[1] ॥६०॥
नानासंस्थानवर्णाश्च नानाविभ्रमरोचिषः ।
सर्वे संभूय संयत्ताः[2] कालनेमिप्रचोदिताः ॥ ६१ ॥

सर्वास्त्राणां सुदर्शनेन पराभवः

सप्रयोगोपसंहारैः [3]सरहस्यैश्च संगतैः ।
अस्त्रग्रामैरशेषैस्तैर्नारायणकरोद्यते ॥ ६२ ॥
सुदर्शनमहावह्नौ संभूय शलभायितम् ।
पूर्णाहुतिरभूत् तस्मिन् कालनेमिर्महासुरः ॥ ६३ ॥

अत्यद्भुतमहिमदर्शनात् संशयोदयः

तं दृष्ट्वा विस्मयाविष्टः संग्रामं महदद्भुतम् ।
अन्तर्हितं क्षणात् कृष्णं प्रणिपत्य जगद्गुरुम् ॥ ६४ ॥
इमं संदेहसंदोहं हृदयेन वहन् गुरुम् ।
तवान्तिकमिह प्राप्तः संशयच्छेदनाय वै ॥ ६५ ॥
न हि सर्वज्ञमीशानं विना छेत्तास्य विद्यते ।

[1] श्वेतारुणाः सिताः J.
[2] संयुक्ताः J.
[3] सरहस्यैः ससंग्रहैः D J.

अहिर्बुध्न्यः—

देवर्षे संशयान् ब्रूहि ये वर्तन्ते तवान्तरे ॥ ६६ ॥
अप्यनिर्वचनीयास्ते सर्वांश्छेत्तास्मि सांप्रतम् ।

दुर्वासाः—

अथ प्रश्नान् क्रमेणोक्तान् नारदेन [1]सुरर्षिणा ॥ ६७ ॥
व्याचष्ट भगवान् शर्वः सर्वतः[2] प्रीतमानसः ।

संहितावतरणम्

संहिता सेयमाख्याता [3]नानामन्त्रार्थगोचरा ॥ ६८ ॥
पञ्चरात्रमयी दिव्या नाम्नाहिर्बुध्न्यपूर्विका[4] ।
अर्थैः परकृतिप्रायैः पुराकल्पैश्च संयुता ॥ ६९ ॥
नानासिद्धान्तसंभेदा नानाविद्योपशोभिता[5] ।
शतद्वयमिहाध्यायाश्चत्वारिंशच्च दर्शिताः ॥ ७० ॥
ततो द्वापरवेलायां मनुष्याणां हिताय वै ।
अध्यायानां शतेनाथ विंशत्या च समन्विता ॥ ७१ ॥
अतिविस्तरमुत्सृज्य [6]गुह्येन प्रतिसंस्कृता ।
ततोऽपि बुद्धिसंकोचान्मनुष्याणां हिताय वै ॥ ७२ ॥

[1] महर्षिणा D.
[2] सर्वज्ञः A B C E F J.
[3] नानातंत्रार्थ D.
[4] रूपिका A B C E.
[5] शोभिनी C E F.
[6] गुहेन D.

याति द्वापरसन्ध्यंशे व्यासस्यानुमतेर्मया[1] ।
[2]षष्ट्यध्यायैरियं भूयः संहिता प्रतिसंस्कृता ॥ ७३ ॥
उपन्यास्यद्यथाप्रश्नं नारदो भगवानृषिः ।
निरुवाच यथा शर्वस्तान्[3] सर्वांस्त्वं निबोध मे ॥ ७४ ॥

इति श्रीपाञ्चरात्रे तन्त्ररहस्ये अहिर्बुध्न्यसंहितायां शास्त्रावतारो नाम
प्रथमोऽध्यायः

श्लोकाः ७४

[1] मते मया D J.
[2] षष्ट्या J.
[3] ताः सर्वांस्त्वं J.

## षाड्गुण्यब्रह्मविवेको नाम द्वितीयोऽध्यायः

अहिर्बुध्न्यं प्रति नारदप्रश्नः

**नारदः—**

**मन्त्रग्रामानशेषांस्तान्[1] सूर्यवैश्वानरोपमान् ।**
**अनायासेन जग्राह हरेश्चक्रं सुदर्शनम् ॥ १ ॥**
**सांसिद्धिकप्रभावोऽयमस्य सांसर्गिकोऽपि वा ।**
**[2]किं तत् सुदर्शनं नाम कश्च शब्दार्थ उच्यते ॥ २ ॥**

अहिर्बुध्न्येन संकर्षणात् स्वस्य ज्ञानप्राप्तिकथनम्

**अहिर्बुध्न्यः—**

**शृणु नारद तत्त्वेन यत् तज्ज्ञानमनुत्तमम् ।**
**वर्षायुतगणान् घोरं तपस्तप्त्वा मया पुरा ॥ ३ ॥**
**[3]प्राप्तं संकर्षणात् साक्षाद् विज्ञानबलवारिधेः ।**
**ब्रह्मादिषु यदन्येषु [4]न महर्षिषु विद्यते ॥ ४ ॥**
**सुदर्शनस्वरूपं तत् प्रोच्यमानं मया शृणु ।**
**श्रुते [5]यत्राखिलाधारे संशयास्ते न सन्ति वै[6] ॥ ५ ॥**

1 यान् A B C.
2 क्व A B C F.
3 प्राप्तः A.
4 महर्षिषु न A B C E F J.
5 यन्त्राखिलाधारे D.
6 ते E F J.

परब्रह्मस्वरूपसंक्षेपः

अनाद्यन्तं परं ब्रह्म यत् तदक्षरमव्ययम् ।
अनामरूपसंभेद्यमवाङ्मनसगोचरम् ॥ ६ ॥
सर्वशक्ति समस्ताख्यं[1] षाड्गुण्यमजरं ध्रुवम् ।

सुदर्शनशब्दार्थनिरूपणम्

तस्य स्यामिति संकल्पो भावतोऽभावतोऽपि वा ॥ ७ ॥
स्वातन्त्र्याननुयोज्येन रूपेण परिवर्तते ।
यत् तत् [2]प्रेक्षणमित्युक्तं दर्शनं तत् प्रगीयते ॥ ८ ॥
वस्तुतः कालतो देशात् तस्य [3]त्वव्याहतिर्हि या ।
पूजा सात्र सुशब्दार्थस्तत् सुदर्शनमीर्यते ॥ ९ ॥

सर्वस्य सुदर्शनाधीनत्वम्

कारणं जगतो यत् तदाधारो जगतश्च यः[4] ।
प्रमाणं जगतो यत् तत् प्रमाणार्थोऽखिलश्च यः ॥ १० ॥
तत्राधिकारिणो ये च विभागा ये च तद्गताः ।
रक्षाविधिश्च यस्तस्य स च यस्य प्रकीर्तितः ॥ ११ ॥
सर्वं सुदर्शनायत्तं सुदर्शनमयं च यत् ।
इति सांसिद्धिकं रूपं तस्य सर्वातिशायि च ॥ १२ ॥

1 समस्ताख्या D B.
2 प्रोक्षणम् A B C E F.
3 त्वविहतिर्यथा E F J.
4 यत् D.

अस्त्रग्रामेष्वशेषेषु यत् तत् सामर्थ्यमैश्वरम् ।
एतदीयमशेषं तदित्याप्तं स्वेन तत् स्वकम्[1] ॥ १३ ॥

पुनर्नारदकृताः प्रश्नाः

**नारदः—**

देवदेव जगन्नाथ लोकत्रितयशंकर ।
विमुह्यतीव चित्तं मे संशयो बहुलीकृतः ॥ १४ ॥
षाड्गुण्यं किं परं ब्रह्म किंप्रकारं[2] च तद्भवेत् ।
संकल्पः कीदृशस्तस्य कथं दर्शनतास्य च ॥ १५ ॥
कथं चाविहतिस्तस्य [3]सर्वदेशातिगोचरा ।
किं कारणं च जगतः कीदृशं किंविधं च तत् ॥ १६ ॥
को वा जगत आधारः कीदृक् कतिविधश्च सः ।
किं तत् प्रमाणमित्युक्तं कीदृक् कतिविधं च तत् ॥१७॥
प्रमाणार्थश्च को नाम कीदृक् कतिविधश्च सः ।
के तेऽधिकारिणो नाम कीदृशाः किंविधाश्च ते ॥ १८ ॥
सर्वस्यास्य च का रक्षा तद्विधिः कश्च किंविधः ।
कश्च तत्राधिकार्यर्थः स च किंगुण इष्यते ॥ १९ ॥
एतन्मे भगवन् ब्रूहि प्रश्नजातमशेषतः ।
उपसंगृह्य चरणावुपसन्नोऽस्म्यधीहि भोः ॥ २० ॥

[1] इत्याप्तस्वेन तत् स्वकम् A B C D.
[2] किंप्रकारश्च A B C.
[3] सर्वदेवा A B C D.

दुर्वासाः—

ततो दर्शनपूताय प्रणिपत्याभियाचते ।
उपसन्नाय मुनये सर्वं व्याचष्ट शंकरः ॥ २१ ॥

विस्तरेण परब्रह्मस्वरूपनिरूपणम्

अहिर्बुध्न्यः—

एकं निर्दुःखनिःसीमसुखानुभवलक्षणम् ।
अनाद्यन्तं परं ब्रह्म नारायणमनामयम् ॥ २२ ॥
सर्वभूतकृतावासं सर्वं व्याप्य व्यवस्थितम् ।
निरवद्यमविक्षिप्तमतरङ्गार्णवोपमम् ॥ २३ ॥

परब्रह्मणः हेयप्रतिभटत्वं कल्याणगुणाकारत्वं च

अप्राकृतगुणस्पर्शमप्राकृतगुणास्पदम् ।
भवोदधेः परं पारं निष्कलङ्कं निरञ्जनम् ॥ २४ ॥
आकाराद् देशतः कालादनवच्छेदयोगतः ।
पूर्णं नित्योदितं व्यापि हेयोपादेयतोज्झितम् ॥ २५ ॥
इदमीदृगियत्ताभिरपरिच्छेद्यमञ्जसा ।

परब्रह्मणः परमात्मादिसकलशब्दवाच्यत्वम्

उपर्युपरि तत्त्वानां पूर्वपूर्वात्मभाविनाम् ॥ २६ ॥
पारम्येणात्मभावित्वात् परमात्मा प्रकीर्तितः ।
ओमित्यापन्नयोगेन सर्वतत्त्वप्रवेशतः[1] ॥ २७ ॥

[1] प्रवेशित: A B C.

षाड्गुण्यगुणयोगेन भगवान् परिकीर्तितः ।
समस्तभूतवासित्वाद् वासुदेवः प्रकीर्तितः ॥ २८ ॥
आप्नोति [1]जगदित्येवमात्मत्वेन निरूपितः ।
रूपात् प्रकारतोऽव्यक्तेरव्यक्तः परिगीयते ॥ २९ ॥
सर्वप्रकृतिशक्तित्वात् सर्वप्रकृतिरीरितः ।
प्रधीयमानकार्यत्वात्[2] प्रधानः परिगीयते ॥ ३० ॥
नेतृत्वादनितृत्वाच्च नित्य इत्यपि पठ्यते ।
अननाददनाच्चापि ह्यनन्तः परिपठ्यते ॥ ३१ ॥
परितो मित्यभावाच्च प्रोक्तोऽपरिमितो बुधैः ।
अक्षयादक्षरः प्रोक्तो ह्यरिष्टो रिष्टवर्जनात् ॥ ३२ ॥
अविकार्यस्वभावत्वादव्याप्यत्वात् तथाच्युतः ।
रागादिदोषनिर्मुक्तेः समधीगोचरत्वतः ॥ ३३ ॥
सर्वोपादानतासाम्यात् समः संपरिकीर्तितः ।
ध्यानवर्त्मबहिर्भावात् स्वभावाननुयोगतः ॥ ३४ ॥
इयत्तयाप्यचिन्त्यत्वादचिन्त्यः परिकीर्तितः ।
जगन्ति प्रभवन्त्यस्मात् सर्वत्र प्रभवत्यपि ॥ ३५ ॥
प्रकृष्टश्च भवो यस्मात् प्रभवः परिकीर्तितः ।
सर्वप्रलयभूमित्वादव्ययो व्ययनाशनात् ॥ ३६ ॥
बृहत्त्वाद् बृंहणत्वाच्च ब्रह्मेति श्रुतिगह्वरे ।
कपिलः श्रेष्ठविद्यत्वात् तेजिष्ठत्वाच्च कापिलः ॥ ३७ ॥

[1] मितमित्येवम् E J.

[2] कारित्वात् प्रधानं D.

हितश्च रमणीयश्च गर्भो हृदयनामवान् ।
हिरण्यगर्भ इत्येवं योगिभिः समुदाहृतः ॥ ३८ ॥
अपनाशतपोयोगादपान्तरतपाः श्रुतः ।
[1]शिवंकरतया प्रोक्तः शिवः पाशुपते स्थितैः ॥ ३९ ॥
अदूरविप्रकर्षस्थैर्वस्तुतोऽनवगाहिभिः ।
इत्येवमादिभिः शब्दैस्तत्त्वं तदुपलक्ष्यते ॥ ४० ॥

प्रतिबन्धविगमे ब्रह्मानुभवसंभवः

[2]अनेकजन्मसंसिद्धपुण्यपापपरिक्षये ।
निकृत्ते वासनाजाले सम्यग्विज्ञानशस्त्रतः ॥ ४१ ॥
[3]त्रैगुण्योपरमे तत्तु स्वेनानुभवितुं क्षमम् ।
साक्षादिदमिति[4] व्यक्तं वाचा वक्तुं न शक्नुमः ॥४२॥

ब्रह्मणः प्रयत्नलभ्यत्वविरहः

संवत्सरसहस्राणि पक्षिराडिव संपतन् ।
नैवान्तं कारणस्यैति यद्यपि स्यान्मनोजवः ॥ ४३ ॥
उपर्युपरि गच्छन्तो [5]विशिक्षन्तस्तथा तथा ।
ज्ञानोद्यमदशायास्ते न व्यक्तिमधिकां गताः ॥ ४४ ॥
तत्र सर्वाणि तत्त्वानि निषीदन्ति परात्मनि ।

1 शिवः शिवंकरतया प्रोक्तः पाशुपतस्थितैः D.
2 अनेकजन्मसंसिद्धैः All MSS.
3 त्रैगुण्योपरमो यत्तत् B C J.
4 अति A B C E F.
5 विशिङ्क्षन्तः A B C E F.

भावाभावावुभौ प्रोतौ ज्ञानसूत्रमयात्मना ॥ ४५ ॥

ब्रह्मण: त्रिविधपरिच्छेदशून्यत्वम्

[1]सर्वप्रत्यक्षदर्शित्वात् सर्वात्मा तत् परं पदम् ।
अतीतानागते काले मध्यतः प्रतिसंहृते[2] ॥ ४६ ॥
वर्तमानं न तद् ब्रह्म नातीतं नैव भावि तत् ।
अग्रतः पृष्ठतो नैव नोर्ध्वतः[3] पार्श्वयोर्द्वयोः ॥ ४७ ॥
न कल्माषं न विकलं न कृष्णं न च पिङ्गलम् ।
न [4]सारङ्गं पिशङ्गं न कपिलं नारुणं न च ॥ ४८ ॥
[5]न बभ्रु नकुलं नैव न श्यामं न च रोहितम् ।
न दीर्घं नैव च ह्रस्वं न स्थूलं नैव चाप्यणु ॥ ४९ ॥
न वृत्तं नाप्यपावृत्तं नाश्रितं तदनाश्रितम् ।
नैव भावो न चाभावस्तद्भावार्चितये न च[6] ॥ ५० ॥
न शीतं नापि चैवोष्णं नानुष्णाशीतमप्युत ।
न दुःखं न सुखं नैव निर्दुःखं सुखमव्रणम् ॥ ५१ ॥
न मूलं नापि तन्मध्यं नैवान्तं कस्याचिन्मुने ।
न शेते तन्न चैवास्ते न तिष्ठति न गच्छति ॥ ५२ ॥
सर्वद्वन्द्वविनिर्मुक्तं सर्वोपाधिविवर्जितम् ।
षाड्गुण्यं तत् परं ब्रह्म सर्वकारणकारणम् ॥ ५३ ॥

[1] सर्वप्रत्यवमर्शित्वात् E F.
[2] संहृतम् A B C J.
[3] नोर्ध्वाध: B.
[4] सारङ्गपिशङ्गं A B.
[5] इदं श्लोकद्वयं D पुस्तक एव दृश्यते.
[6] इत्थमेव पाठ: सर्वत्र.

नारदः—

किं तत् षाड्गुण्यमित्युक्तं देवदेव जगत्पते ।
कथं च गुणहीनं तत् षाड्गुण्यं परिगीयते ॥ ५४ ॥

ब्रह्मणः षाड्गुण्यप्रपञ्चनम्

अहिर्बुध्न्यः—

अप्राकृतगुणस्पर्शो निर्गुणं परिगीयते ।
शृणु नारद षाड्गुण्यं कथ्यमानं मयानघ ॥ ५५ ॥

ज्ञानस्वरूपनिरूपणम्

अजडं स्वात्मसंबोधि नित्यं सर्वावगाहनम् ।
ज्ञानं नाम गुणं प्राहुः प्रथमं गुणचिन्तकाः ॥ ५६ ॥

ब्रह्मणो ज्ञानस्वरूपत्वं ज्ञानगुणकत्वं च

स्वरूपं ब्रह्मणस्तच्च गुणश्च[1] परिगीयते ।

शक्तिस्वरूपनिरूपणम्

जगत्प्रकृतिभावो यः सा शक्तिः परिकीर्तिता ॥ ५७ ॥

ऐश्वर्यस्वरूपनिरूपणम्

कर्तृत्वं नाम यत् तस्य स्वातन्त्र्यपरिबृंहितम् ।
ऐश्वर्यं नाम तत् प्रोक्तं गुणतत्त्वार्थचिन्तकैः ॥ ५८ ॥

बलस्वरूपनिरूपणम्

श्रमहानिस्तु या तस्य सततं कुर्वतो जगत् ।

[1] गुणं च A B C D E F.

बलं नाम गुणस्तस्य कथितो [1]गुणचिन्तकैः ॥ ५९ ॥

वीर्यस्वरूपनिरूपणम्

तस्योपादानभावेऽपि विकारविरहो हि यः ।
वीर्यं नाम गुणः सोऽयमच्युतत्वापराह्वयम् ॥ ६० ॥

तेजःस्वरूपनिरूपणम्

सहकार्यनपेक्षा या तत् तेजः समुदाहृतम् ।

शक्त्यादिगुणपञ्चकस्य ज्ञानगुणप्रकारत्वम्

एते शक्त्यादयः पञ्च गुणा ज्ञानस्य कीर्तिताः ॥ ६१ ॥
ज्ञानमेव परं रूपं ब्रह्मणः परमात्मनः ।
षाड्गुण्यं तत् परं ब्रह्म स्वशक्तिपरिबृंहितम् ।
बहु स्यामिति संकल्पं भजते तत् सुदर्शनम् ॥ ६२ ॥

इति श्रीपाञ्चरात्रे तन्त्ररहस्ये अहिर्बुध्न्यसंहितायां षाड्गुण्यब्रह्मविवेको नाम द्वितीयोऽध्यायः

आदितः श्लोकाः १३६

[1] गुणसत्तमैः A B C E F.

## वैश्वरूप्यसंक्षेपो नाम तृतीयोऽध्यायः

**नारदः—**

**षाड्गुण्यं तत् कथं ब्रह्म स्वशक्तिपरिबृंहितम् ।**
**तस्य शक्तिश्च का नाम यया बृंहितमुच्यते ॥ १ ॥**

सर्ववस्तूनां शक्तिरपृथक्सिद्धविशेषणम्

**अहिर्बुध्न्यः—**

**शक्तयः [1]सर्वभावानामचिन्त्या अपृथक्स्थिताः ।**
**स्वरूपे नैव दृश्यन्ते दृश्यन्ते कार्यतस्तु ताः ॥ २ ॥**
**सूक्ष्मावस्था हि सा तेषां सर्वभावानुगामिनी ।**
**[2]इदंतया विधातुं सा न निषेद्धुं च शक्यते ॥ ३ ॥**

शक्तीनामपर्यनुयोज्यत्वम्

**सर्वैरननुयोज्या हि शक्तयो भावगोचराः ।**

परब्रह्मणोऽपि शक्तिरपृथक्सिद्धविशेषणम्

**एवं भगवतस्तस्य परस्य ब्रह्मणो मुने ॥ ४ ॥**
**सर्वभावानुगा शक्तिर्ज्योत्स्नेव हिमदीधितेः ।**

[1] सन्ति भावानाम् B D E F.

[2] इयत्तया A B C.

भावाभावानुगा तस्य सर्वकार्यकरी विभोः ॥ ५ ॥
स्वातन्त्र्यरूपा सा विष्णोः प्रस्फुरत्ता जगन्मयी ।
उदितानुदिताकारा निमेषोन्मेषरूपिणी ॥ ६ ॥

भगवच्छक्तेरानन्दादिशब्दाभिधेयत्वम्

निरपेक्षतयानन्दा स्वतन्त्रा नित्यपूरणात् ।
स्वात्मभित्तिसमुन्मीलत्परावरजगत्स्थितिः[1] ॥ ७ ॥
नित्या कालापरिच्छेदात् पूर्णाकाराावियोगतः ।
व्यापिनी देशविभ्रंशाद्रिक्ता पूर्णा च सर्वदा ॥ ८ ॥
[2]जगत्तया लक्ष्यमाणा सा लक्ष्मीरिति गीयते ।
श्रयन्ती वैष्णवं भावं सा श्रीरिति निगद्यते ॥ ९ ॥
अव्यक्तकालपुंभावात्[3] सा पद्मा पद्ममालिनी ।
कामदानाच्च कमला पर्याप्तसुखयोगतः ॥ १० ॥
विष्णोः सामर्थ्यरूपत्वाद् विष्णुशक्तिः प्रगीयते ।
पालयन्ती हरेर्भावं विष्णुपत्नी प्रकीर्तिता ॥ ११ ॥
जगदाकारसंकोचात् स्मृता [4]कुण्डलिनी बुधैः ।
अनाहता बुधैः प्रोक्ता मनोवागाद्यनाहतेः ॥ १२ ॥
परमानन्दसंबोधा[5] मन्त्रसूक्ष्मतयापि च ।

[1] परात्परजगत्स्थितिः A B C E F.
[2] जगत्ता वक्ष्यमाणा सा लक्ष्मीरिति निगीर्यते A; जगत्तया वक्ष्यमाणा B C E F.
[3] पुंभावा C.
[4] कुड्मलिनीत्यपि B.
[5] संबोधात् E F J.

[1]शुद्धसत्त्वाश्रयाद् गौरी ह्यदितिश्चाविशेषणात् ॥ १३ ॥
सर्वपुण्यकरीभावान्महीयस्यपि सा मही ।
तथानाहतशीर्ष्णी चानाहतोऽभ्युदयो यतः ॥ १४ ॥
प्राणयन्ती[2] स्वसंवित्त्या जगत्प्राणा इतीर्यते ।
[3]पराहतासुरूपत्वान्मन्त्रमाता प्रकीर्तिता ॥ १५ ॥
त्रायन्ती गायतः सर्वान् गायत्त्रीत्यभिधीयते ।
प्रकुर्वती जगत् स्वेन प्रकृतिः परिगीयते ॥ १६ ॥
मिमीते च तता चेति सा माता परिकीर्तिता ।
सर्वेषामविपर्यासाच्छिवंकरतया शिवा ॥ १७ ॥
तरुणी काम्यमानत्वात् तारा [4]संसारतारणात् ।
अविपर्यासरूपत्वात् सत्या सत्यद्वयान्वयात् ॥ १८ ॥
शान्ताशेषविकारत्वाच्छान्ता सा चिन्त्यते बुधैः ।
मोहानपनयन्ती सा मोहिनी मोहनादपि ॥ १९ ॥
इडा हविरधिष्ठानादिष्यमाणतयापि च ।
रमयन्तीति सा रन्ती रतिश्च परिकीर्तिता ॥ २० ॥
[5]विश्रुतिर्विश्रुता सद्भिः [6]स्मारयन्ती सरस्वती ।
अनवच्छिन्नभासत्वान्महाभासाभिधीयते ॥ २१ ॥
नामधेयैरियं तैस्तैर्नानाशास्त्रसमाश्रयैः ।

[1] शुद्धसत्त्वाश्रया A B C E F.
[2] प्राणयन्त्या E F.
[3] पराहतोस्व D; पराहतोघ A B C E F.
[4] साधारतारणात् D.
[5] विश्रुतेः E F J.
[6] सारयन्ती E J; साधयन्ती F.

[1]अन्वर्थैर्दर्शिताशेषविभवा[2] वैष्णवी परा ॥ २२ ॥
उदधेरिव च स्थैर्यं महत्त्वेव विहायसः ।
प्रभेव दिवसेशस्य ज्योत्स्नेव हिमदीधितेः ॥ २३ ॥
विष्णोः सर्वाङ्गसंपूर्णा[3] भावाभावानुगामिनी ।
शक्तिर्नारायणी दिव्या सर्वसिद्धान्तसंमता ॥ २४ ॥

शक्तिमतः शक्तिर्भिन्ना

देवाच्छक्तिमतो भिन्ना [4]ब्रह्मणः परमेष्ठिनः ।
एष चैषा च शास्त्रेषु धर्मधर्मिस्वभावतः ॥ २५ ॥
भवद्भावस्वरूपेण तत्त्वमेकमिवोदितौ ।
स्वातन्त्र्येण स्वरूपेण विष्णुपत्नीयमद्भुता ॥ २६ ॥
यतो जगद्भविष्यन्ती क्वचिदुन्मेषमृच्छति ।

शक्तेः द्वैविध्यम्; भूतिशक्तेः त्रैविध्यम्

सहस्रायुतकोट्योघकोटिकोट्यर्बुदांशकः ॥ २७ ॥
लक्ष्मीमयः समुन्मेषः स द्विधा व्यवतिष्ठते ।
क्रियाभूतिविभेदेन भूतिः सा च त्रिधा मता ॥ २८ ॥
[5]अव्यक्तकालपुंभावात् तेषां रूपं प्रवक्ष्यते ।

1 अनल्पैः D.
2 विभावा D E J.
3 संभूता D.
4 ब्रह्मणा परमेष्ठिना E.
5 अव्यक्तकालपुंभावम् D.

क्रियाशक्तेः भूतिशक्तिप्रवर्तकत्वम्

क्रियाख्यो [1]योऽयमुन्मेषः स भूतिपरिवर्तकः ॥ २९ ॥
लक्ष्मीमयः प्राणरूपो विष्णोः संकल्प उच्यते ।
स्वातन्त्र्यमूल इच्छात्मा प्रेक्षारूपः क्रियाफलः ॥ ३० ॥
उन्मेषो यः सुसंकल्पः सर्वत्राव्याहतः कृतौ ।
अव्यक्तकालपुंरूपां चेतनाचेतनात्मिकाम् ॥ ३१ ॥
भूतिं लक्ष्मीमयीं विष्णोः शक्तिं संभावयत्यसौ ।
अव्यक्तं परिणामेन कालं कलनकर्मणा ॥ ३२ ॥
पुरुषं [2]भोजनोद्योगैः सर्गे संयोजयत्ययम् ।
सामर्थ्यत्रितयादानाद् वियोजयति संचरे ॥ ३३ ॥
विषमे परिणामे यत् सामर्थ्यं त्रिगुणात्मनः ।
सृष्टौ दधाति तत् तस्मिन् विपर्यासं च संहृतौ ॥ ३४ ॥
अव्यक्तपुरुषोद्योगसंयोजनविधिक्रमम् ।
काले दधाति सर्गादौ विपर्यासं च संहृतौ ॥ ३५ ॥
पुंसश्च [3]बुद्धिसामर्थ्यमसामर्थ्यं च भोजने ।
संकल्पः कुरुते विष्णोः सर्गप्रतिविसर्गयोः ॥ ३६ ॥
त्रीनेतान् संहतान् सृष्टौ विहतान् प्रतिसंचरे ।
दधाति स्वेन रूपेण गुणो[4] मणिगणानिव ॥ ३७ ॥
स्थितौ च कुरुते रक्षां तेषां कार्यसमीक्षणात् ।

[1] योऽन्य उन्मेषः D.
[2] भोजनोद्वेगैः सर्गः D.
[3] भुक्ति B D E J.
[4] गुणे E F.

सर्वत्राव्याहतत्वं यत् तत् सुदर्शनलक्षणम् ॥ ३८ ॥

क्रियाशक्तेः वैविध्येन सर्वभावानुयायित्वम्

सोऽयं सुदर्शनं नाम [1]संकल्पः स्पन्दनात्मकः[2] ।
विभज्य बहुधा रूपं भावे भावेऽवतिष्ठते ॥ ३९ ॥

वैविध्यप्रपञ्चनम्

[3]व्याप्तिं सुदर्शनस्येमां प्रोच्यमानां मया शृणु ।
यज्ज्ञात्वा पुरुषो लोके कृतकृत्यत्वमश्नुते ॥ ४० ॥
षाड्गुण्यं यत् परं ब्रह्म या गतिर्योगिनां परा ।
नारायणः स विश्वात्मा भावाभावमिदं जगत् ॥ ४१ ॥
निष्कलेन स्वरूपेण [4]यदा प्राप्य नियच्छति ।
[5]सदा सत्ता हि या तस्य जगन्निर्माणशक्तिका ॥ ४२ ॥
सर्वभावात्मिका लक्ष्मीरहंता परमात्मनः ।
तद्धर्मधर्मिणी देवी भूत्वा सर्वमिदं जगत् ॥ ४३ ॥
निष्कलेन स्वरूपेण सापि [6]तद्वन्नियच्छति ।
तदीयैका [7]कला भूतिर्जगद्भवनसंज्ञिता[8] ॥ ४४ ॥
व्यापारो वास्तवस्तत्र जगन्नियमनात्मकः ।
निष्कला या क्रियाशक्तिर्लक्ष्म्याः सौदर्शनी कला ॥ ४५ ॥

1 संकल्पास्पन्दनात्मकः A B C.
2 स्पन्दनात्मनः E F.
3 प्राप्तिं A B C.
4 यदाज्ञाप्य D.
5 सदसत्ता हि A B C J.
6 तत्वं A B C E F.
7 काल A B C E F J.
8 संज्ञिका A B C E F J.

भजेते तौ यदा रूपं मनोनयननन्दनम् ।
रक्षायै जगतामीशौ चक्रपद्मे तदा क्रिया ॥ ४६ ॥
रक्षोपकरणं देवौ तौ यावद्यावदिच्छतः ।
शङ्खशार्ङ्गादिरूपेण तावत् तावत् सुदर्शनम् ॥ ४७ ॥
[1]प्रकाशाह्लादपातैर्यद्विश्वस्योपचिकीर्षतः ।
सूर्येन्दुवह्निरूपेण तदा चक्रं सुदर्शनम् ॥ ४८ ॥
देवदैत्यादिकान् भावान् यदा तौ भजतः स्वयम् ।
तत्तदस्त्रमयी देवी तदा सौदर्शनी क्रिया ॥ ४९ ॥
यदा विश्वोपकाराय शास्त्रं नानाफलाश्रयम् ।
कुरुतः सा क्रिया तत्र शासनं हृदयस्थितम् ॥ ५० ॥
यदा तौ भवतः शास्त्रं विश्वोपकृतये विभू[2] ।
तदा सा[3] शास्त्रतात्पर्यं क्रिया सौदर्शनी कला ॥५१॥
शास्त्राधिकारिणो[4] नाम यदा [5]तौ पितरौ ध्रुवौ ।
अधिकारस्तदा तेषां क्रियाशक्तिः सुदर्शनम् ॥ ५२ ॥
यदा शास्त्रार्थभूतौ तौ फलसाधनसंश्रयात्[6] ।
फलप्रसवसामर्थ्यं[7] क्रिया तत्र सुदर्शनम् ॥ ५३ ॥
पुरुषार्थास्तु चत्वारो यदा तौ भवतः[8] स्वयम् ।
आत्मतर्पणसामर्थ्यं तदा चक्रं सुदर्शनम् ॥ ५४ ॥

[1] प्रतापा D.
[2] विभो A; विभो: B; विभू: D.
[3] तु B.
[4] कारिणौ A B C E F.
[5] तावितरौ A B C.
[6] संश्रयान् D.
[7] सामर्थ्या A B C.
[8] भजत: D.

यदा मन्त्रमयीं रक्षां भजतो जगतां हिते ।
मन्त्रयन्त्रमयी देवी क्रियाशक्तिस्तदा त्वियम् ॥५५॥
वैश्वरूप्यस्य संक्षेपः क्रियाशक्तेः प्रदर्शितः ।
सुदर्शनात्मिकायास्ते किं भूयः श्रोतुमिच्छसि ॥५६॥

इति श्रीपाञ्चरात्रे तन्त्ररहस्ये अहिर्बुध्न्यसंहितायां क्रियाशक्तेर्वैश्वरूप्य-
प्रदर्शनं नाम तृतीयोऽध्यायः

आदितः श्लोकाः १९२

## प्रतिसंचरवर्णनं नाम चतुर्थोऽध्यायः

नारदः—

भगवन् देवदेवेश सर्वज्ञ वृषकेतन ।
किं तत् कारणमित्युक्तं सृष्टये [1]यत् प्रवर्तते ॥ १ ॥
सुदर्शनेन यद् व्याप्तं रूपतः कार्यतोऽर्थतः ।
विस्तरेण ममाचक्ष्व जगतः कारणं परम् ॥ २ ॥

प्राकृतप्रलयवर्णनम्

अहिर्बुध्न्यः—

प्रोच्यमानं मया तत्त्वं कारणस्यावधारय ।
तत्र तावन्निबोधेमं प्राकृतं प्रतिसंचरम् ॥ ३ ॥
येन कालेन सा विद्या प्रकृतिर्मूलसंज्ञिता[2] ।
सस्यादिसृष्टये धेनुरभवन्मेघरूपिणी ॥ ४ ॥
कालेन तावता सा तु चिकीर्ष्ये प्रतिसंचरे ।
अधेनुर्नीरसा शुष्का भवत्यव्यक्तसंज्ञिता ॥ ५ ॥

नारदः—

[3]कालेन कियता सर्गः सा धेनुः कामरूपिणी ।

[1] तत् D. [2] स्थूलसंज्ञिता A B C E F J.
[3] कालेन तावता सा तु चिकीर्षे प्रतिसंचरे J; अयं श्लोकः D पुस्तके न दृश्यते.

अधेनुः सा भवेद् देवी यावता प्रतिसंचरे ॥ ६ ॥

प्रतिसंचरकालपरिमाणम्

अहिर्बुध्न्यः—

अष्टादश निमेषास्तु काष्ठा त्रिंशत्तु ताः कला ।
तास्तु त्रिंशत् क्षणस्ते तु मुहूर्तो द्वादश स्मृतः ॥ ७ ॥
ते तु पञ्चदशाहः स्यात् तावती रात्रिरिष्यते ।
ते[1] पञ्चदश पक्षः स्यात् पक्षौ द्वौ मास [2]इष्यते ॥ ८ ॥
संवत्सरो मानुषस्तु तैर्द्वादशभिरिष्यते ।
काम्यः षोडशभिस्तैस्तु काम्याब्दानां [3]तथा मुने ॥९॥

. . . . . . . . . . . . .

विद्या धेनुरधेनुश्च भवेत् कालेन तावता ।
अधेन्वां तु ततस्तस्यां चिकीर्ष्ये[4] प्रतिसंचरे ॥ १० ॥

सर्वस्य पृथिव्यां लयः

नीरसं शुष्कमेवासीज्जगदेतच्चराचरम् ।
महावातेन संशुष्कं संदग्धं [5]च महाग्निना ॥ ११ ॥
आ शैलादा तृणाच्चैव यदा भूमौ समुन्नतम् ।
मानवेषु लयं यान्ति [6]तदा मानवमानवाः ॥ १२ ॥

1 सर्वेषु पुस्तकेष्वयमेव पाठः.
2 उच्यते E F J.
3 तु यन्मुने D.
4 चिकीर्षे J.
5 तन्महाग्निना E J; तन्महात्मना F.
6 तदेत्यादि पादद्वयं B C पुस्तकयोर्न दृश्यते.

मनुष्वेव लयं यान्ति मानवास्ते चतुःशतम् ।
एवं चेतनवर्गे तु मनुष्वेव लयं गते ॥ १३ ॥
मिथुनान्येव चत्वारि मनूनां केवलानि तु ।
कूर्मपृष्ठसमानायां भुवि तिष्ठन्ति वै मुने ॥ १४ ॥

पृथिव्या अप्सु लयः

[1]नारायणस्य संकल्पादव्याहतसुदर्शनात् ।
भूमेर्गन्धात्मकं सारं ग्रसन्त्यापस्तदा मुने ॥ १५ ॥
आत्तगन्धा यदा भूमिरम्भसा [2]कारणात्मना ।
[3]अतिभूय तदा पृथ्वीं मनवोऽप्सु व्यवस्थिताः ॥ १६ ॥
[4]भूमिस्त्वात्तरसा शश्वज्जहाति व्यक्तिनामनी ।
[5]प्रभवन्त्याप एतर्हि जगदेतच्चराचरम् ॥ १७ ॥

अपां तेजसि लयः

संकल्पादेव पूर्वस्मात् सुदर्शनमयाद्धरेः ।
अपामपि रसं सारं ज्योतिर्ग्रसति कारणम् ॥ १८ ॥
अतिभूय तदापस्तु मनवो ज्योतिषि स्थिताः ।
आपश्चात्तरसाः शश्वज्जहति व्यक्तिनामनी ॥ १९ ॥
देदीप्यमानमेतर्हि ज्योतिरेव जगन्मुने ।

[1] J omits verse 15. [2] करणात्मना A.
[3] अतिक्रम्य J. [4] आत्तगन्धा च सा भूमिर्जहाति व्यक्तिनामनी D.
[5] संभवन्त्यप एतर्हि A B C; संभवन्त्याप एतर्हि E F; संभवन्त्याप एताभिः J.

तेजसो वायौ लयः

संकल्पचोदितो विष्णोर्वायुः कारणसंज्ञितः ॥ २० ॥
ज्योतिषोऽप्यान्तरं रूपं सारं ग्रसति तद् ध्रुवम् ।
संकल्पचोदिता[1] विष्णोर्मनवोऽपि तदा मुने ॥ २१ ॥
अतिभूयाखिलं ज्योतिर्वायुमेव श्रयन्ति ते ।
आत्तरूपं तदा ज्योतिर्जहाति व्यक्तिनामनी ॥ २२ ॥
वायुर्दोधूयमानस्तु जगदेतच्चराचरम् ।

वायोराकाशे लयः

[2]ततः कारणमाकाशं विष्णोः संकल्पचोदितम् ॥ २३ ॥
सारं ग्रसति संस्पर्शं कारणं वै नभस्वतः ।
सुदर्शनेरिता विष्णोर्मनवोऽपि महामुने ॥ २४ ॥
नभस्येवावतिष्ठन्ते व्यतिभूय समीरणम् ।
आत्तस्पर्शस्तदा वायुर्जहाति व्यक्तिनामनी ॥ २५ ॥
भृशं शब्दायमानं तद्बियद्विश्वं चराचरम् ।

आकाशस्याहंकारे लयः

क्रियाशक्तीरितो विष्णोरहंकारोऽभिमानवान् ॥ २६ ॥
सारं ग्रसति शब्दाख्यं कारणं नभसो मुने ।
तयैव प्रेरिता विष्णोरतिभूय वियत्पदम् ॥ २७ ॥

[1] चोदितो A B C. [2] J omits this line.

अहंकारेऽवतिष्ठन्ते मनवो भगवन्मयाः ।
आत्तशब्दं वियत् तच्च जहाति व्यक्तिनामनी ॥ २८ ॥
अहमित्येव तद्विश्वमहंकारात्मकं मुने ।

अहंकारस्य बुद्धौ लयः

अभिमानात्मकं [1]सारमहंकारस्य कारणम् ॥ २९ ॥
सुदर्शनेरिता विष्णोर्बुद्धिर्ग्रसति वै मुने ।
सुदर्शनेरिता विष्णोरतिभूय त्वहंकृतिम् ॥ ३० ॥
बुद्धावेवावतिष्ठन्ते मनवोऽष्टौ महामुने ।
आत्ताभिमानोऽहंकारो जहाति व्यक्तिनामनी ॥ ३१ ॥
बुद्धिरेवेदमखिलं व्यवसायवती मुने ।

बुद्धेस्तमसि लयः

सारमध्यवसायाख्यं बुद्धेः कारणमव्ययम् ॥ ३२ ॥
सुदर्शनेरितं विष्णोस्तमो ग्रसति कारणम् ।
सुदर्शनेरिता विष्णोर्मनवोऽपि महामुने ॥ ३३ ॥
अतिभूय तदा बुद्धिं तमस्येव श्रिताः स्थितिम् ।
आसीदिदं तमोभूतमप्रज्ञातमलक्षणम् ॥ ३४ ॥
अप्रतर्क्यमविज्ञेयं संस्तब्धं गुरु मोहनम् ।

इन्द्रियाणां भूतैः सह तत्तत्कारणेषु लयः

घ्राणं जिह्वा च चक्षुश्च त्वक् च श्रोत्रं च पञ्चमम् ॥३५॥

1 सारमभिमानस्य A B C D.

पायूपस्थं तथा पादौ हस्तौ वाक् चैव पञ्चमी[1] ।
द्वयोः पञ्चकयोर्द्वन्द्वं घ्राणपाय्वादिकं क्रमात् ॥ ३६ ॥
महीजलादिभिर्हेतौ लीयमानैः[2] स्वके स्वके ।
समं विलयमायाति सह [3]घ्राणादिवृत्तिभिः ॥ ३७ ॥
मनोऽहंकार इत्येतत् सवृत्ति करणद्वयम् ।
अहंकारे लयं याति बुद्धौ बोधनमिन्द्रियम् ॥ ३८ ॥
तम एवेदमखिलमिदानीमवतिष्ठते ।

तमसो रजसि लयः

स्थितिशक्तिर्हि या [4]चास्य तमसो गुरुतामयी ॥ ३९ ॥
रजो ग्रसति तां शश्वदीश्वरेच्छाप्रचोदितम् ।
इच्छया प्रेरिता विष्णोर्मनवोऽपि महामुने ॥ ४० ॥
रजस्येवावतिष्ठन्ते व्यतिभूय तमोगतिम् ।
आत्तसारं तमस्तत्तु जहाति व्यक्तिनामनी ॥ ४१ ॥
चलक्रियात्मकं दुःखं रज एव जगत् तदा ।

रजसः सत्त्वे लयः

या सा स्पन्दमयी शक्तिश्चलत्तात्मा[5] रजोमयी ॥ ४२ ॥
तां वै सुदर्शनादिष्टं सत्त्वं ग्रसति कारणम् ।
रजःस्था मनवश्चैव विष्णुसंकल्पचोदिताः ॥ ४३ ॥

[1] पञ्चमम् A B C E F J. [2] लीयमाने E F J.
[3] प्राणादि A B C D. [4] तस्य D.
[5] चलितात्मा E, चलतात्मा A B C D F G J.

अतिभूय रजः सत्त्वं विशन्ति विमलं मुने ।
आत्तसारं रजस्तत्तु जहाति व्यक्तिनामनी ॥ ४४ ॥
लघु प्रकाशकं सत्त्वमिदमासीच्चराचरम् ।

सत्त्वस्य काले लयः

कालो नाम गुणो विष्णोः सुदर्शनसमीरितः ॥ ४५ ॥
सारं [1]प्रज्ञामयं सत्त्वादादत्ते ज्ञानकारणम् ।
अतिभूय तदा सत्त्वं मनवः कालसंश्रिताः ॥ ४६ ॥
काल एव जगत् कृत्स्नमिदमासीत् तदा मुने ।
आत्तसारं च तत् सत्त्वं जहाति व्यक्तिनामनी ॥४७॥

कालस्य नियतौ लयः

काली कालगता शक्तिर्या साशेषप्रकालिनी ।
नियतिर्नाम तां तत्त्वं ग्रसतीश्वरचोदिता ॥ ४८ ॥
[2]सुदर्शनेरितास्ते च मनवोऽष्टौ महामुने ।
अतीत्य कालतत्त्वं तां नियतिं प्रतिपेदिरे ॥ ४९ ॥
आत्तसारस्तदा कालो जहाति व्यक्तिनामनी ।
नियतिर्नाम सा विश्वमिदमासीच्चराचरम् ॥ ५० ॥

नियतेः शक्तौ लयः

महाविद्यामयी शक्तिर्नियतेर्या महामुने ।
शक्तिर्नाम तदा तां तु ग्रसतीश्वरचोदिता ॥ ५१ ॥

1 प्रख्यामयमिति सर्वत्र.
2 इत आरभ्य श्लोकत्रयं D J पुस्तकव्यतिरिक्तेषु नास्ति.

मनवोऽपीश्वरादिष्टा नियतिं तामतीत्य वै ।
शक्तिं मायामयीं विष्णोर्विशन्ति विपुलात्मिकाम् ॥
नियतिश्चात्तसारा सा जहाति व्यक्तिनामनी ।
अथ शक्तिरिदं विश्वं जगदासीच्चराचरम् ॥ ५३ ॥

शक्तेः कूटस्थपुरुषे लयः

आ चैतन्योन्मिषत्तायाः शक्तेः शक्तिः सनातनी ।
सुदर्शनेरितस्तां तु पुरुषो ग्रसति स्वयम् ॥ ५४ ॥
अतीत्य मनवः शक्तिं तं विशन्तीश्वरेरिताः ।
आत्तसारा तदा शक्तिर्जहाति व्यक्तिनामनी ॥
सर्वात्मा सर्वतःशक्तिः पुरुषः सर्वतोमुखः ।
सर्वज्ञः सर्वगः सर्वः सर्वमावृत्य तिष्ठति ॥ ५६ ॥
[1]मनूनामेष कूटस्थः पुरुषो द्विचतुर्मयः ।
कृत्स्नकर्माधिकारो वै देवदेवस्य वै हरेः ॥ ५७ ॥
त्रयोदशानां भूम्यादिशक्त्यन्तानां महामुने ।
विलीनस्वस्वकार्याणां [2]काम्यवर्षशतस्थितिः ॥ ५८ ॥

कूटस्थपुरुषस्यानिरुद्धे लयः

पुंसस्त्रीणि शतानि स्युस्ततो मनुमयः पुमान् ।
चतुर्धा [3]स्वं विभज्याथ ब्रह्मक्षत्रादिभावतः ॥ ५९ ॥

[1] मरुतामेष A B.
[2] काम्यं वर्षशतं स्थितिम् D; काम्यं वर्षशतस्थिति A B C E F G J.
[3] सं A B C E F J.

स्वे स्वे स्थानेऽनिरुद्धस्य मुखबाह्वादिके मुने ।
[1]प्रलीयते क्षणेनैव तप्तायःपिण्डवारिवत् ॥ ६० ॥
ततोऽसौ भगवानेकः प्रलीनचिदचिन्मयः ।
शतानि दश षट् चाथ[2] वर्षाणामवतिष्ठते ॥ ६१ ॥

अनिरुद्धस्य प्रद्युम्नेऽप्ययः

अवस्थाय ततोऽप्येति प्रद्युम्नमजरं विभुम् ।
निरुध्य सर्वचेष्टाः स्वास्तावत्कालं स तिष्ठति ॥ ६२ ॥

प्रद्युम्नस्य संकर्षणेऽप्ययः

ततः प्रद्युम्नसंज्ञोऽसौ भगवान् पुष्करेक्षणः ।
अप्येति भगवन्तं तं संकर्षणमनामयम् ॥ ६३ ॥
कालं तिष्ठति तावन्तं सर्वदेवमयोऽच्युतः ।
चिदचित्खचितं विश्वं शुद्धाशुद्धमशेषतः ॥ ६४ ॥
तिलकालकवत् [3]स्वस्य देहे ज्ञानमये दधत् ।
उदयास्ताचलावेष देवः संकर्षणो बलः ॥ ६५ ॥
चिदिन्दोरचिदङ्कस्य कलास्ता अनुधावतः ।
अहीनमहरेतद्धि संकर्षणमयं परम् ॥ ६६ ॥
यत्र नानाविधा भावा व्यज्यन्ते स्वस्वयाख्यया[4] ।

संकर्षणस्य वासुदेवेऽप्ययः

शतानि षोडश स्थित्वा वर्षाणामयमच्युतः ॥ ६७ ॥

1 प्रलीयन्ते A B C.
2 चायं B C D.
3 स्वस्तिम् D.
4 ते स्वयाख्यया D J.

अप्येति भगवन्तं तं वासुदेवं सनातनम् ।
नासदासीत् तदानीं हि नो सदासीत् तदा मुने ॥ ६८ ॥
भावाभावौ [1]विलोप्यान्तर्विचित्रविभवोदयौ ।
अनिर्देश्यं परं ब्रह्म वासुदेवोऽवतिष्ठते ॥ ६९ ॥
सा रात्रिस्तत् परं ब्रह्म तदव्यक्तमुदाहृतम् ।
षण्णां युगानि विज्ञानबलादीनामशेषतः ॥ ७० ॥
त्रीणि यस्मिन् प्रलीयन्ते [2]यत् तत् सा रात्रिरुच्यते ।
[3]संकर्षणादिभूम्यन्तमञ्जनं विगतं यतः ॥ ७१ ॥
तदव्यक्तमिति ज्ञेयं समत्वात् सम उच्यते ।
या सा भगवतः शक्तिरहंता सर्वभावगा ॥ ७२ ॥
अपृथक्चारिणी सत्ता महानन्दमयी परा ।
संकर्षणादिभूम्यन्तस्तस्याः कोट्यंश ईरितः ॥ ७३ ॥
सदसच्चिदचिद्रूपैर्यत्र[4] विश्वं प्रकाशते ।
तस्मिन्नुपरते शश्वद्विश्वकोलाहलोद्गमे ॥ ७४ ॥
अलक्ष्या[5] कार्यतः शक्तिर्देवाद्विजहती भिदाम् ।
प्रतिसंचरिकां शक्तिं क्रियां सौदर्शनीं [6]स्वकाम् ॥
संहृत्य बिभ्रती तां तु [7]स्थितिं संकल्परूपिणीम् ।
इन्धनाभावतो ज्वाला [8]वह्निभावं यथा गता ॥ ७६ ॥

1 विलाप्यातः D.
2 यतः सा A B C E F J.
3 J omits 4 lines from here.
4 रूपे यत्र E.
5 अलक्ष्यकार्यतः All MSS. except D.
6 स्विकाम् D.
7 स्थितिसंकल्परूपिणी D.
8 स्वस्य भावम् B C E F J.

ब्रह्मभावं व्रजत्येवं [1]सा शक्तिर्वैष्णवी परा ।
नारायणः परं ब्रह्म शक्तिर्नारायणी च सा ॥ ७७ ॥
[2]व्यापकावतिसंश्लेषादेकं तत्त्वमिव स्थितौ ।
[3]संकर्षणोदयो यावदहः[4] पौरुषमिष्यते ।
तावती पौरुषी रात्रिः संहृताखिलवस्तुका ॥ ७८ ॥

इति श्रीपाञ्चरात्रे तन्त्ररहस्ये अहिर्बुध्न्यसंहितायां प्रतिसंचरवर्णनं नाम चतुर्थोऽध्यायः

आदितः श्लोकाः २७०

1 स्व D.
2 व्यापिका पतिसंश्लेषात् D.
3 संकर्षणादयो A B C F.
4 यावदहम् All MSS.

## शुद्धसृष्टिवर्णनं नाम पञ्चमोऽध्यायः

अहिर्बुध्न्यः—

कार्यकारणवर्गस्य प्रलयोऽयं प्रदर्शितः ।
सुदर्शनमयीं सृष्टिं तस्य [1]वक्ष्यामि ते मुने ॥ १ ॥

प्रलयावस्थब्रह्मस्वरूपम्

प्रसुप्ताखिलकार्यं यत् सर्वतः समतां गतम् ।
[2]नारायणः परं ब्रह्म सर्वावासमनाहतम्[3] ॥ २ ॥
पूर्णस्तिमितषाड्गुण्यमसमीराम्बरोपमम् ।

शक्तिरूपाया लक्ष्म्याः क्वचिदुन्मेषः

तस्य स्तैमित्यरूपा या शक्तिः शून्यत्वरूपिणी ॥ ३ ॥
स्वातन्त्र्यादेव कस्माच्चित् क्वचित् सोन्मेषमृच्छति ।
आत्मभूता हि या शक्तिः परस्य ब्रह्मणो हरेः ॥ ४ ॥
देवी विद्युदिव व्योम्नि क्वचिदुद्द्योतते तु सा ।
शक्तिर्विद्योतमाना सा शक्तिरित्युच्यतेऽम्बरे ॥ ५ ॥

शक्तेर्विविधभावव्यञ्जकत्वम्

व्यनक्ति विविधान् भावान् शुद्धाशुद्धान् [4]समूर्तिकान् ।

[1] वक्ष्याम्यहं B C E F J. [2] नारायणमयं D. नारायणपरं J.
[3] अनागतम् D. [4] स्वभक्तिगान् D; स्वमूर्तिकान् E J. स्वमूर्तिगान् F.

तस्या उन्मेषमृच्छन्त्याः स्वातन्त्र्यं यत् स्वनिर्मितम् ॥
प्रेक्षणात्मा स संकल्पस्तत् सुदर्शनमुच्यते ।
सा क्रिया तद्धरेर्वीर्यं तत् तेजश्च बलं च तत् ॥ ७ ॥
[1]व्यज्यन्ते ये च ते भावाः स्वभित्तिपरिवर्तिताः ।
सा भूतिर्विष्णुशक्तिः सा शक्तेः कोट्यंशकल्पिता ॥
बहुभिर्द्वन्द्वभावैः सा शक्तिर्भूतमयी[2] स्थिता ।
शुद्धाशुद्धविभागेन चेत्यचेतनरूपतः ॥ ९ ॥
[3]काल्यकालविभेदेन व्यक्ताव्यक्तविभागतः ।
व्यङ्ग्यव्यञ्जनरूपेण[4] वाच्यवाचकभेदतः ॥ १० ॥
भोग्यभोक्तृविभेदेन देहदेहिविभेदतः ।
अन्यैश्चैवंप्रकारैः सा द्वन्द्वभेदैर्विभज्यते ॥ ११ ॥
एवं प्रकारभेदेन[5] या शक्तिर्हेतुतां गता ।
तां विजानीहि देवर्षे दिव्यां सौदर्शनीं कलाम् ॥१२॥
समीर्यते यथा वह्निर्मेघो वापि समीरणात् ।
तथा सुदर्शनेनैव विभूतिः प्रेर्यते कला ॥ १३ ॥
आनुलोम्येन सर्गे तु प्रातिलोम्येन संहृतौ ।
यथा संप्रेर्यमाणा सा सुदर्शननभस्वता ॥ १४ ॥

[1] व्यज्यते A B C E F.
[2] भूतमयैः A B C E F J.
[3] कालाकाल्य A B C J.
[4] व्यङ्ग्यव्यञ्जनभावेन A B C E F J.
[5] भेदस्य A B C E F J.

दधाति विविधान् भावांस्तथा[1] मे [2]गदतः शृणु ।

शुद्धसृष्टिप्रपञ्चनम्

तत्र शुद्धमयं सर्गं विभूतेः प्रथमं शृणु ॥ १५ ॥
यत् तत् षाड्गुण्यमित्युक्तं ज्ञानैश्वर्यबलादिकम् ।
गुणैस्तस्य त्रिभिः शुद्धा सृष्टिर्भूतेः[3] प्रवर्तते ॥ १६ ॥

गुणयुग्मत्रयात् व्यूहत्रयाविर्भावः

तत्र ज्ञानबलद्वन्द्वाद्रूपं सांकर्षणं हरेः ।
ऐश्वर्यवीर्यसंभेदाद्रूपं प्राद्युम्नमुच्यते ॥ १७ ॥
शक्तितेजःसमुत्कर्षादानिरुद्धी तनुर्हरेः ।
एते शक्तिमया व्यूहा गुणोन्मेषस्वलक्षणाः[4] ॥ १८ ॥

व्यूहत्रयेऽपि षाड्गुण्यानुवृत्तिः

षाड्गुण्यविग्रहा देवाः पुरुषाः पुष्करेक्षणाः ।
तत्र तत्रावशिष्टं यद् गुणानां द्वियुगं मुने ॥ १९ ॥
अनुवृत्तिं भजत्येव तत्र तत्र [5]यथायथम् ।

त्रिधा चातुरात्म्यस्थितिः

व्याप्तिमात्रं गुणोन्मेषो मूर्तीकार[6] इति त्रिधा[7] ॥
चातुरात्म्यस्थितिर्विष्णोर्गुणव्यतिकरोद्भवा ।

[1] तदा E F.
[2] वदतः A B C E F J.
[3] सृष्टिभूते A B C F; सृष्टिभूतैः E.
[4] सलक्षणः A B C E F.
[5] यथातथम् E; यथा तथा F J.
[6] मूर्तिकार इति All MSS.
[7] क्रिया A B C D.

संकर्षणस्य कृत्यम्

तत्र ज्ञानमयत्वेन देवः संकर्षणो [1]बली ॥ २१ ॥
व्यनक्त्यैकान्तिकं [2]मार्गं भगवत्प्राप्तिसाधनम् ।

प्रद्युम्नस्य कृत्यम्

वीर्यैश्वर्यमयो देवः प्रद्युम्नः [3]पुरुषोत्तमः ॥ २२ ॥
स्थितः शास्त्रार्थभावेन भगवत्प्राप्तिवर्त्मना ।

अनिरुद्धस्य कृत्यम्

शास्त्रार्थस्य फलं यत् तद् भगवत्प्राप्तिलक्षणम् ॥२३॥
प्रापयत्यनिरुद्धः [4]सन् साधकान् पुरुषोत्तमः ।
शास्त्रशास्त्रार्थतत्साध्यफलनिर्वाहका इमे ॥ २४ ॥
पुरुषाः पुण्डरीकाक्षा व्यूहाः शक्तिमया हरेः ।

परवासुदेवेन सह व्यूहस्य चातुरात्म्यम्

भगवान् वासुदेवश्च व्यूहाश्चैते त्रयो मुने ॥ २५ ॥
चातुरात्म्यमिदं विद्धि व्यक्ताव्यक्तस्वलक्षणम् ।

गुणोन्मेषस्वरूपप्रदर्शनम्

गुणाः शक्तिमया ये[5] ते ज्ञानैश्वर्यबलादयः ॥ २६ ॥
तेषां युगपदुन्मेषः स्तैमित्यविरहात्मकः ।
संकल्पकल्पितो विष्णोर्यः[6] स तद्व्यक्तिलक्षणः ॥

[1] बलः D.
[2] रूपम् J.
[3] पुष्करेक्षणः D.
[4] तत् A B C E F.
[5] एते B C J.
[6] र्या स्थितिर्व्यक्तिलक्षणा A B C E F J.

भगवान् वासुदेवः स परमा प्रकृतिश्च सा ।
शक्तिर्या [1]व्यापिनो विष्णोः सा जगत्प्रकृतिः परा ॥
शक्तेः शक्तिमतो [2]भेदाद् वासुदेव इतीर्यते ।

सिसृक्षोर्वासुदेवात् संकर्षणाविर्भावः

सर्वशक्तिमयो देवो वासुदेवः सिसृक्षया ॥ २९ ॥
विभजत्यात्मनात्मानं यः स संकर्षणः स्मृतः ।

तत्र दृष्टान्तः

भानावुदयशैलस्थे प्रभा यद्वद्विजृम्भते ॥ ३० ॥
उदयस्थे तथा[3] देवे प्रभा संकर्षणात्मिका ।

तस्य षोडशशतवर्षप्रतीक्षणम्

अव्यापृता[4] शतान्येषा शक्तिस्तिष्ठति षोडश ॥३१॥
संकर्षणात्मिका साक्षाद् विज्ञानबलवारिधिः[5] ।
अनन्तो भगवान् विष्णुः शक्तिमान् पुरुषोत्तमः॥३२॥
पूर्णस्तिमितषाड्गुण्यो निस्तरङ्गार्णवोपमः ।
षण्णां युगपदुन्मेषाद् गुणानां स्वप्रचोदितात् ॥ ३३ ॥
अनन्त एव भगवान् वासुदेवः सनातनः ।
तत्र ज्ञानबलोन्मेषात् स्वसंकल्पप्रचोदितात् ॥ ३४ ॥
अनन्त एव भगवान् देवः संकर्षणोऽच्युतः ।

1 व्यापिनी A B C E F J. 2 देवाद् A B C E F. देवः J.
3 तदा A B C E F. 4 अव्यावृता D. 5 वारिधेः B C.

प्रद्युम्नाविर्भावः

स्थित्वा षोडश वर्षाणि देवः शक्तिमयोऽच्युतः ॥३५॥
[1]अनन्त एव भगवान् प्रद्युम्नः पुरुषोत्तमः ।
अंशांशेनोदिता शक्तिः प्राद्युम्नी भगवत्प्रभा ॥३६॥
अव्यापृता शतान्येषा तूष्णीं तिष्ठति षोडश ।

अनिरुद्धाविर्भावः

ततः शक्तिमयो देवः प्रद्युम्नः पुरुषोत्तमः ॥ ३७ ॥
शतानि षोडश स्थित्वा स्वसंकल्पप्रचोदितः ।
अनन्त एव भगवाननिरुद्धो भवत्युत ॥ ३८ ॥
अंशांशेनोदिता शक्तिरानिरुद्धी हरेः प्रभा ।
अव्यापृता शतान्येषा [2]तूष्णीं तिष्ठति षोडश ॥३९॥

व्यूहस्य षोडशशतवर्षानन्तरं सृष्टौ व्यापृतिः

शतानि षोडश स्थित्वानिरुद्धः शक्तिमानसौ ।
तदा व्याप्रियते सृष्टौ [3]पूर्वाभ्यां सह नारद ॥ ४० ॥
[4]व्यूहा एते विशालाक्षाश्चत्वारः पुरुषोत्तमाः ।

व्यूहानां हेयप्रतिभटत्वमनादित्वं च

निर्दोषा निरनिष्टाश्च निरवद्याः सनातनाः ॥ ४१ ॥
अनन्तमक्षरं [5]चैतच्चातुरात्म्यं महामुने ।

[1] A omits this line.
[2] शक्तिः A B C E F.
[3] व्यूहाभ्यां A B C E F J.
[4] व्यूहानां ते A B C.
[5] चैव A B C E F J.

निस्तरङ्गदशायां ते निःसत्ताः सक्तचिन्मयाः ॥ ४२ ॥
शक्त्यात्मका गुणोन्मेषदशायां ते व्यवस्थिताः ।
[1]तत्र स्थूलदशायां ते व्यक्तिभावमुपागताः ॥ ४३ ॥
जगतामुपकाराय सच्चिदानन्दलक्षणाः ।

चातुरात्म्यस्य मनआलम्बनार्थत्वम्

मनआलम्बनायैषा[2] चातुरात्म्यव्यवस्थितिः ॥ ४४ ॥

व्यूहात् व्यूहान्तराविर्भावः

आम्नासिषुरमुष्याश्च रहस्याम्नायवेदिनः ।
व्यूहान्तरविभावादीन् भेदान् संकल्पकल्पितान् ॥

द्वादश व्यूहान्तराणि

व्यूहान्तरं दश द्वे च केशवाद्याः प्रकीर्तिताः ।

वासुदेवात् केशवादित्रयम्

केशवादित्रयं तत्र वासुदेवाद् विभाव्यते ॥ ४६ ॥

संकर्षणात् गोविन्दादित्रयाविर्भावः

संकर्षणाच्च गोविन्दपूर्वं त्रितयमद्भुतम् ।

प्रद्युम्नात् त्रिविक्रमादित्रयाविर्भावः

त्रिविक्रमाद्यं त्रितयं प्रद्युम्नादुदितं मुने ॥ ४७ ॥

अनिरुद्धात् हृषीकेशादित्रयाविर्भावः

हृषीकेशादिकं तत्त्वमनिरुद्धान्महामुने ।

[1] ततः स्थूलदशायां ते मूर्तिभावमुपागताः D.  [2] आलम्बना एषा B C E F.

व्यूहान्तरस्य त्रैविध्यम्

पराः स्वकारणान्तःस्थाः सूक्ष्मास्ते द्विभुजाः स्मृताः ॥
चतुर्भुजास्ते विज्ञेयाः स्थूलास्त्रिभुवनेश्वराः ।
चक्राद्यायुधविन्यासो यन्त्रतन्त्रेऽभिधास्यते ॥ ४९ ॥

विभवा एकोनचत्वारिंशत्

विभवाः पद्मनाभाद्यास्त्रिंशच्च नव चैव हि ।
पद्मनाभो ध्रुवोऽनन्तः शक्त्यात्मा मधुसूदनः ॥ ५० ॥
विद्याधिदेवः कपिलो विश्वरूपो विहंगमः ।
[1]क्रोडात्मा बडबावक्त्रो धर्मो वागीश्वरस्तथा ॥ ५१ ॥
एकाम्भोनिधिशायी च भगवान् कमठेश्वरः ।
[2]वराहो नारसिंहश्च [3]पीयूषहरणस्तथा ॥ ५२ ॥
श्रीपतिर्भगवान् देवः कान्तात्मामृतधारकः ।
राहुजित् कालनेमिघ्नः पारिजातहरस्तथा ॥ ५३ ॥
लोकनाथस्तु शान्तात्मा दत्तात्रेयो महाप्रभुः ।
न्यग्रोधशायी भगवानेकशृङ्गतनुस्तथा ॥ ५४ ॥
देवो वामनदेहस्तु सर्वव्यापी त्रिविक्रमः ।
नरो नारायणश्चैव हरिः कृष्णस्तथैव च ॥ ५५ ॥
ज्वलत्परशुधृग्रामो [4]रामश्चान्यो धनुर्धरः ।
वेदविद्भगवान् कल्की पातालशयनः [5]स्मृतः ॥ ५६ ॥

[1] क्रोधात्मा D J. [2] परमो J. [3] पीयूषा E F J.
[4] रामश्चान्यश्चतुर्गतिः D E F G J. [5] प्रभुः D E F J.

त्रिंशच्च नव चैवैते पद्मनाभादयो मताः ।

तेषामुत्पत्त्यादिकं सात्त्वतादौ ज्ञेयम्

यतश्चैषां समुत्पत्तिर्यो व्यापारो यदायुधम् ॥ ५७ ॥

या मूर्तिर्यादृशी चैव यत्र चैते व्यवस्थिताः ।

भूषणानि विचित्राणि वासांसि विविधानि च ॥

बाह्यान्तःकरणानां च त्रयो वर्गाः सवृत्तयः ।

संकल्पनिर्मिता शक्तिर्या तत्तत्कार्यगोचरा[1] ।

सात्त्वते शासने सर्वं तत्तदुक्तं महामुने[2] ॥ ५९ ॥

अध्यायार्थोपसंहारः

इतीयं [3]शुद्धसृष्टिस्ते विष्णोः संकल्पकल्पिता ।

भूत्यंशो लेशतः प्रोक्तः शृणु सृष्टिमथेतराम् ॥ ६० ॥

इति श्रीपाञ्चरात्रे तन्त्ररहस्ये अहिर्बुध्न्यसंहितायां शुद्धसृष्टिवर्णनं नाम पञ्चमोऽध्यायः

आदितः श्लोकाः ३३०

[1] या सा तत्कार्यगोचरा A B C D E F J. [2] महामते E F.

[3] शुद्धसंसृष्टिः A B C E F J.

## शुद्धेतरसृष्टिवर्णनं नाम षष्ठोऽध्यायः

शक्तितद्वतोर्भेदवदभेदस्याप्युपपत्तिः

**अहिर्बुध्न्यः—**

**योऽसौ नारायणो देवः परमात्मा सनातनः ।**
**अहंभावात्मिका शक्तिस्तस्य तद्धर्मधर्मिणी ॥ १ ॥**
**ताविमावेकधैवोक्तौ भेद्यभेदकभावतः ।**
**पृथक्त्वेन च शास्त्रेषु जगद्धेतुतयोदितौ ॥ २ ॥**

शक्तितद्वतोरपृथक्स्थितिः

**नैव शक्त्या विना कश्चिच्छक्तिमानस्ति कारणम् ।**
**न च शक्तिमता शक्तिर्विनैका व्यवतिष्ठते ॥ ३ ॥**

भगवतो लक्ष्म्याश्च प्रत्येकं जगत्कारणत्वव्यवहारकथनम्

**तत्तद्गौरवमाश्रित्य तन्त्रवेदान्तपारगैः ।**
**जगद्धेतुतया देवावेकैकाविव दर्शितौ ॥ ४ ॥**

शुद्धेतरसृष्टिकथनप्रतिज्ञा

**इति व्यवस्थिते सृष्टिमुक्तशिष्टामिमां शृणु ।**

भूतिशक्तेः स्वसंकल्परूपक्रियाशक्तिप्रवर्त्यत्वम्

**येयं [1]भूतिमयी स्फूर्तिर्विष्णुशक्तेः पुरोदिता ॥ ५ ॥**

[1] भूतमयी A B C J.

तस्याः संकल्पमय्यैव स्फूर्त्या सा बहु [1]नर्त्यते ।

योगालम्बनभूतव्यूहविभवादेः शुद्धिमयस्फूर्तिरूपत्वम्

भूतेः शुद्धिमयी स्फूर्तिः सा व्यूहविभवात्मिका[2] ॥६॥
यामालम्ब्य तरन्तीमं योगिनो भवसागरम् ।

शुद्धेतरसृष्टेः व्यूहविभवमूलकत्वम्

अथ शुद्धेतरा सृष्टिस्तन्मूलैव प्रवर्तते ॥ ७ ॥

तस्यास्त्रैविध्यम्

पुरुषश्चैव कालश्च गुणश्चेति त्रिधोच्यते ।
भूतिः शुद्धेतरा विष्णोः पुरुषो द्विचतुर्मयः[3] ॥ ८ ॥
[4]स मनूनां समाहारो ब्रह्मक्षत्रादिभेदिनाम् ।

प्रद्युम्नात् मिथुनचतुष्टयोत्पत्तिः

ब्राह्मणो ब्राह्मणी चैव मिथुनं तन्मनुद्वयम् ॥ ९ ॥
प्रद्युम्नस्य मुखाज्जातं स्वसंकल्पेन चोदितम् ।
उरसः क्षत्रियद्वन्द्वमूरुतश्च विशो द्वयम् ॥ १० ॥
पद्भ्यां शूद्रद्वयं चैव प्रद्युम्नस्य समुद्गतम् ।
समष्टिर्या मनूनां सा पुरुषो [5]द्विचतुर्मयः ॥ ११ ॥

[1] मन्यते A B C E F J.
[2] विभवादिका D.
[3] द्विचतुर्युगः A B C J.
[4] स मन्यूनां A B C D E; समानानां J.
[5] द्विचतुर्युगः A B C.

कालप्रकृतिसृष्टिः

[1]सूक्ष्मकालगुणावस्था सुदर्शनसमीरिता ।
प्रद्युम्नस्य ललाटाच्च भ्रुवोः कर्णादुदीरिता ॥ १२ ॥

अनिरुद्धाय पालनाज्ञादानम्

पुरुषः शक्तिरित्येतच्चेतनाचेतनात्मकम् ।
[2]वर्धयेत्यनिरुद्धाय प्रद्युम्नेनोपपाद्यते ॥ १३ ॥

तेन तद्वर्धनम्

अन्तःस्थपुरुषां[3] शक्तिं तामादाय स्वमूर्तिगाम्[4] ।
संवर्धयति योगेन ह्यनिरुद्धः स्वतेजसा ॥ १४ ॥

नियतिकालयोरुदयः

नियतिः काल इत्येवं शक्तिः संकल्पचोदिता ।
द्विधोदेत्यनिरुद्धात् सा यत् तत् कालमयं वपुः ॥ १५ ॥

गुणमय्याः प्रकृतेस्त्रैविध्यम्

यत्तद्गुणमयं रूपं शक्तेस्तस्याः प्रकीर्तितम् ।
सत्त्वं रजस्तम इति त्रिधोदेति क्रमेण तत् ॥ १६ ॥

सत्त्वादिभ्यो रजआद्युत्पत्तिः

सत्त्वाद्रजस्तमस्तस्मात् तमसो बुद्धिरुद्गता ।

[1] सूक्ष्मा A D E F.
[2] वर्धयत्यनिरुद्धाय A B C.
[3] पुरुषाः शक्ति D.
[4] स्वमूर्तिकाम् B C; समूर्तिकाम् D.

बुद्धेरहंकृतिस्तस्या[1] भूततन्मात्रपञ्चकम् ॥ १७ ॥
एकादशकमक्षाणां मात्रेभ्यो भूतपञ्चकम् ।
भूतेभ्यो भौतिकं सर्वमित्ययं सृष्टिसंग्रहः ॥ १८ ॥

पुनर्विस्तरेण सृष्टिप्रपञ्चनप्रश्नः

नारदः—

भगवन् भगनेत्रघ्न तत्त्वविज्ञानवारिधे ।
आख्याहि [2]विस्तरेणाद्य भूतेरुन्मेषमद्भुतम् ॥ १९ ॥

तत्प्रपञ्चनम्

अहिर्बुध्न्यः—

शृणु नारद तत्त्वेन विष्णोः संकल्पकारिताम् ।
भूतेः परिणतिं चित्रां चिदचिद्वर्गसंकुलाम् ॥ २० ॥

परवासुदेवस्य नित्यविभूतिमत्ताप्रतिपादनम्

शुद्धा पूर्वोदिता सृष्टिर्या सा [3]व्यूहादिभेदिनी ।
सुदर्शनाख्यात् संकल्पात् तस्या एव प्रभोज्ज्वला ॥२१॥
ज्ञानानन्दमयी [4]स्त्याना देशभावं व्रजत्युत ।
स देशः परमं व्योम निर्मलं पुरुषात् परम् ॥ २२ ॥
निःसीमसुखसंतानमनवद्यमनाकुलम् ।
तत्रानन्दमया भोगा [5]लोकाश्चानन्दलक्षणाः ॥ २३ ॥

[1] तस्य All MSS.
[2] विस्तरेणेमं D.
[3] व्यूहाविभेदिनी A B C J.
[4] सारा J; 'सत्या' इत्यपि पाठान्तरमन्यकोशेषु.
[5] लोका आनन्द A B C E F J.

ज्ञानानन्दमया देहा मुक्तानां भावितात्मनाम् ।

श्रियः पत्युर्भगवतो नित्यमुक्तानुभाव्यत्वम्

सदा पश्यन्ति ते[1] देवाः पुरुषं पुष्करेक्षणम् ॥ २४ ॥
षाड्गुण्यविग्रहं देवं तादृश्या च श्रिया युतम् ।
संकल्पसाधिताशेषदेहदैहिकविस्तरम् ॥ २५ ॥
ईशानमस्य [2]सर्वस्य जगतस्तस्थुषस्पतिम् ।
सर्वावासमनावासं नारायणमनामयम् ॥ २६ ॥

मुक्तानां स्वरूपम्

तत् पदं प्राप्य [3]तत्त्वज्ञा मुच्यन्ते वीतकल्मषाः ।
त्रसरेणुप्रमाणास्ते रश्मिकोटिविभूषिताः ॥ २७ ॥
आविर्भावतिरोभावधर्मभेदविवर्जिताः ।

तेषामपुनरावृत्तिः

परमं तेऽध्वनः पारं वैष्णवं पदमाश्रिताः ॥ २८ ॥
[4]विशन्ति नेममध्वानं कालकल्लोलसंकुलम् ।

तेषां यथोपासनं फलप्राप्तिः

भक्तास्ते यादृशे रूपे संसारपदमाश्रिताः ॥ २९ ॥
तादृशं ते समीक्षन्ते परमव्योमवासिनः ।
विहृत्य सुचिरं कालं [5]कोट्योघप्रतिसंचरम् ॥ ३० ॥

[1] तं A B C J.
[2] देवस्य D; जगतः A B C.
[3] सर्वज्ञाः A B C E F J.
[4] J omits two lines from here.
[5] कोट्या संप्रतिसंचरम् A B C E F J.

ततो विशन्ति ते [1]दिव्यं षाड्गुण्यं वैष्णवं यशः ॥

परमव्योम्नोऽशक्यवर्णनत्वम्

तदेतत् परमव्योम लेशतस्ते प्रदर्शितम् ॥ ३१ ॥
नैव वर्षायुतेनापि वक्तुं शक्योऽस्य विस्तरः ।

जीवसमष्टिपुरुषस्यार्वाचीनस्थानवर्तित्वम्

उक्तः कर्माधिकारो यः पुरुषस्ते चतुर्युगः ॥ ३२ ॥
अस्मात् स परमव्योम्नस्तिष्ठत्यर्वाचि[2] वै पदे ।
सर्वात्मनां समष्टिर्या कोशो मधुकृतामिव ॥ ३३ ॥
शुद्ध्यशुद्धिमयो भावो भूतेः स पुरुषः स्मृतः ।
अनादिवासनारेणुकुण्ठितैरात्मभिश्चितः ॥ ३४ ॥

स्वतः शुद्धानामप्यात्मनां भगवच्छक्त्या स्वरूपतिरोधानम्

[3]आत्मनो भूतिभेदास्ते सर्वज्ञाः सर्वतोमुखाः ।
भगवच्छक्तिमय्यैवं मन्दतीव्रादिभावया ॥ ३५ ॥
तत्तत्सुदर्शनोन्मेषनिमेषानुकृतात्मना ।
[4]सर्वतोऽविद्यया विद्धाः क्लेशमय्या वशीकृताः ॥ ३६ ॥

तिरोहितस्वरूपाणां चातूरूप्यम्

ब्रह्मक्षत्रादिभावेन चातूरूप्यं व्रजन्ति ते ।
ब्राह्मणाः क्षत्रिया वैश्याः शूद्रा इति विभेदतः ॥

[1] दैव्यम् D. [2] अर्वाचिके A B C E F. [3] आत्मानो D E F.
[4] सर्वतोऽविद्यया सिद्धाः क्लेशाशयवशीकृताः D.

आत्मानो जीवसंज्ञास्ते बन्धमोक्षौ [1]व्रजन्ति ते ।

तेषां कर्मपारवश्यात् पृथिव्यामवतरणम्

मनवो [2]नाम कूटस्थास्तेषामुक्ता: समष्टय: ॥ ३८ ॥

क्लेशाशयापरामृष्टा: [3]सर्वज्ञा: सर्वतोमुखा: ।

नित्यसिद्धा हि[4] भूत्यंशास्ते प्रोक्ता भगवन्मया: ॥

आविर्भावतिरोभावै: स्वस्मिन्नात्मनि नारद ।

आत्मनो वर्तयन्तस्ते वैष्णवा आधिकारिका: ॥ ४० ॥

विष्णो: संकल्परूपेण स्थित्वास्मिन् पौरुषे पदे।

योगेनावतरन्त्यंशै: स्थानात् स्थानं धरावधि ॥ ४१ ॥

अवतीर्णानां प्रजास्रष्टृत्वम्

सृष्टायां कर्मभूमौ ते मिथुनीभूय मानवान् ।

चतु:शतं सृजन्त्येते भूयो मानवमानवान् ॥ ४२ ॥

ते चापरिमिता: सर्वे विस्तारस्तत्र[5] वक्ष्यते ।

अनिरुद्धात् शक्त्युत्पत्ति:

अर्वाचीने पदे तस्मात् [6]पुरुषाद्धि चतुर्युगात् ॥ ४३ ॥

[7]सृष्टानिरुद्धत: शक्तिस्तत्सुदर्शनचोदितात् ।

शक्तौ कूटस्थमनूनामवतरणम्

सृष्टायामथ शक्तौ तु मनवोऽष्टौ महामुने ॥ ४४ ॥

[1] भजन्ति D. [2] मान All MSS. [3] सुसंज्ञा: A B C E F.
[4] विभूत्यंशास्ते D. [5] तस्य A B C E F J.
[6] पुरुषोऽधि चतुर्युग: A B C. [7] सृष्टोऽनिरुद्धतो देवा: A B C.

अवतीर्य स्वकात् स्थानाद्विष्णुसंकल्पचोदिताः ।
तिष्ठन्ति [1]कललीभूतास्तस्मिञ्शक्तिमये पदे ॥ ४५ ॥
कालो नाम गुणो नाम तस्या गर्भस्थितं द्वयम् ।

शक्तितो नियतेरुत्पत्तिः

कालस्य नियतिर्नाम सूक्ष्मः सर्वनियामकः ॥ ४६ ॥
उदेति प्रथमं शक्तेर्विष्णुसंकल्पचोदितः ।

तत्र मनूनां स्थितिः

मनवोऽवतरन्त्यत्र ते सुदर्शनचोदिताः ॥ ४७ ॥
यस्य स्याद्यादृशं रूपं यत्करं यत्स्वभावकम् ।
सुदर्शनप्रभावस्थं [2]तत्तन्नियमभावितम् ॥ ४८ ॥

नियतितः कालस्योत्पत्तिः

कालस्य [3]पावनं रूपं यत्तु तत्कलनात्मकम् ।
उदेति नियतेः सोऽथ कालः संकल्पचोदितः ॥ ४९ ॥

तत्र मनूनां स्थितिः

नियतेर्मनवोऽप्यत्र [4]काले ह्यवतरन्ति ते ।
कालः स [5]कलयत्येको विष्णुसंकल्पचोदितः ॥ ५० ॥
[6]कलयत्यखिलं [7]काल्यं नदीकूलं यथा रयः ।

1 सकलीभूताः D. 2 तत्तन्नियति D.
3 वाचनं D; पाचनं E F. 4 कालेऽपि D. 5 काल्यति E F.
6 काल्यति E F. 7 कार्यम् A B C.

कालात् क्रमेण गुणमयरूपोत्पत्तिः

यत्तद्गुणमयं रूपं शक्तेः पूर्वं समीरितम् ॥ ५१ ॥
सोपानक्रमतः कालात् तद्गौणं [1]व्यज्यते वपुः ।

तत्र प्रथमं सत्त्वोत्पत्तिः

सत्त्वं तत्र लघु स्वच्छं गुणरूपमनामयम् ॥ ५२ ॥
प्रथमं व्यज्यते कालान्मनवोऽवतरन्त्यतः ।

आनिरुद्धया वैष्णवमूर्त्या तस्याधिष्ठानम्

आनिरुद्धी ततो मूर्तिः स्वसंकल्पप्रचोदिता ॥ ५३ ॥
अधितिष्ठति तत् सत्त्वं विष्णुनाम्नैव नामभाक् ।

तत एव तस्य सुखरूपत्वं स्वच्छत्वं च । सत्त्वाद्रजउत्पत्तिः

तदेतत् सकलं स्वच्छं सुखमासीदनाकुलम् ॥ ५४ ॥
अन्तःस्थमनुकं सत्त्वमन्तःस्थाचिद्गुणं मुने ।
विष्णुनाधिष्ठितं तस्माद्विष्णुसंकल्पचोदितात् ॥ ५५ ॥
रजो नाम गुणः [2]सत्त्वात् तस्मादाविर्भवत्यलम् ।

तत्र मनूनां स्थितिः

मनवोऽवतरन्त्यत्र सत्त्वात् संकल्पचोदिताः ॥ ५६ ॥

तस्यानिरुद्धाधिष्ठितब्रह्मरूपत्वम्

ब्राह्मी मूर्तिर्गुणं तं चाप्यानिरुद्ध्यधितिष्ठति ।

[1] विद्यते A B C.    [2] सत्त्वं तस्मिन्नाविर्भवत्यलम् A B C.

अतस्तस्य दुःखरूपत्वम्

**तदेतत् प्रचलं दुःखं रजः शश्वत्प्रवृत्तिमत् ॥ ५७ ॥**
**लोलीभूतमिदं तच्च [1]विश्वमन्तःस्थितं तदा ।**

रजसस्तमउत्पत्तिः

**ब्रह्मणाधिष्ठितात् तस्मादन्तःस्थमनुकान्मुने ॥ ५८ ॥**
**संकल्पचोदितं विष्णोस्तमो नाम गुणोऽभवत् ।**

तत्र मनूनां स्थितिः

**मनवोऽवतरन्त्यत्र ते सुदर्शनचोदिताः ॥ ५९ ॥**

तस्यानिरुद्धाधिष्ठितरुद्ररूपत्वम्

**रुद्रो नाम गुणस्तं चाप्यनिरुद्धयधितिष्ठति ।**

अतस्तस्य मोहनादिरूपत्वम्

**गुरु विष्टम्भनं शश्वन्मोहनं चाप्रवृत्तिमत् ॥ ६० ॥**
**तत् तमो नाम [2]भणितं गुणसागरपारगैः ।**

अंशतो गुणत्रयसाम्यापत्तिः

**सुदर्शनमयेनैव संकल्पेनात्र वै हरेः ॥ ६१ ॥**
**[3]चोद्यमानेऽपि सृष्ट्यर्थं पूर्णं गुणयुगं तदा ।**
**अंशतः साम्यमायाति विष्णुसंकल्पचोदितम् ॥ ६२ ॥**

[1] विमलं तत्स्थितं तदा A B C.
[2] गुणितम् A B C.
[3] चोद्यमानोऽपि B C.

तस्यैव प्रकृतित्वम्

**त्रैगुण्यं नाम तत्त्वज्ञैस्तत् तमः परिगीयते ।**

प्रकृतिपर्यायशब्दाः

**गुणसाम्यमविद्या च स्वभावो योनिरक्षरम् ।**
**अयोनिर्गुणयोनिश्चेत्याद्यास्त्रैगुण्यवाचकाः ॥ ६३ ॥**

इति श्रीपाञ्चरात्रे तन्त्ररहस्ये अहिर्बुध्न्यसंहितायां शुद्धेतरसृष्टिवर्णनं नाम षष्ठोऽध्यायः

आदितः श्लोकाः ३९३

## शुद्धेतरसृष्टिवर्णनं नाम सप्तमोऽध्यायः

प्रकृतिपुरुषकालानां समष्टिः

अहिर्बुध्न्यः—

[1]अन्यूनानतिरिक्तं यद् गुणसाम्यं तमोमयम्।
तत् सांख्यैर्जगतो मूलं प्रकृतिश्चेति कथ्यते ॥ १ ॥
क्रमावतीर्णो यस्तत्र चतुर्मनुयुगः पुमान्।
समष्टिः पुरुषो योनिः स कूटस्थ इतीर्यते ॥ २ ॥
यत् तत् कालमयं तत्त्वं जगतः संप्रकालनम्[2]।
स तयोः कार्यमास्थाय संयोजकविभाजकः ॥ ३ ॥

भगवत्संकल्पचोदितात् त्रितयादस्मात् महदाद्युत्पत्तिः

मृत्पिण्डीभूतमेतत्तु कालादित्रितयं मुने।
विष्णोः सुदर्शनेनैव स्वस्वकार्यप्रचोदितम् ॥ ४ ॥
महदादिपृथिव्यन्ततत्त्ववर्गोपपादकम्।

प्रकृतिः स्वरूपतः स्वभावतश्च परिणामिनी

पयोमृदादिवत् तत्र प्रकृतिः परिणामिनी ॥ ५ ॥

1 अथ न्यूनातिरिक्तम् A B C E F; अथ मानातिरिक्तम् J.
2 संप्रकारणम् J.

पुरुषः स्वरूपतोऽपरिणामी

**पुमानपरिणामी सन् संनिधानेन कारणम् ।**

कालस्य प्रकृतिपुरुषपाचकत्वम्

**कालः पचति तत्त्वे द्वे प्रकृतिं पुरुषं च ह ॥ ६ ॥**

प्रकृतेर्महत्तत्त्वोत्पत्तिः

**पुरुषाधिष्ठितात् तस्माद्विष्णुसंकल्पचोदितात् ।**
**कालेन कलिताच्चैव गुणसाम्यान्महामुने ॥ ७ ॥**
**महान् नाम महत्तत्त्वमव्यक्तादुदितं मुने ।**

महत्तत्त्वपर्यायाः

**विद्या [1]गौर्यवनी ब्राह्मी वधूर्वृद्धिर्मतिर्मधुः ॥ ८ ॥**
**[2]अख्यातिरीश्वरः प्राज्ञेत्येते तद्वाचका मुने ।**

महतस्त्रैविध्यम्

**कालो बुद्धिस्तथा प्राण इति त्रेधा स गीयते ॥ ९ ॥**
**तमःसत्त्वरजोभेदात् तत्तदुन्मेषसंज्ञया ।**
**कालस्त्रुटिलवाद्यात्मा बुद्धिरध्यवसायिनी ॥ १० ॥**
**प्राणः प्रयतनाकार इत्येता महतो भिदाः ।**

तत्र सात्त्विकस्य चातुर्विध्यम्

**धर्मो ज्ञानं विरागश्चाप्यैश्वर्यमिति संज्ञया ॥ ११॥**
**महतः सात्त्विकं रूपं चतुर्धा प्रविभज्यते ।**

1 गौर्युवती ब्रह्मा D.

2 इदमर्धं सर्वत्रैवमेव पठ्यते.

तामसस्यापि चातुर्विध्यम्

[1]अधर्माज्ञानावैराग्यमनैश्वर्यं च तामसम् ॥ १२ ॥

महत्तत्त्वे मनूनामवस्थितिः

विद्याया उदरेऽष्टौ ते सुदर्शनसमीरिताः ।
मनवो गर्भतां यान्ति सर्वज्ञाः सर्वदर्शिनः ॥ १३ ॥

तत्र बुद्ध्युत्पत्तिः

बोधनं नाम वैद्यं तदिन्द्रियं तेषु जायते ।
येनार्थानध्यवस्येयुः सदसत्प्रविभागिनः[2] ॥ १४ ॥

महतोऽहंकारोत्पत्तिः

विद्याया उदरे तत्राहंकृतिर्नाम जायते ।
संकल्पाच्चोदिता विष्णोश्चोदितायाः सुदर्शनात् ॥१५॥

अहंकारपर्यायाः

अहंकारोऽभिमानश्च प्रजापतिरहंकृतिः ।
अभिमन्ता च बोद्धा चेत्यस्याः पर्यायवाचकाः ॥ १६ ॥

अहंकारस्य त्रैविध्यम्

तस्य वैकारिकं नाम रूपं सात्त्विकमुच्यते ।
तैजसं राजसं रूपं भूतादिर्नाम तामसम् ॥ १७ ॥

1 अधर्माज्ञानसामान्यम् D. 2 प्रविभागतः D J.

अहंकारस्य रूपभेदाः

कामः क्रोधश्च लोभश्च मानश्चावमतिस्तृषा ।
इत्यहंकृतिरूपाणि दर्शितानि [1]मुने तव ॥ १८ ॥

अहंकारे मनूनामवस्थितिः

नानाविभवयुक्तायामुत्पन्नायामहंकृतौ ।
तदन्तर्गर्भमायाति मनूनां तच्चतुर्युगम् ॥ १९ ॥

अहंकारात् मनउत्पत्तिः

सुदर्शनेरितं विष्णोराहंकारिकमिन्द्रियम् ।
मनो नाम मनूनां तज्जायते चिन्तनात्मकम् ॥ २० ॥
मनस्वी बुद्धिमांश्चापि गर्भो मनुमयस्तथा ।

भूतादेः शब्दतन्मात्रोत्पत्तिः

भूतादेः शब्दतन्मात्रं तामसादथ जायते ॥ २१ ॥

तस्मादाकाशोत्पत्तिः

वियच्च शब्दतन्मात्राज्जायते शब्दलक्षणम् ।

आकाशस्य गुणकर्मणी

शब्दैकगुणमाकाशमवकाशप्रदायि च ॥ २२ ॥

आकाशे मनूनां स्थितिः

तदन्तर्गर्भतां यान्ति विष्णुसंकल्पचोदिताः ।

[1] महामुने D.

मनवोऽष्टौ महाबुद्धे तदा वैकारिकात् पुनः ॥ २३ ॥

श्रोत्रवाचोरुत्पत्तिः

श्रोत्रं वागिति विज्ञानकर्मेन्द्रिययुगं मुने ।
समीक्षयैव देवस्य मनुषु प्रतिजायते ॥ २४ ॥

मनूनां तद्वैशिष्ट्यम्

श्रोत्रवानथ वाग्मी च गर्भो मनुमयस्तथा ।

अथ स्पर्शतन्मात्रोत्पत्तिः

सुदर्शनेरिताद्विष्णोर्भूतादेः स्पर्शमात्रकम् ॥ २५ ॥

तस्माद्वायूत्पत्तिः

जायते स्पर्शवान् वायुस्तस्मादपि च जायते ।

वायोः क्रियाभेदाः

शोषणं [1]प्रेरणं चेष्टा व्यूहनं च समूहनम् ॥ २६ ॥
क्रियाभेदा इमे तस्माज्जायन्ते वायुतो मुने ।

त्वक्पाण्योरुत्पत्तिः

वैकारिकादहंकारात् त्वक्पाणिद्वितयं मुने ॥ २७ ॥
ज्ञानकर्मेन्द्रियद्वन्द्वं संकल्पात् तस्य जायते ।

वायौ मनूनां स्थितिः

तदन्तर्गर्भतां याति तदा मनुमयः पुमान् ॥ २८ ॥

[1] पोषणम् A B C E F J.

तेषां त्वक्पाणिवैशिष्ट्यम्

**चेष्टमानस्तदा गर्भो विष्णुसंकल्पचोदितः ।**
**त्वक्पाणिद्वयवानासीत् [1]स्पर्शादानादिसिद्धये ॥ २९ ॥**

रूपतन्मात्रतेजसोरुत्पत्तिः

**तामसादथ भूतादेः सुदर्शनसमीरितात् ।**
**जायते रूपमात्रं तु ज्योतिस्तस्माच्च रूपवत् ॥ ३० ॥**

तेजसः क्रियाभेदाः

**रूपं व्यक्तिस्तथा पाकः कान्तिर्दीप्तिरितीदृशाः ।**
**जायन्ते तैजसा भेदा भेदाद्वैकारिकात् तथा ॥ ३१ ॥**

चक्षुःपादयोरुत्पत्तिः

**सुदर्शनेरिताज्जातं चक्षुःपादयुगं मुने ।**

तेजसि मनूनां स्थितिः

**तदन्तर्गर्भतां यान्ति ते सुदर्शनचोदिताः ॥ ३२ ॥**

तेषां चक्षुःपादवैशिष्ट्यम्

**मनवो रूपवन्तस्ते कान्तिदीप्त्यादिशालिनः ।**
**चक्षुष्मन्तः पादवन्तो [2]वीक्षणाटनयोगिनः ॥ ३३ ॥**

रसतन्मात्राम्भसोरुत्पत्तिः

**तामसादथ भूतादेर्विष्णोरीक्षानियोजितात् ।**

[1] स्पर्शदानादि A B C D. [2] वीक्षणायन E J.

जायते रसमात्रं तु जायन्तेऽम्भांसि वै ततः ॥ ३४ ॥

तत्क्रियाभेदाः

जायन्तेऽथ गुणास्तेषां रसस्नेहद्रवादयः ।

रसनोपस्थेन्द्रियोत्पत्तिः

अथ वैकारिकात् तस्माद् विष्णुसंकल्पचोदितात् ॥३५॥
रसनोपस्थमित्येतज्जायते[1] द्वन्द्वक्रियात्मकम् ।

अप्सु मनूनां स्थितिः

तदन्तर्गर्भतां यान्ति विष्णुसंकल्पचोदिताः ॥ ३६ ॥
मनवस्ते महाबुद्धे विष्णुकर्माधिकारिणः ।

तेषां रसनोपस्थवैशिष्ट्यम्

सरसाः स्नेहवन्तश्च रुधिरादिद्रवान्विताः ॥ ३७ ॥
जायन्ते रसनावन्तः पुंस्त्रीव्यञ्जनभेदिताः[2] ।

गन्धतन्मात्रमह्योरुत्पत्तिः

सुदर्शनेरितात् तस्माद्भूतादेस्तदनन्तरम् ॥ ३८ ॥
जायते गन्धतन्मात्रं तस्माद्गन्धवती मही ।

पार्थिवगुणभेदाः

काठिन्यं गौरवं स्थैर्यमित्याद्याः पार्थिवा गुणाः ॥ ३९ ॥

[1] इत्येतद् द्वन्द्वं ज्ञानक्रियात्मकम् A B C E F J.
[2] भेदतः A B C E F; भेदिनः J.

प्राणपाय्वोरुत्पत्तिः

वैकारिकादहंकारात् सुदर्शनसमीरितात् ।
घ्राणं पायुरिति द्वन्द्वं ज्ञानकर्मात्मकं मुने ॥ ४० ॥

पृथिव्यां मनूनां स्थितिः

[1]भुवस्ते गर्भतां यान्ति विष्णुसंकल्पचोदिताः ।

तेषां घ्राणपायुवैशिष्ट्यम्

[2]गुरवः स्थिरसंघाता अस्थिदन्तादिसंयुताः ॥ ४१ ॥
घ्राणवन्तः पायुमन्तः संपूर्णावयवा मुने ।

संकल्पाद्युत्पत्तिः

संकल्पश्चैव संरम्भः प्राणाः पञ्चविधास्तथा ॥ ४२ ॥
मनसोऽहंकृतेर्बुद्धेर्जायन्ते [3]पूर्वमेव तु ।

एवं मनूनां सर्वावयवपूर्णता

एवं संपूर्णसर्वाङ्गाः प्राणापानादिसंयुताः ॥ ४३ ॥
सर्वेन्द्रिययुतास्तत्र देहिनो मनवो मुने ।

सृष्टिप्रलयकालयोस्तुल्यपरिमाणत्वम्

यो यादृग्वर्णितः पूर्वं कालस्तत्प्रतिसंचरे ॥ ४४ ॥

[1] J omits 3 lines from here.
[2] मनवः A B C E F.
[3] पुनरेव तु J.

सर्गं स एव विज्ञेयो वैष्णवैस्तत्त्वचिन्तकैः ।
[1]विद्याविपरिणामोऽयं सप्तधा वीक्षया हरेः ॥ ४५ ॥
महाभूतानि तान्याहुर्विभागान् सप्तधा[2] मुने ।

मनुविभागः

मनवोऽपि विभज्यन्ते सुदर्शनसमीरिताः ॥ ४६ ॥
युगशो युगशः पूर्वं पश्चात् पुंस्त्रीविभेदतः ।
स्वयमागतविज्ञानाः सर्वज्ञाः सर्वदर्शिनः ॥ ४७ ॥
आत्मन्यध्यक्षमीशानमनिरुद्धं दधत्यथ ।

मनुभिर्गर्भोत्पादनम्

ततो ह्यध्यक्षवन्तस्ते तत्संकल्पेन चोदिताः ॥ ४८ ॥
गर्भानादधते स्त्रीषु मनवस्ते शतं शतम् ।

तेषां ब्राह्मणादिसंज्ञा

ब्राह्मणाः क्षत्रिया वैश्याः शूद्राश्चेति [3]चतुर्विधाः ॥४९॥
मानवा मनुयोषिद्भ्यो जायन्ते द्वन्द्वलक्षणाः ।

तदुत्पन्नानां मानवमानवादिसंज्ञा

मनुभिः संस्कृतास्ते तु स्वासु पत्नीषु मानवाः ॥ ५० ॥
जनयन्ति बहून् पुत्रांस्ते स्युर्मानवमानवाः ।

[1] विद्या परिणता सेयं सप्तधा विष्णुवीक्षया D.
[2] सप्त ये मुने D.
[3] चतुःशतम् D.

तेषां भगवत्कैंकर्यकारित्वम्

तेषां गोत्राण्यनेकानि यैरिदं सकलं ततम् ॥ ५१ ॥
चातुर्वर्ण्यमया एते भगवत्कर्मकारिणः ।

भागवतकैंकर्यकारिणां मोक्षसंपत्तिः

तेषां ये कर्म कुर्वन्ति साधवः शतवार्षिकम् ॥ ५२ ॥
विवेकज्ञानमासाद्य ते विशन्ति हरिं परम् ।

अन्येषां संसारप्राप्तिः

युगादियुगनिर्ह्रासाद्ये कर्मान्तरकारिणः ॥ ५३ ॥
फलाभिध्यायिनो यान्ति तत्प्रसूतां गतिं तु ते ।

कर्महेतुकदेवादिसृष्टिः

या सा विद्या पुरा प्रोक्ता मनुगर्भवती मुने ॥ ५४ ॥
गर्भवत्येव सा देवान् नानागुणविभेदितान् ।
दैत्यदानवरक्षांसि गन्धर्वोरगकिंनरान् ॥ ५५ ॥
इति नानाविधा योनीर्विष्णोः संकल्पचोदिता ।
स्वसंकल्पेन सृजति ते चान्यांस्तेऽपि चापरान् ॥५६॥
मनुगर्भदशायां तु पितृदेवर्षिमानवाः[1] ।
इति सृष्टास्तया शश्वद्विद्यया ब्रह्मणा स्वयम् ॥ ५७ ॥

[1] दानवाः E F J.

मनूनां देवादीनां च कूटस्थपुरुषव्यष्टिरूपत्वम्

**कूटस्थो यः पुरा प्रोक्तः पुमान् व्योम्नः [1]परादधः ।**
**मनवो देवताद्याश्च तद्व्यष्टय इतीरिताः ॥ ५८ ॥**

जीवानां भगवद्विभूतित्वम्

**जीवभेदा मुने सर्वे विष्णुभूत्यंशकल्पिताः ।**

महतो मेघात्मना परिणामः

**[2]अथ व्यक्तेषु मनुषु प्रजातेषु पुनः पुनः ॥ ५९ ॥**
**[3]विद्यैवांशेन केनापि धेनुर्भवति शाश्वती ।**
**धेनुरित्युच्यते विद्या मेघभावमुपागता ॥ ६० ॥**
**पयः क्षरति वर्षाख्यमन्नादिपरिणामवत् ।**

जीवानां ज्ञानभ्रंशहेतुकथनम्

**तत्तु वैद्यं पयः प्राश्य सर्वे मानवमानवाः ॥ ६१ ॥**
**[4]ज्ञानभ्रंशं प्रपद्यन्ते सर्वज्ञाः स्वत एव ते ।**

ततः शास्त्रप्रवृत्तिः

**ततः [5]प्रवर्त्यते शास्त्रं मनुभिः पूर्वजैस्तदा ॥ ६२ ॥**
**तदादिष्टेन मार्गेण ते यान्ति परमां गतिम् ।**
**लेशतः सृष्टिरुक्तेयं भूतेः शुद्धेतरा मुने ॥ ६३ ॥**

[1] परादयः A B. [2] अनु D. [3] विद्यैवाद्येन D.
[4] ज्ञानं भृशम् B. [5] प्रवर्तितं J.

सुदर्शनेन या विष्णोरेवंभावेन भाव्यते ।

अध्यायद्वयार्थसंक्षेपः

भूयश्च शृणु संक्षेपमिमं नारद तत्त्वतः ॥ ६४ ॥
एका शक्तिर्हरेर्विष्णोः सर्वभावानुगामिनी ।
देवी षाड्गुण्यपूर्णा सा ज्ञानानन्दक्रियामयी ॥ ६५ ॥
भाव्यभावकभेदेन सा द्विधाभावमृच्छति ।
भावकस्तत्र संकल्पः सुदर्शनमयो हरेः ॥ ६६ ॥
अव्याघातस्तु यस्तस्य सा सुदर्शनता मुने ।
ज्ञानमूलक्रियात्मासौ स्वच्छः स्वच्छन्दचिन्मयः ॥
भाव्यो [1]नाम परांशो यः सा भूतिरिति गीयते ।
संकर्षणादिभूम्यन्ता शुद्धेतरविभागिनी[2] ॥ ६८ ॥
संकर्षणादिव्यूहान्ता शुद्धसर्गमयी स्थिता ।
शक्त्यादिभूमिपर्यन्ता शुद्धेतरमयी मुने ॥ ६९ ॥
[3]अंशयोः पुरुषो मध्ये यः स्थितः स चतुर्युगः ।
शुद्धेतरमयं विद्धि कूटस्थं तं महामुने ॥ ७० ॥
इतीयं विविधा भूतिर्नानातत्त्वमयी मुने ।
सुदर्शनेन मरुता ज्वालेव बहुधेर्यते ॥ ७१ ॥
आनुलोम्येन सर्गे तु प्रातिलोम्येन चाप्यये ।
मध्ये च स्थाप्यते तेन कार्यते च तथा तथा ॥ ७२ ॥

[1] नाम्ना वरांशो D. [2] विभाविनी J.
[3] Beginning from here three lines omitted D.

सुदर्शनानधीनस्य वस्तुनस्तुच्छता

**भूतेरंशः स नैवास्ति स्वल्पाल्पोऽपि महामुने ।**
**यो न याति स्वजन्मादौ सुदर्शनविधेयताम् ॥ ७३ ॥**

इति श्रीपाञ्चरात्रे तन्त्ररहस्ये अहिर्बुध्न्यसंहितायां शुद्धेतरसृष्टिवर्णनं नाम सप्तमोऽध्यायः

आदितः श्लोकाः ४६६

## जगदाधारनिरूपणं नाम अष्टमोऽध्यायः

### सृष्टौ वादिनां बहुधा विप्रतिपत्तिः

नारदः—

भगवन् देवदेवेश भगनेत्रविनाशन ।
श्रुतं [1]मयैतदखिलं तव वक्त्राम्बुजस्रुतम् ॥ १ ॥
व्याकुलस्त्वन्तरात्मा मे नानाज्ञानविमोहितः ।
केचित् त्रैभूतिकीं सृष्टिं ब्रुवते तत्त्ववादिनः ॥ २ ॥
चतुर्भूतमयीमन्ये केऽप्यन्ये पाञ्चभौतिकीम् ।
तां षड्धातुमयीमेके[2] सप्तधातुमयीं परे ॥ ३ ॥
अष्टप्रकृतिकां[3] केचिन्नवप्रकृतिकां[4] परे ।
दशतत्त्वमयीमेके केचिदेकादशात्मिकाम् ॥ ४ ॥
एवमुच्चावचां संख्यां तत्त्वप्रकृतिगोचराम् ।
वदन्ति मुनयः सिद्धा देवा वेदास्तथैव च ॥ ५ ॥
अण्डजामपरे सृष्टिं पद्मजामपि चापरे ।
[5]पावकीमपरे सृष्टिं केचित् कायान्तरोद्भवाम् ॥ ६ ॥

[1] मयेदमखिलम् A B C E F. [2] मयीमन्ये A B C E F.
[3] अष्टप्रकृतिजां D. [4] नवप्रकृतिजां D. [5] पाचिर्कीम् D.

विद्यागर्भमयीमेके शून्यरूपामथापरे ।

तत्र तत्त्वजिज्ञासया प्रश्नः

इत्थमुच्चावचार्थास्ते नानाशास्त्रमहोदधौ ॥ ७ ॥
नानादर्शनकल्लोलजातकोलाहलोद्भटे ।
विमुह्यत्यवमग्नेयमप्लवा बुद्धिरद्य मे ॥ ८ ॥
निर्णयप्लवदानेन [1]तामुत्तारय शंकर ।

तदुत्तरकथनारम्भः

अहिर्बुध्न्यः—

[2]उचितं तव देवर्षे यदयं प्रश्न ईरितः ॥ ९ ॥
मुह्यन्त्यत्र महान्तोऽपि [3]शृणु मे तत्त्वनिर्णयम् ।
परमात्मा परो देव एकः षाड्गुण्यमुज्ज्वलम् ॥१०॥

वेदवाचोऽपि कात्स्न्येन तत्त्वावगाहनासामर्थ्यम्

वागनादिरनन्तापि [4]तत्त्वं तन्नावगाहते ।
गुणैस्तटस्थितैस्तैस्तैरजानानेव सा स्थिता ॥ ११ ॥

विप्रतिपत्तौ हेतुकथनम्

यद्गुणे नाम्नि ये भ्रान्तास्तत्र तत्त्वविदो मुने ।
मनुभिस्तद्गुणैस्तैस्तैस्ते ते तत्त्वविदां [5]वराः ॥ १२ ॥

[1] मामुत्तारय A B C E F J.
[2] उचितस्तव D.
[3] शृणु तत्त्वविनिर्णयम् A B.
[4] तत्त्वतस्तन्न गाहते D.
[5] वर A B C E F.

निर्दिशन्ति जगद्धेतुं [1]स्वनिरूढैर्महामुने ।
नानागुणनिमित्तैस्तैर्नानावक्तृसमीरितैः ॥ १३ ॥
भेदं व्यवस्थिताः शब्दैरपर्यायविदो जनाः ।

एकस्या अपि लक्ष्म्या नानाशब्दगोचरत्वम्

एवं विष्णोः [2]प्रिया भाः सा शक्तिः षाड्गुण्यविग्रहा ॥
नानानामभिरेकापि तत्त्वविद्भिरुपास्यते ।

तत्त्वविदां स्वस्वदृष्टार्थवादित्वम्

तस्यां प्रवर्तमानायां स्वसंकल्पेन सर्जने ॥ १५ ॥
तथा निवर्तमानायां स्वसंकल्पेन संहृतौ ।
विज्ञानबलवैषम्याद्ये ये तत्त्वविदो मुने ॥ १६ ॥
न्यूनाधिकविभेदेन यावतीर्ददृशुर्भिदाः ।
तावतीस्तावतीस्ते ते प्रोचुः शिष्याभिचोदिताः ॥
[3]अतश्चासर्वदृग्बुद्धिः संख्यासु प्रविमुह्यति ।
पितामहादयो ये च जगत्कार्याधिकारिणः ॥ १८ ॥
[4]तेषां न्यूनाधिभावोऽपि वक्तृभेदात् प्रकल्पितः ।
स्वातन्त्र्यमनियोज्यं तु विष्णोः षाड्गुण्यरूपिणः ॥
तद्बुद्धिरुचिवैचित्र्यादण्डपद्मादिसंभवः ।
[5]नानुयोजनमर्हन्ति परमात्मप्रवृत्तयः ॥ २० ॥

[1] स्वनिरूढे E. [2] प्रभा या सा B.
[3] अकथासर्व D. [4] देवान्यूना A C E F. [5] ननु D.

भगवत्प्रकारानन्त्यम्

स यथा चेष्टते सृष्टौ स्थितौ संहरणेऽपि वा ।
तथा तथा प्रकारास्ते ह्यनन्ताः कालवैभवात् ॥ २१ ॥

वादिनामेकैकप्रकारवादित्वम्

एवं प्रकारनानात्वे देवस्य हरिमेधसः ।
कश्चिदेकं परोऽन्यं तु प्रकारमपरोऽपरम् ॥ २२ ॥
धिया विदित्वा प्रोवाच शिष्याय हितकाम्यया ।

अतः शास्त्रवैविध्यम्

चित्रा सृष्ट्यादिशास्त्राणां प्रवृत्तिरत ईदृशी ॥ २३ ॥
[1]यथाद्यत्वे मनुष्याणां कर्मवैषम्यसंभवा ।
अहोरात्रादिभेदेषु सुखदुःखव्यवस्थितिः ॥ २४ ॥
[2]तथा ब्राह्मेष्वहःस्विष्टा सुखदुःखव्यवस्थितिः ।

ब्राह्मकल्पानां नानारूपत्वम्

केचिद्वाताकुला घस्रा ब्रह्मणो मुनिसत्तम ॥ २५ ॥
तथा वर्षाकुलाः केचित् केचिदातपसंकुलाः ।
प्रभूतशात्रवः केचित् केचित् सुखमनोहराः ॥ २६ ॥
अनेन निश्चयेनैव धियमास्थाय शाश्वतीम् ।
संस्तम्भयान्तरात्मानं व्यामोहस्ते विनश्यतु[3] ॥२७॥

[1] यया A B C E F.
[2] This line omitted A B C.
[3] विनश्यति A B C.

इति नानाविधाकारं क्रियाभूतिविभेदितम्[1] ।
निमित्तोत्पादकाकारं कारणं कथितं मुने ॥ २८ ॥

श्रुतार्थानुवादः

नारदः—

कारणं कथितं देव सर्वज्ञ वृषकेतन ।
या सा शक्तिर्जगद्धातुः कथिता समवायिनी ॥ २९ ॥
लक्ष्मीर्नाम द्विधा सा तु क्रियाभूतिविभेदिनी ।
या क्रिया नाम संकल्पः स सुदर्शननामवान् ॥ ३० ॥
भूतिर्नाम जगद्रूपा कालाव्यक्तपुमात्मिका ।
अशुद्धा शुद्धरूपा तु सा व्यूहविभवात्मिका ॥ ३१ ॥
क्रिया प्रवर्तिका भूतेः सा सुदर्शनरूपिणी ।
इत्येतद्दर्शितं तत्त्वं देवदेवेन मे श्रुतम् ॥ ३२ ॥

द्वितीयप्रश्नस्मारणम्

अधुना श्रोतुमिच्छामि द्वितीयं प्रश्नमीश्वर ।
आधारो नाम यः प्रोक्तो जगतां वृषभध्वज ॥ ३३ ॥

सुदर्शनस्य जगदाधारत्वम्

अहिर्बुध्न्यः—

शृणु नारद तत्त्वेन य आधार उदीर्यते ।
येनेदं ध्रियते विश्वं तन्तुना मणयो यथा ॥ ३४ ॥

[1] विभूतिदम् A B C E F J.

या सा शक्तिर्हरेराद्या लक्ष्मीर्नाम महामुने ।
या सा सर्वात्मनो विष्णोर्भावाभावानुयायिनी ॥३५॥
तस्या अल्पायुतांशांशः स्वस्वातन्त्र्यविजृम्भितः ।
क्रियाभूतिविभेदेन समुदेतीति वर्णितम् ॥ ३६ ॥
सुदर्शनेन क्रियया शङ्कुनेव छदो मुने ।
भूतिः सा ध्रियते [1]शश्वद्विस्तरं तत्र मे शृणु ॥ ३७ ॥

तत्र महारात्रिधरचक्रं प्रथमम्

संहृताखिलभूतस्य स्तैमित्यं ब्रह्मणो हि यत् ।
अप्ययः सा [2]महारात्रिस्तत्संकल्पेन धार्यते ॥ ३८ ॥
महारात्रिधरो[3] नाम तदरं वै सुदर्शनम् ।
[4]तदेकारं महच्चक्रमद्यत्वे चिन्त्यते सुरैः ॥ ३९ ॥

उषश्चक्रं द्वितीयम्

यत् सिसृक्षामयं रूपं ब्रह्मणः शक्तिसंभवम् ।
ज्वालेव वायुना वह्नेः संकल्पेन तदीर्यते ॥ ४० ॥
[5]उषश्चक्रं तदुद्दिष्टमरद्वितयभूषितम् ।
भूतिकामैरजस्रं तद्ब्रह्मणा चैव धार्यते ॥ ४१ ॥

[1] शश्वद्विस्तरेणात्र A B C E F J.
[2] महारात्रिः सा संकल्पेन A B C; महारात्रिः संकल्पेनैव E J.
[3] परो D.
[4] तदोंकारं महच्चक्रमाद्यत्वे A B C.
[5] उषचक्रम् B C D.

उदयचक्रं तृतीयम्

यः स संकर्षणोन्मेषो यो धारयति तं सदा।
साक्षादुदयचक्रं [1]तद्विज्ञानत्रितयात्मकम् ॥ ४२ ॥
स संकर्षणसंकल्पो ज्ञानकामैर्निषेव्यते।

ऐश्वर्यचक्रं चतुर्थम्

यः स प्राद्युम्न उन्मेष ऐश्वर्यमय ऊर्जितः ॥ ४३ ॥
वैष्णवेनैव [2]लाक्ष्मेण स संकल्पेन धार्यते।
तद्वै प्रद्युम्नसंकल्पमैश्वर्यमयमूर्जितम् ॥ ४४ ॥
सम्यक् चतुररं चक्रमैश्वर्यैस्था उपासते।

शक्तिमहाचक्रं पञ्चमम्

आनिरुद्धो य उन्मेषः शक्तितेजोविदीपितः ॥ ४५ ॥
संकल्पो ब्रह्मशक्त्युत्थस्तं धारयति सर्वदा।
तद्वै शक्तिमहाचक्रं पञ्चारं परिकल्पितम् ॥ ४६ ॥
शक्तितेजःसमृद्ध्यर्थं विश्वे देवा उपासते।

षडरचक्रं षष्ठम्

व्यूहान्तरसमाख्यातं केशवादिद्विषट्ककम् ॥ ४७ ॥
सुदर्शनेन ध्रियते येन संकल्परूपिणा।
षडरं तन्महाचक्रं व्यूहान्तरविभावकम् ॥ ४८ ॥

[1] तद्विज्ञातं त्रिकधारकम् A B C E F.
[2] लाक्ष्म्येण संकल्पेनैव E.

ऋत्वरं तत् समाख्यातं [1]व्रतकामा उपासते ।

महासुदर्शनचक्रं सप्तमम्

विभवो यः पुरा प्रोक्तः पद्मनाभादिरूर्जितः ॥ ४९ ॥
स येन ध्रियते विष्णोः संकल्पेन महामुने ।
महासुदर्शनं नाम द्वादशारं तदुच्यते ॥ ५० ॥
विभवान्तरसंज्ञं [2]तद्यच्छक्त्यावेशसंभवम् ।
[3]धृतं तद् द्वादशारेण तत्संकल्पेन चक्रिणा ॥ ५१ ॥

सहस्रारचक्रमष्टमम्

यत्तु तत् परमं व्योम यद् विष्णोः पदमूर्जितम् ।
सहस्रारेण चक्रेण तत्संकल्पेन धार्यते ॥ ५२ ॥
[4]एते सौदर्शना व्यूहाः समासेन प्रकीर्तिताः ।
आधाराधेयभावेन वर्तन्ते ते स्वयं मुने ॥ ५३ ॥
संकल्पः कोटिकोट्यंशः शक्तेर्भूतिस्तथा द्विधा ।
शक्तिः सा वैष्णवी [5]सत्ता बहुधैवं [6]प्रभासते ॥ ५४ ॥

इति श्रीपाञ्चरात्रे तन्त्ररहस्ये अहिर्बुध्न्यसंहितायां जगदाधारवर्णनं नाम अष्टमोऽध्यायः

आदितः श्लोकाः ५२०

[1] व्रतकामैरुपास्यते B C.
[2] यच्छक्त्यावेशादिसंभवम् D.
[3] युतम् E.
[4] एतत् A B C E F.
[5] शक्ता A B C F; सक्ता E.
[6] प्रकाशते D.

## अशुद्धजगदाधारनिरूपणं नाम नवमोऽध्यायः

### प्रथमं पौरुषचक्रम्

**अहिर्बुध्न्यः—**

**आधारः कथितः शुद्धः शुद्धा सा येन धार्यते ।**
**भूतिर्व्यूहादिरूपेण या सा देवी प्रवर्तते ॥ १ ॥**
**पुमाद्यवनिपर्यन्ता यथा शुद्धेतरात्मिका ।**
**सा येन धार्यते चक्रं तत्संकल्पमयं शृणु ॥ २ ॥**
**त्र्यरं तत् पौरुषं चक्रं पुरुषो येन धार्यते ।**

### शक्त्यादिचक्राणि

**चक्रं त्रिंशदरं प्रोक्तं शक्तिः सा येन धार्यते ॥ ३ ॥**
**तादृशं नैयतं चक्रं नियतिर्येन धार्यते ।**
**षडरं कालचक्रं तत् स कालो येन धार्यते ॥ ४ ॥**
**[1]सत्त्वं रजस्तमश्चैव धार्यन्ते यैर्महामुने ।**
**तानि त्वाधारचक्राणि त्र्यराणीति विदुर्बुधाः ॥ ५ ॥**
**चक्रमेकादशारं तु बुद्धिः सा येन धार्यते ।**

[1] J omits two lines from here.

अष्टारं तन्महाचक्रमहंकारस्य धारकम् ॥ ६ ॥
एकारं वैयतं चक्रं द्व्यरं तद्वायुधारकम् ।
त्र्यरं तैजसमाख्यातमाप्यं चतुररं मुने ॥ ७ ॥
पञ्चारं पार्थिवं चक्रं पृथिवी येन धार्यते ।
गुणचक्राण्यरैः सर्वाण्यङ्कितानि त्रिभिस्त्रिभिः ॥ ८ ॥
एकादशविधं चक्रमैन्द्रियं द्वियुगारकम् ।
इयमाधारशक्तिस्ते प्रोक्ता प्रातिस्विकी मुने ॥ ९ ॥

महाविभूतिचक्रम्

एकधारं महच्चक्रं महाभूतिकरं[1] शृणु ।
महाकेतुपटी यद्वद्वितता व्योम्नि धार्यते ॥ १० ॥
अनिशं [2]पावमानेन पवमानेन वै मुने ।
संकर्षणादिभूम्यन्ता विष्णुशक्तिमयी तथा ॥ ११ ॥
निरालम्बे [3]पटे भूतिः संकल्पेनैव धार्यते ।
तत्संकल्पमयं चक्रमनन्तारं महामुने ॥ १२ ॥
दिव्यं महाविभूत्याख्यमवाङ्मनसलङ्घितम् ।
अप्रमेयमनाद्यन्तं भावाभावस्वलक्षणम् ॥ १३ ॥
अनन्तारमपर्यन्तं पर्यन्तकुलसंकुलम् ।
ब्रह्माण्डकोटिकोटयोघकोटयर्बुदविभावितम्[4] ॥ १४ ॥

[1] धरम् D.
[2] पञ्चमानेन A B C; पवमानेन E J.
[3] पदे सर्वैः A B C J.
[4] विभासितम् J.

[1]महाभूतसहस्रौघसहस्रौघविभावनम् ।
ज्योतिरिङ्गणसच्छायैरिन्द्रियैः कोटिकोटिशः ॥ १५ ॥
अङ्कितं क्षुद्रमेघाभैर्ब्रह्माण्डैरनुचित्रितम् ।
महाभूतमयीभिस्तु क्वचिदद्भिरिवाततम् ॥ १६ ॥
विप्रुड्भिरिव वर्षाणां विततं वैष्णवं पदम् ।
महाभूतैः क्वचिद्दीप्तं [2]ज्योतिर्भिरयुतायुतैः ॥ १७ ॥
वीजितं भूतपवनैर्व्यजनोत्थैरिव क्वचित् ।
क्षुद्रावकाशसंकाशैराकाशैः कोटिकोटिशः ॥ १८ ॥
छिद्रितं विविधाकारैरहंकारैरहंकृतम् ।
अमहद्भिर्महद्भिश्च कोटिकोटिविभागिभिः ॥ १९ ॥
अङ्कितं विविधाकारैस्तमोभिर्बहुलं कृतम् ।
क्वचिद्द्विविधसंतापचलनैरयुतायुतैः ॥ २० ॥
रजोभी रञ्जितं क्षुद्रैर्विशदैर्लघुभिः क्वचित् ।
अङ्कितं बहुभिः सत्त्वैर्विमलैः कोटिकोटिशः ॥ २१ ॥
[3]त्रिविधैः षट्प्रकारैश्च द्विषट्कप्रविभागिभिः[4] ।
चतुर्विंशतिसंभेदैस्त्रिंशदर्धद्वयोज्ज्वलैः[5] ॥ २२ ॥
षष्टिषट्कसमाकीर्णैः कोटिकोटिविभागिभिः[6] ।
कालैरनेकसाहस्रैरयुतायुतसंकुलैः ॥ २३ ॥

1 महासहस्रकोट्योघ B.
2 ज्योत्स्नाभिः A C J.
3 द्विविधैः J.
4 प्रतिभागिभिः E J.
5 द्वयोर्जितैः J.
6 विभागशः A B C E F.

कीर्णं नियतिरूपेण नानानियमनात्मना ।
कोटिकोटिसहस्रौघकोटिकोटिगुणेन च ॥ २४ ॥
शक्त्या नानाविधाकारमधुकोशनिभात्मना ।
[1]निष्यन्दमानतत्त्वौघस्वरूपमधुविप्रुषा[2] ॥ २५ ॥
कोटिकोटिसहस्रौघनियुतायुतरूपया ।
स्निग्धं क्वचिदिवात्यर्थं पुंसा[3] क्वचिदिवास्थितम् ॥२६॥
शुक्लरक्तासिताकारकर्मकल्पितरूपिणा ।
अनेकमशकाकीर्णोदुम्बरप्रतिमात्मना ॥ २७ ॥
नानाजीवविभेदेन नानाफलविधाजुषा ।
शुभाशुभोभयाकारवासनाजटिलात्मना ॥ २८ ॥
अनेकक्लेशकोशेन पुरुषेणास्थितं क्वचित् ।
निर्मलानन्दसंबोधमहासत्तामयेन च ॥ २९ ॥
नित्यैर्मुक्तैर्निराबाधैर्निर्मलानन्दलक्षणैः ।
साक्षात् पश्यद्भिरीशानं नारायणमनामयम् ॥ ३० ॥
देव्या लक्ष्म्या समासीनं पूर्णषाड्गुण्यदेहया ।
नित्योदितैर्नित्यतृप्तैरतिक्रान्तैस्तमो महत् ॥ ३१ ॥
आत्मभिः शोभितेनैवं [4]वरेण नियताङ्कितम् ।
षाड्गुण्यविग्रहैर्व्यूहैः[5] पुरुषैः पुष्करेक्षणैः ॥ ३२ ॥

[1] निष्यन्दमानसत्त्वौघ F.
[2] विप्रुषः A C E F J.
[3] पुंसा च क्वचिदास्थितम् D J.
[4] परेण E F J.
[5] पुण्यैः J.

आस्थितं जगदुत्पत्तिस्थितिसंहृतिकारिभिः ।
इति व्याप्तवतीमेतां विभूतिं वैष्णवीं पराम् ॥ ३३ ॥
चित्राम्बरधरां[1] सम्यग्दधदात्मानमात्मना ।
संकल्पो वैष्णवो योऽयं मणीन् सूत्रमिवास्थितः[2] ॥
तदनन्तारमव्यक्तं महच्चक्रं सुदर्शनम् ।
[3]भावितं स्मृतिमात्रेण भावयत्यखिला गतीः ॥ ३५ ॥

संहृतिचक्रम्

यो[4] जिहीर्षामयो नित्यः संकल्पो वैष्णवः परः ।
अनन्तारमपर्यन्तं तत्संहृतिसुदर्शनम् ॥ ३६ ॥
एक एव तु संकल्पो रूपैर्नानोपगीयते ।
अनन्तमपरिच्छेद्यमप्रमेयमनूपमम् ॥ ३७ ॥
अतरङ्गार्णवाकारमनभ्राम्बरसंनिभम् ।
[5]एकं तत् परमं ब्रह्म षाड्गुण्यस्तिमितं महत् ॥ ३८ ॥
भावाभावमयी तस्य शक्तिरेकानपायिनी ।
तद्धर्मधर्मिणी दिव्या ज्योत्स्नेव हिमदीधितेः ॥ ३९ ॥
तस्य संकल्पसंकल्पो[6] रूपव्याप्रियमाणता ।
स्तैमित्यस्थितिसंकल्पस्तिमितं तत् सुदर्शनम् ॥ ४० ॥

1 निभां B C E J.
2 स्थितान् A B C.
3 भवितम् B C.
4 तत्संहृतिमयो D.
5 एकान्तं परमं ब्रह्म षाड्गुण्यं निर्मलं महः A B C E F J.
6 संकल्पौ रूपां वा D.

चलनचक्रम्

प्रभवे चाप्यये वापि स्थितौ वापि महामुने ।
[1]चलत्तापूर्वरूपं यः संकल्पस्तत्र वर्तते ॥ ४१ ॥
चलनं नाम तच्चक्रं सुदर्शनमयं महत् ।

तस्य त्रैविध्यम्

भेदास्त्रयोऽस्य विज्ञेयास्तन्त्रविज्ञानपारगैः ॥ ४२ ॥
महासृष्टिमयं तत्र समासव्यासलक्षणम् ।
नानाशक्तिसमाकीर्णं तच्च ते कथितं पुरा ॥ ४३ ॥
महासंहारचक्रं च समासव्यासलक्षणम् ।
तादृगेवात्र विज्ञेयं तच्च ते दर्शितं पुरा ॥ ४४ ॥
[2]स्थितिचक्रं तु यन्मध्ये समासव्यासलक्षणम् ।
तस्य वक्ष्यामि विस्तारं यत्प्रमाणतया स्थितम् ॥
यथा [3]ह्येको नटो भावैर्नानारूपैर्विभज्यते ।
तथा संकल्प एवैकस्तैस्तैर्भेदैर्विभज्यते ॥ ४६ ॥

इति श्रीपाञ्चरात्रे तन्त्ररहस्ये अहिर्बुध्न्यसंहितायाम् अशुद्धजगदाधार-
निरूपणं नाम नवमोऽध्यायः

आदितः श्लोकाः ५६६

1 चलच्चित्तापूर्वरूपः संकल्पस्तत्र वर्तते A B C E F J.
2 J omits two lines from here.
3 ह्येकं नभो A C J.

## अर्थात्मकप्रमाणनिरूपणं नाम दशमोऽध्यायः

नारदः—

भगवन् देवदेवेश भवानीजीवितेश्वर ।
लोकनाथ जगन्नाथ देवानामभयप्रद ॥ १ ॥
नमस्ते त्रिपुरघ्नाय तत्त्वविज्ञानसिन्धवे ।
दशाव्ययाय ते नित्यं षडङ्गाय नमो नमः ॥ २ ॥
यदेतदुदितं नित्यं जगत्कारणमव्ययम् ।
यच्चाधारतया प्रोक्तं संकल्पाख्यं सुदर्शनम् ॥ ३ ॥
तदेतदखिलं देव विष्णुसंकल्पजृम्भितम् ।
समासव्यासरूपेण[1] तत्त्वतो मेऽवधारितम् ॥ ४ ॥
इदानीं श्रोतुमिच्छामि विस्तरेणान्तकान्तक ।
किं तत् प्रमाणमित्युक्तं कीदृशं[2] किंविधं च तत् ॥५॥
किमर्थं किंमयं देव तन्मे विस्तरशो[3] वद ।
वक्ता सर्वस्य गुह्यस्य त्वदन्यो नैव विद्यते ॥ ६ ॥

[1] भेदेन तत्त्वमेवोपधारितम् A B C E F J.
[2] कीदृक्कतिविधं A B C E F J. [3] विस्तरतो E F J.

प्रमाणनिरूपणप्रतिज्ञा

अहिर्बुध्न्यः—

शृणु नारद तत्त्वेन प्रमाणस्थितिमव्ययाम् ।
विश्वं यत्रैव [1]विश्रान्तं सदेवासुरमानुषम्[2] ॥ ७ ॥

प्रमाणस्वरूपनिरूपणम्

मध्यमो यः स संकल्पो विष्णोः सृष्टवतो जगत् ।
शाश्वते [3]तिष्ठति व्यक्तं जगन्मार्ग इतीदृशः[4] ॥ ८ ॥
तत् प्रमाणमिति प्रोक्तं स्थितिचक्रं महामुने ।

प्रमाणविभागः

समष्टिव्यष्टिभावेन तद् द्विरूपं विभाव्यते ॥ ९ ॥

समष्टिप्रमाणस्वरूपम्

ऐकरूप्येण संकल्पो यः सर्वविषये[5] स्थितः ।
महास्थितिमयं चक्रं तदेतत् कीर्तितं मुने ॥ १० ॥

व्यष्टिप्रमाणस्वरूपम्

[6]तत्त्वेयत्ता समस्तात्मन् यस्मिन्नायततेऽखिला[7] ।
प्रातिस्विकी व्यवस्था या यस्य सत्त्वस्य यादृशी ॥

[1] विश्वस्तम् D.
[2] मानवम् D.
[3] तिष्ठतु D J.
[4] इतीदृशम् A B C D E F J.
[5] विषयस्थितिः E.
[6] तत्तेयत्ता A B C E F.
[7] अखिलम् D.

[1]परिणामक्रियासाध्यस्थानरूपादिगोचरा ।
तद्वद्व्यष्टिमये चक्रे प्रमाणे सा व्यवस्थिता ॥ १२ ॥
एकचेष्टादिको योऽर्थो यश्च सृष्ट्यादिलक्षणः ।
शास्त्रशास्त्रार्थतत्साध्यव्यवस्थात्मा च यो मुने ॥
वासुदेवादिके व्यूहे स्वस्वसंकल्पसंभवः ।
तदाद्यं भगवद्रूपं चक्रं स्थितिमयं महत् ॥ १४ ॥
प्रमाणं येन तत् सर्वमियत्तां प्रतिपद्यते ।

तस्यैव विस्तरेण प्रतिपादनम्

यच्च तत् परमं व्योम दिव्यसंभोगलक्षणम् ॥ १५ ॥
स्थितिप्रमाणरूपेण तत्संकल्पेन वै हरेः ।
अनियत्तमसंकोचमनन्तं व्यवतिष्ठते ॥ १६ ॥
[2]अचेतनानां तत्त्वानां या सा योनिः परा मुने ।
कालकाल्यमयी शक्तिरियत्ता तत्त्रिधा परा ॥ १७ ॥
स्वरूपकार्यभावादौ सा प्रमाणनिबन्धना ।
नियतिः काल इत्येते द्वे [3]कालस्य भिदे मते ॥ १८ ॥
शुद्धाशुद्धमये मध्ये यः पुमान् कूटवत् स्थितः ।
नानाजीवमहायोनिस्तस्य या स्थितिरव्यया ॥ १९ ॥

[1] परिणामक्रियाङ्गस्य A B C J.

[2] अचेतनानामित्यादिकं श्लोकद्वयं D पुस्तके "प्रमाणे व्यवतिष्ठते" (श्लो. २०) इत्येतदनन्तरं दृश्यते.

[3] कालस्यापि हि ते मते A B C E F.

इयत्ता या च सा चक्रे प्रमाणे व्यवतिष्ठते ।
इयत्ताया भिदा या च कलाकाष्ठादिगोचरा ॥ २० ॥
सा प्रमाणमये चक्रे [1]सर्वाप्यायतते मुने ।
सत्त्वादीनां स्वरूपं यद्या प्रवृत्तिः फलं च यत् ॥ २१ ॥
इयत्ता तत्र सर्वत्र सा प्रमाणसुदर्शनात् ।
यद्रूपत्रितयं बुद्धेर्धर्माद्या या च विक्रिया ॥ २२ ॥
व्यापारस्पन्दनिर्णीतिर्निमेषात्मा च योऽखिलः ।
योऽत्रेयत्तामयो भावः स प्रमाणसुदर्शनात्[2] ॥ २३ ॥
अभिमानो द्विधा योऽपि संरम्भो योऽप्यहंकृतेः ।
यश्च कामादिको भावस्तत्रेयत्तास्थितिश्च या ॥ २४ ॥
सा प्रमाणमये चक्रे संकल्पेऽस्मिन् सुदर्शने ।
पञ्चानां पञ्चकं यच्च संकल्पानामवस्थितम् ॥ २५ ॥
तादृशं[3] च विकल्पानां तदेतद् द्वितयं मुने ।
इयत्ता या स्थिता व्याप्य सा प्रमाणसुदर्शनात् ॥२६॥
तानवं पाटवं यच्च यच्चालोचनपञ्चकम् ।
शान्तघोरादिकं[4] रूपं यच्च धीन्द्रियपञ्चके ॥ २७ ॥
वचनादानविक्रान्तिमोदोत्सर्गमयं च यत् ।
शान्तघोरादिकं रूपं यत्कर्मेन्द्रियपञ्चके ॥ २८ ॥

[1] सर्वाप्यायतता A E F; सर्वाप्याययता B C.　[2] नम् A B C; नः E F J.
[3] तादृशाम् E.　[4] घोरादिरूपं यत् यच्च B E F.

तत्रेयत्तामयं रूपं यच्च स्थितिमयं वपुः ।
प्रमाणे वैष्णवे सर्वं तत्संकल्पसुदर्शने ॥ २९ ॥
व्यूहावकाशलघुताचेष्टाप्रेरणशोषणम् ।
[1]व्यूहावकाशव्यक्तार्द्रस्नेहक्षुद्रत्वमप्युत ॥ ३० ॥
स्थैर्यपार्थिवकाठिन्यमित्येतद्भौतिकं वपुः ।
एकद्वित्रिचतुःपञ्चगुणव्यूहमयी स्थितिः ॥ ३१ ॥
[2]यैस्तद्व्याप्य स्थितेयत्ता सा प्रमाणसुदर्शनात् ।
तत्त्वे तत्त्वे च मर्यादा या या शश्वदवस्थिता ॥ ३२ ॥
सा सा प्रमाणचक्रस्य संकल्पस्य हरेर्गतिः ।
इतीयं स्थितिमर्यादेयत्ता चक्रे [3]प्रकीर्तिता ॥ ३३ ॥
विष्णुसंकल्पसंभूतां स्थितिमन्यां मुने शृणु ।
प्रतिबन्धनिरासेन या स्वभावगतिर्मुने[4] ॥ ३४ ॥
तत्त्वानां तात्त्विकानां च सा स्थितिः कथ्यते मुने ।
गुणान्तरानुग्रहेण यः सत्त्वोन्मेष ऊर्जितः ॥ ३५ ॥
धर्मज्ञानादिरूपोऽसौ सुदर्शनसमीरितः ।
परिमाणविशेषः स [5]बोध्यस्त्रैलोक्यधारकः ॥ ३६ ॥
शनैराचर्यमाणोऽसौ सत्त्वोज्ज्वलितबुद्धिभिः ।
[6]बिभर्ति रोदसी शश्वदन्नवृष्ट्यादिदानतः ॥ ३७ ॥

1 रूपं प्रकाशव्यक्तार्द्रस्नेहचक्षुस्स्वयं प्लुता A C E J.
2 यत्र व्याप्य A B C E F.
3 प्रतिष्ठिता A B C E F.
4 कृतिः D.
5 बद्धः A; बौद्धः E F.
6 बिभर्तीत्याद्यमर्धचतुष्टयं D पुस्तके त्यक्तम्.

गुणान्तरानुग्रहेण तमसो यः स उद्यमः ।
अधर्मादिस्वरूपोऽसौ विष्णुसंकल्पचोदितः ॥ ३८ ॥
शनैराचर्यमाणोऽसौ तमोमलिनबुद्धिभिः ।
अन्नवृष्ट्यादिनाशेन विनाशयति रोदसी ॥ ३९ ॥
सत्त्वस्योपद्रवः शश्वदतोऽन्यस्माद्गुणद्वयात् ।

शस्त्रव्यूहप्रतिपादनम्

धर्मसंस्थापनायाथ निरसिष्यन्नधार्मिकान् ॥ ४० ॥
जनार्दनत्वमीशानो यदा विष्णुः प्रपद्यते ।
तदा देवस्य संकल्पः सुदर्शनसमाह्वयः ॥ ४१ ॥
आयुधादिस्वरूपेणाकारत्वं प्रतिपद्यते ।
चक्रलाङ्गलसौनन्दशङ्खशार्ङ्गशरात्मना ॥ ४२ ॥
खड्गखेटकरूपेण पाशाङ्कुशपरश्वधैः ।
दण्डकुन्तस्वरूपेण दम्भोलिमुसलात्मना ॥ ४३ ॥
शतवक्राग्निरूपेण कुन्तशक्तिमयात्मना ।
तथा शूलस्वरूपेण खट्वाङ्गाद्यायुधात्मना ॥ ४४ ॥
एवं नानाविधै [1]रूपैस्तत्संकल्पविकल्पितैः ।
उदेति [2]जगतो वृद्ध्यै नारायणकराश्रयी ॥ ४५ ॥
इति शस्त्रमयो व्यूहो लेशतस्ते निदर्शितः ।
अपरोऽस्त्रमयो व्यूहः सौदर्शन उदीर्यते ४६ ॥

[1] रूपैस्तत्तत्कल्प D.    [2] जगतामृध्यै D.

अस्त्रव्यूहप्रतिपादनम्

रूपमास्थाय दिव्यं तदङ्गप्रत्यङ्गभूषणम् ।
ब्रह्मक्षत्रादिभावेन मुखबाहूरुपादतः ॥ ४७ ॥
ब्रह्मास्त्रादिमयं व्यूहं प्रवर्तकनिवर्तकम् ।
सृजत्यशेषरक्षार्थं षष्टिद्वितयसंमतम् ॥ ४८ ॥
प्रजापतिपितृब्रह्मदेवेभ्यश्च तथा तथा ।
दिव्यो नानाविधाकारः समुदेत्यस्त्ररूपवान् ॥ ४९ ॥
ब्रह्मदेवर्षिराजर्षिष्वपि मन्त्रमयात्मसु ।
अनुव्याहारशापादिरूपेणैवावतिष्ठते ॥ ५० ॥
न तदस्ति पृथिव्यां वा दिवि वा मुनिसत्तम ।
निग्रहेऽनुग्रहे वापि यत्रायं नैव साधनम् ॥ ५१ ॥
प्रमाणव्यूह एतावानर्थाकारो निर्दशितः ।
सुदर्शनस्य देवस्य शब्दाकारमथो शृणु ॥ ५२ ॥

इति श्रीपाञ्चरात्रे तन्त्ररहस्ये अहिर्बुध्न्यसंहितायाम् अर्थात्मक-
प्रमाणव्यूहनिरूपणं नाम दशमोऽध्यायः

आदितः श्लोकाः ६१८

## शब्दात्मकप्रमाणव्यूहनिरूपणं नाम एकादशोऽध्यायः

नारदः—

[1]नमः समस्तगीर्वाणसुखसौभाग्यदायिने ।
शंकराय गिरीशाय गौरीदयित ते नमः ॥ १ ॥

शब्दात्मकप्रमाणप्रश्नः

श्रुतः प्रमाणरूपोऽयं व्यूहार्थो यन्मयाखिलः ।
शब्दाकारो य उद्दिष्टस्तं मे वद [2]सुरेश्वर ॥ २ ॥

तत्प्रतिविवक्षयोपोद्घातः

अहिर्बुध्न्यः—

आदिसर्गे पुरावृत्ते नानाभावविभूषिते ।
आसीच्छक्तिमतो विष्णोरियं चिन्ता सुखोदया ॥

आदिसर्गे भगवतश्चिन्ताप्रकारः

विपुलेयं कृता सृष्टिर्मया सत्त्वगुणोत्तरा ।
प्रत्यक्षसर्वधर्मार्था [3]निराबाधा सुखोत्तरा ॥ ४ ॥
प्रजेयमभिनिर्वृत्ता [4]देवर्षिब्रह्मसंकुला ।

[1] नमः सर्वज्ञ गीर्वाणशुभ A B C E F J.
[2] महेश्वर D.
[3] निरायासा D.
[4] देवब्रह्मर्षि D.

सत्त्वविवृद्धया परमपुरुषप्राप्तिपूर्वकं स्वरूपाविर्भावः

**तत्त्वज्ञानसमायोगात् सद्धर्मकरणादपि ॥ ५ ॥**
**अचिरेणैव मां प्राप्य स्वीयं भावं भजिष्यते ।**

रजस्तमोविवृद्धया सत्त्वह्रासः

**रजस्तमोगुणोद्रेकः [1]कालेनैव भविष्यति ॥ ६ ॥**
**तदुन्मेषवशेनैव सत्त्वमप्युपचोष्यते ।**

तदा दैत्याद्याविर्भावः

**तदा प्रादुर्भविष्यन्ति दैत्यदानवराक्षसाः ॥ ७ ॥**

तैर्वैदिकमर्यादाविलोपनम्

**तैरियं सात्त्विकी दिव्या मर्यादा चालयिष्यते ।**

ज्ञानप्रमोषात् धर्मतिरोधानम

**रजस्तमोगुणोन्मेषात् सम्यग्ज्ञाने विनाशिते ॥ ८ ॥**
**ज्ञानहेतुः स धर्मोऽपि तिरोधानं गमिष्यति ।**

ततः प्रजाक्षोभः

**ततश्चेयमनाधारा प्रजाशुद्धा विनङ्क्ष्यति ॥ ९ ॥**

तदा भगवदवताराणां लब्धावकाशता

**तत्र रूपैरनेकैर्मे कृत्यं शश्वद्भविष्यति ।**

[1] कालेन तु D.

तेषूपकरणापेक्षा नानाकारा भविष्यति ॥ १० ॥

धर्मस्थापननिश्चयः

आविश्याविश्य भूतानि स्वेन रूपेण मायया ।
तैस्तैः साधनसंभेदैर्निरस्य सुकृतद्विषः ॥ ११ ॥
सुकरा धर्ममर्यादा तत्र तत्र भविष्यति ।

अधर्मनिराससाधनद्वैविध्यम्

साधनं च द्विधा कार्यं धर्मद्वेषिनिराकृतौ ॥ १२ ॥
शस्त्रास्त्रव्यूहरूपेण शास्त्ररूपेण चैव हि ।

भगवत्संकल्पात् तदुभयोत्पत्तिः

[1]इत्युक्त्वार्थत्वरूपं हि शस्त्रास्त्रौघसमाकुलम् ॥१३॥
व्यूहं ससर्ज संकल्प्य स्वेन संकल्पतेजसा ।
स च सौदर्शनो व्यूहो मर्यादाधारणक्षमः ॥ १४ ॥
प्रमाणरूप उद्दिष्टो वक्ष्यते च तथा तथा ।
[2]प्रमाणरूपशास्त्रार्थः संकल्पो वैष्णवो हि यः ॥ १५ ॥
उदितो ब्रह्मणस्तस्माद्यथा तदवधारय ।

आदिशास्त्रस्वरूपवर्णनम्

संकल्पमयमेवैकं [3]सकलान्तस्तमोनुदम् ॥ १६ ॥

[1] इत्युक्तार्थस्वरूपं स शब्दशस्त्रौघसंकुलम् A B C; शब्दशास्त्रौघ E F.
[2] प्रमाणरूपशास्त्रात्मा A B C F; प्रमाणरूपः शास्त्रार्थः E.
[3] संकल्पं तत्तमोनुदम् A B C E F J.

निर्घातशब्दवद्व्योम्नः शास्त्रमेकमभूत् तदा ।
वर्णार्थैः संभृतैर्वर्णैश्चिदानन्दमहोर्मिभिः ॥ १७ ॥
विष्णुशक्तिसमुद्भोत्थैर्मणिभिर्मौक्तिकैरिव ।
प्रोतं सौदर्शनं रूपं विष्णोः संकल्पकल्पितम् ॥ १८ ॥
तद्विज्ञानमयं शास्त्रं सद्धर्मप्रतिपादकम् ।
नियुताध्यायि यत् प्रोक्तं कामपालेन शाश्वतम् ॥१९॥

तस्य सर्वशास्त्रार्थगर्भितत्वम्

पुरुषार्थैश्चतुर्भिस्तदन्वितं हेतुसंकुलम् ।
ऋग्यजुःसामभिर्जुष्टमङ्गिरोभिरथर्वभिः ॥ २० ॥
पदवाक्यप्रमाणार्थैर्विकल्पैर्बहुभिश्चितम् ।
अलंकृतं शुभैस्तैस्तैः समयैर्दिव्यमानुषैः ॥ २१ ॥
तैस्तैर्विकल्पितैः कल्पैश्छन्दोभिर्विविधैर्वृतम्[1] ।
कालोपग्रहसंख्याभिः प्रकृतिप्रत्ययैः स्वरैः ॥ २२ ॥
विभक्तिकारकैर्लिङ्गैः [2]स्वैरैः प्रकृतिसन्धिभिः ।
संज्ञाभिः साधिकाराभिर्भूषितं परिभाषया ॥ २३ ॥
आदेशैरागमैर्लोपैर्विकारैश्चाप्युपाधिभिः ।
वृत्तिभिर्विविधाभिश्च वाक्यैरुपपदैरपि ॥ २४ ॥

1 स्मृतम् A B C E F.
2 रूपैः E F J.

अव्ययैरुपसर्गैश्च नामाख्यातनिपातकै[1]: ।
मात्रावृत्तिस्वरबलैरभिनिष्ठानसामभिः ॥ २५ ॥
यमरङ्गविभागैश्च भूषितं पदभङ्गिभिः ।
वर्णागमविकल्पैश्च तथा वर्णविपर्ययैः ॥ २६ ॥
कल्पनाभिश्च [2]लघ्वीभिर्विकृतेः प्रकृतेरपि ।
निरुक्तकल्पैर्विविधैर्नानानिगमनैरपि ॥ २७ ॥
[3]ग्रहनक्षत्रराशिस्थैर्विकल्पैर्गणनोत्थितैः ।
होरास्कन्धविकल्पैश्च विधानैः फलकल्पितैः ॥ २८ ॥
विध्यर्थवादमन्त्रोत्थैर्विचारैः [4]कर्मकल्पनैः ।
अङ्गयुक्तिक्रमोहैश्च तन्त्रवापातिदेशनैः ॥ २९ ॥
अधिकारैरनेकैश्च विचारैर्वाक्यगोचरैः ।
प्रमाणकल्पितैर्न्यायैर्निग्रहच्छलजातिभिः ॥ ३० ॥
द्रव्यकर्मविकल्पैश्च गुणसामान्यकल्पनैः[5] ।
चातुर्होत्रविकल्पैश्च चातुर्वैद्यविजृम्भितैः[6] ॥ ३१ ॥
चातुराश्रम्यकल्पैश्च चातुर्वर्ण्यविकल्पितैः ।
संस्कारकल्पैर्विविधैर्नित्यकाम्यक्रियाक्रमैः ॥ ३२ ॥
इतिहासपुराणाभ्यां विविधाभ्यां समन्वितम् ।
विविधैश्च प्रसंख्यानैः स्वप्रकृत्यादिकल्पितैः ॥ ३३ ॥

[1] निपातनैः A. [2] बह्वीभिः A B C J; लध्वीभिः प्रकृतेर्विकृतेरपि D.
[3] ग्रहनक्षत्रराशीभिः A B C E F J. [4] मन्त्रकल्पनैः B C D.
[5] कल्पितैः D J. [6] विकल्पितैः A B C E F.

पुमीश्वरविकल्पैश्च परिणामविकल्पितैः ।
अवस्थालक्षणव्याख्याधर्मक्लृप्तिविचित्रितम्[1] ॥३४॥
प्रमाणानां ससर्गाणां नानाकल्पनयान्वितम् ।
[2]लेपालेपविचारैश्च पुरुषाव्यक्तगोचरैः ॥ ३५ ॥
तत्त्वतात्त्विककल्पैश्च नानागतिविचिन्तनैः ।
मुक्तिक्रमविचारैश्च ख्यातिकल्पैरनेकशः ॥ ३६ ॥
ज्ञानाज्ञानसमाख्यातगुणदोषविचारणैः ।
गुणत्रयविकल्पैश्च [3]सर्गसंयोगचिन्तनैः ॥ ३७ ॥
[4]अन्वितं विविधैः सांख्यैः प्रसंख्यानकृतक्रमैः ।
योगप्रकारकल्पैश्च वृत्तीनां कल्पनैरपि ॥ ३८ ॥
अभ्यासकल्पैर्विविधैश्चातुर्वैराग्यकल्पनैः ।
अन्तरङ्गबहिर्भूतयोगाङ्गपरिचिन्तनैः ॥ ३९ ॥
क्लेशकर्मविपाकानामाशयानां च वर्णनैः ।
तापसंस्कारचिन्ताभिर्दुःखभेदविचिन्तनैः ॥ ४० ॥
तैस्तैश्चतुरधिष्ठानकल्पनैः [5]कल्पितं पृथक् ।
उपादेयस्य हेयस्य हानोपादानयोरपि ॥ ४१ ॥
स्वरूपचिन्तनैश्चित्रैर्भोगकामविकल्पनैः[6] ।

1 कर्मक्लृप्तिविचित्रितम् A B C; धर्मकल्पविचित्रितम् J.
2 तावत्तावद्विचारैश्च J.
3 परिणामविकल्पनैः D.
4 आस्थितम् D.
5 परिकल्पितम् B C.
6 योगकामविकल्पनैः D.

क्रियायोगैरनेकैश्च चित्तसंस्कारसाधनैः ॥ ४२ ॥
सिद्धिभिश्च विचित्राभिश्चित्तस्थाभिरलंकृतम् ।
पतिपाशपशुव्याख्याविकल्पैर्हेतुचित्रितैः ॥ ४३ ॥
शुद्धाध्वकल्पनाभिश्च क्रियाज्ञानविभेदतः ।
अर्थपञ्चकचिन्ताभिरनेकाभिरलंकृतम् ॥ ४४ ॥
शक्तिपञ्चकचिन्ताभिर्मलत्रयविचारणैः ।
भोगोपकरणाख्यानैः पुंसां रूपविकल्पनैः ॥ ४५ ॥
दीक्षाप्रतिष्ठाकल्पैश्च धर्मैः पाशुपतैरपि ।
इति नानाविधाकारबुद्धिकल्पविचित्रया ॥ ४६ ॥
युक्तं कल्पनया शश्वत् क्लृप्तनानाधिकारया ।
अधिकारेण सद्धर्मान् व्याचक्षाणमनेकधा ॥ ४७ ॥
नियुताध्यायकं पूर्वमासीत् संकर्षणोदितम् ।
संकल्पमयमाद्यस्य विष्णोः संकल्पजात् किल ॥४८॥

तस्य शास्त्रस्य भगवत्प्रीतिहेतुत्वम्

तेन शास्त्रेण ते दिव्या मनवो मानवाश्च ते ।
ये प्रोक्ता आदिसर्गे ते तथा मानवमानवाः ॥ ४९ ॥
[1]सत्क्रियाभिरनल्पाभिर्नारायणमतोषयन् ।

तस्य शास्त्रस्य मन्दप्रचारता

अथ कालविपर्यासाद्युगभेदसमुद्भवे ॥ ५० ॥

[1] सत्क्रियाभिरकल्पाभिः D.

त्रेतादौ सत्त्वसंकोचाद्रजसि प्रविजृम्भिते ।
कामं कामयमानेषु ब्राह्मणेषु महात्मसु ॥ ५१ ॥
मन्दप्रचारमासीत् तच्छासनं यत् सुदर्शनम् ।

वाच्यायनादिभिस्तच्छास्त्रविभजनम्

ततो मोहाकुले लोके लोकतन्त्रविधायिनः ॥ ५२ ॥
संभूय लोककर्तारः कर्तव्यं समचिन्तयन् ।
अपान्तरतपा नाम मुनिर्वाक्संभवो हरेः ॥ ५३ ॥
कपिलश्च पुराणर्षिरादिदेवसमुद्भवः ।
हिरण्यगर्भो लोकादिरहं पशुपतिः शिवः ॥ ५४ ॥
एते तप्त्वा तपस्तीव्रं वर्षाणामयुतं शतम् ।
आदिदेवमनुज्ञाप्य देवदेवेन चोदिताः ॥ ५५ ॥
सुदर्शनस्य लेशेन तत्संकल्पेन संयुताः ।
विज्ञानबलमासाद्य [1]धर्माद्देवप्रसादजात् ॥ ५६ ॥
आविर्भूतं तु तच्छास्त्रमंशतस्ते ततक्षिम ।

तत्र वाच्यायनेन वेदविभजनम्

ततश्च भगवान्पूर्वमपान्तरतपा मुनिः ॥ ५७ ॥
हरेर्वाच्यायनः[2] पुत्रो यावदात्तं च वै ततः ।
उदभूत् तत्र धीरूपमृग्यजुःसामसंकुलम् ॥ ५८ ॥
विष्णुसंकल्पसंभूतमेतद्वाच्यायनेरितम् ।

[1] धर्मं देवप्रसादजम् D. [2] वात्स्यायनः B C D.



कपिलेन सांख्यविभजनम्

ततश्च कपिलः शास्त्राद्यावदंशमुदारधीः ॥ ५९ ॥
तत् सांख्यमभवच्छास्त्रं प्रसंख्यानपरायणम् ।

हिरण्यगर्भेण योगशास्त्रविभजनम्

हिरण्यगर्भो लोकादिर्यत् ततश्चादिशासनात् ॥ ६० ॥
यमाद्यङ्गमभूदेतद् दिव्यं योगानुशासनम् ।

शिवेन पाशुपतविभजनम्

अहं ततश्च यच्छास्त्रादंशान्नानाव्रताकुलात् ॥ ६१ ॥
अभूत् पाशुपताख्यं तत् पशुपाशविमोचनम् ।

भगवता पाञ्चरात्रविभजनम्

सदागममयात् तस्मात् केवलाद् दिव्यशासनात् ॥६२॥
निर्ममे सारमुद्धृत्य स्वयं विष्णुरसंकुलम् ।
तत् परव्यूहविभवस्वभावादिनिरूपणम् ॥ ६३ ॥
पञ्चरात्राह्वयं तन्त्रं मोक्षैकफललक्षणम् ।
सुदर्शनाह्वयो योऽसौ संकल्पो वैष्णवः परः ॥ ६४ ॥
स स्वयं बिभिदे तेन पञ्चधा पञ्चवक्त्रगः[1] ।

अध्यायार्थनिगमनम्

विष्णुसंकल्परूपोऽयं प्रमाणव्यूह ईरितः ।

[1] वक्त्रशः E J.

शस्त्रशास्त्रविभेदेन किं भूयः श्रोतुमिच्छसि ॥ ६५ ॥

इति श्रीपाञ्चरात्रे तन्त्ररहस्ये अहिर्बुध्न्यसंहितायां शब्दात्मकप्रमाण-
व्यूहनिरूपणं नामैकादशोऽध्यायः

आदितः श्लोकाः ६८३

## शब्दात्मकप्रमाणव्यूहविशेषस्वरूपनिरूपणं नाम द्वादशोऽध्यायः

वृत्तानुवादः

**नारदः—**

सुरासुरगणाराध्य[1] नमस्ते पार्वतीप्रिय ।
त्वत्प्रसादाच्छ्रुतं देव दिव्यं तद्वैष्णवं यशः ॥ १ ॥
यत् तदाद्यं महच्छास्त्रं सुदर्शनमयं हरेः ।
तस्मात् पृथक् पृथक्छास्त्रमाहुर्वाच्यायनादयः ॥ २ ॥

त्रय्यादिस्वरूपप्रश्नः

त्रयी सांख्यं तथा योगशास्त्रं पाशुपतं तथा ।
सात्त्वतं चेति तद्रूपं श्रोतुमिच्छाम्यहं प्रभो ॥ ३ ॥

तत्प्रतिवचनप्रतिज्ञा

**अहिर्बुध्न्यः—**

शृणु नारद तत्त्वेन तेषां रूपं पृथक् पृथक् ।
संकल्पो यावता विष्णोर्भेदेन व्यवतिष्ठते ॥ ४ ॥

[1] महाध्यक्ष A B C E F J. [2] पृथक् D.

त्रयीस्वरूपनिरूपणम्

तत्र त्रयीमयं [1]रूपमाद्यं सर्वार्थदर्शनम् ।
ऋग्यजुःसामरूपत्वात् त्रयी सा परिकीर्तिता ॥ ५ ॥
कार्यभेदात् त्रयीत्वेऽपि चतुर्धा सा प्रकीर्तिता ।
ऋचो यजूंषि सामानि ह्यथर्वाङ्गिरसस्तथा ॥ ६ ॥
चातुर्होत्रप्रधानत्वादृगादित्रितयं त्रयी ।

अथर्वणां पृथक्करणे हेतुः

अथर्वाङ्गिरसां रूपं सर्वमृग्यजुषात्मकम् ॥ ७ ॥
तथापि शान्त्याभिचारप्राधान्यात् ते पृथक् कृताः ।

ऋगादीनां शाखासंख्या

एकविंशतिशाखावानृग्वेदः परिगीयते ॥ ८ ॥
शतं चैका च शाखाः स्युर्यजुषामेकवर्त्मनाम् ।
साम्नां शाखाः सहस्रं स्युः पञ्च शाखा अथर्वणाम् ॥

इयतामेव वेदानां प्रत्यक्षत्वम्

इयन्त एव प्रत्यक्षा आम्नायन्ते महर्षिभिः ।
स्मर्यन्ते मुनिभिर्नित्यं लब्धानुज्ञैर्महेश्वरात् ॥ १० ॥
एषां नैयमिका धर्माः स्वरूपाम्नायगोचराः ।

कल्पादीनि षडङ्गानि

कल्पो व्याकरणं शिक्षा निरुक्तं ज्योतिषां गतिः ॥

[1] शास्त्रं D.

छन्दसां विचयश्चेति षडङ्गानि विदुर्बुधाः ।

मीमांसा न्यायश्चोपाङ्गम्

[1]उपाङ्गद्वितयं चैतन्मीमांसा न्यायविस्तरः ॥ १२ ॥
धर्मज्ञसमयोऽर्थाश्च वेदवादोत्थितास्तथा ।
निबद्धा चानिबद्धा च संस्काराचारसंततिः ॥ १३ ॥
धर्मशास्त्रं महर्षीणामन्तःकरणसंभृतम् ।

उपवेदादिकम्

इतिहासपुरणाख्य उपवेदः प्रकीर्तितः ॥ १४ ॥
[2]वास्तुवेदो धनुर्वेदो गान्धर्वश्च तथा मुने ।
आयुर्वेदश्च पञ्चैत उपवेदाः प्रकीर्तिताः ॥ १५ ॥
दण्डनीतिश्च वार्ता च विद्याद्वयमिदं परम् ।
एकविंशतिभेदो यः सप्रकारः प्रकीर्तितः ॥ १६ ॥
वाच्यायनादृषेः पूर्वं विष्णोर्वाणीसमुद्भवात् ।
त्रयीरूपेण संकल्प इयद्भेदो विजृम्भितः ॥ १७ ॥

सांख्यस्वरूपवर्णनम्

सांख्यरूपेण संकल्पो वैष्णवः कपिलादृषेः ।
उदितो यादृशः पूर्वं तादृशं शृणु मेऽखिलम् ॥ १८ ॥
षष्टिभेदं स्मृतं तन्त्रं सांख्यं नाम महामुने ।

[1] उपाङ्गं तन्मयं चैव A B C E F J.
[2] J omits four lines from here.

प्राकृतं वैकृतं चेति मण्डले द्वे समासतः ॥ १९ ॥

प्राकृतमण्डलवर्णनम्

प्राकृतं मण्डलं तत्र द्वात्रिंशद्भेदमिष्यते ।
तत्राद्यं ब्रह्मतन्त्रं तु द्वितीयं पुरुषाङ्कितम् ॥ २० ॥
त्रीणि तन्त्राण्यथान्यानि [1]शक्तेर्नियतिकालयोः ।
गुणतन्त्राण्यथ त्रीणि तन्त्रमक्षरपूर्वकम् ॥ २१ ॥
प्राणतन्त्रमथान्यत्तु [2]कर्तृतन्त्रमथेतरत् ।
[3]सामितन्त्रमथान्यत्तु ज्ञानतन्त्राणि पञ्च च ॥ २२ ॥
क्रियातन्त्राणि पञ्चाथ मात्रातन्त्राणि पञ्च च ।
भूततन्त्राणि पञ्चेति त्रिंशद् द्वे च भिदा इमाः ॥२३॥
प्राकृतं मण्डलं प्रोक्तं वैकृतं मण्डलं शृणु ।

वैकृतमण्डलवर्णनम्

अष्टाविंशतिभेदं तन्मण्डलं वैकृतं स्मृतम् ॥ २४ ॥
कृत्यकाण्डानि पञ्चादौ भोगकाण्डं तथाऽपरम् ।
वृत्तकाण्डं तथैकं तु क्लेशकाण्डानि पञ्च च ॥ २५ ॥
त्रीणि प्रमाणकाण्डानि ख्यातिकाण्डमतः परम् ।
धर्मकाण्डमथैकं च काण्डं वैराग्यपूर्वकम् ॥ २६ ॥

[1] शक्तेः पुरुषकालयोः All MSS. except D.
[2] J omits two quarters from here.
[3] इत्थमेव सर्वकोशेषु पाठः .
[4] वृत्तिकाण्डमथैकं तु D; व्रतकाण्डं J.

अथैश्वर्यस्य काण्डं च गुणकाण्डमतः परम् ।
लिङ्गकाण्डमथैकं च दृष्टिकाण्डमतः परम् ॥ २७ ॥
आनुश्रविककाण्डं च दुःखकाण्डमतः परम् ।
सिद्धिकाण्डमथैकं च काण्डं काषायवाचकम्[1] ॥ २८ ॥
तथा समयकाण्डं च मोक्षकाण्डमतः परम् ।
अष्टाविंशतिभेदं तदित्थं विकृतिमण्डलम् ॥ २९ ॥
षष्टितन्त्राण्यथैकैकमेषां नानाविधं मुने ।
षष्टितन्त्रमिदं सांख्यं सुदर्शनमयं हरेः ॥ ३० ॥
आविर्बभूव सर्वज्ञात् परमर्षेर्महामुने ।

योगशास्त्रस्वरूपवर्णनम्

विष्णुसंकल्परूपं च महद्योगानुशासनम् ॥ ३१ ॥
हिरण्यगर्भादुद्भूतं तस्य भेदानिमाञ्शृणु ।

योगे संहिताद्वयम्

आदौ हिरण्यगर्भेण द्वे प्रोक्ते योगसंहिते ॥ ३२ ॥
एका निरोधयोगाख्या कर्मयोगाह्वया[2] परा ।

निरोधसंहिताया द्वादशविधत्वम्

संहिता तु निरोधाख्या तत्र द्वादशधा स्मृता ॥ ३३ ॥
अङ्गतन्त्रमथाद्यं तु दोषतन्त्रमतः परम् ।

[1] वाचनम् D; पावकम् J.

[2] योगाभिधा B.

उपसर्गाभिधं तन्त्रं तथाधिष्ठानकं परम् ॥ ३४ ॥
आधारतन्त्रं योगं च बहिस्तत्त्वाधिकारवत् ।
रिक्तयोगाख्यतन्त्रं च पूर्णयोगाख्यमेव च ॥ ३५
सिद्धियोगाख्यया त्रीणि मोक्षतन्त्रमतः परम् ।
इति द्वादशभेदास्ते निरोधायाः प्रकीर्तिताः ॥ ३६ ।

कर्मसंहितायाश्चातुर्विध्यम्

ब्रह्मणा गदितास्तत्र चतस्रः कर्मसंहिताः ।
नानाकर्ममयी त्वेका परा त्वेका क्रियामयी ॥ ३७ ॥
बाह्याभ्यन्तररूपेण द्वे अपि द्विविधे स्मृते ।
योगानुशासनं शास्त्रमिति षोडशविस्तरम् ॥ ३८ ॥
सुदर्शनमयं विष्णोरुदितं तत् प्रजापतेः ।

पाशुपतस्वरूपवर्णनम्

तन्त्रं पाशुपतं नाम पशुपाशप्रमोचनम्[1] ॥ ३९ ॥
मद्वक्त्रान्निःसृतं विष्णोः संकल्पप्रविजृम्भितम् ।

पाशुपतस्याष्टकाण्डत्वम्

[2]अष्टकाण्डमिदं प्रोक्तं मया तन्त्रमनुत्तमम् ॥ ४० ॥
पतिकाण्डमथाद्यं तु पशुकाण्डमतः परम् ।
पाशकाण्डं तृतीयं तु प्रोक्तं पञ्चप्रभेदतः ॥ ४१ ॥

1 विमोचनम् B C.    2 अष्टतन्त्र D.

शुद्धचर्या च मिश्रा च काण्डे द्वे परिकीर्तिते ।
[1]देवकांडमथो षष्ठं दीक्षाकाण्डमतः परम् ॥ ४२ ॥
सायुज्यमष्टमं प्रोक्तं काण्डं पाशुपतं महत् ।
अष्टकाण्डमिदं शास्त्रं सुदर्शनमयं हरेः ॥ ४३ ॥
दिव्यं पाशुपतं शास्त्रं [2]मयैवोक्तं महामुने ।

पाञ्चरात्रस्वरूपवर्णनम्

यत् तत् सौदर्शनं विष्णोः सात्त्वतं नाम जृम्भितम् ॥
भेदो दशविधस्तस्य संक्षेपेण प्रकीर्तितः ।
भगवत्संहिता त्वाद्या तथान्या कर्मसंहिता ॥ ४५ ॥
विद्यामयी तृतीया च चतुर्थी कालसंहिता ।
कर्तव्यसंहिता त्वन्या षष्ठी वैशेषिकी क्रिया ॥ ४६ ॥
सप्तमी गदिता तत्र पूज्या [3]संयमसंहिता ।
अष्टम्यधिकृते चिन्ता नवमी मार्गसंहिता ॥ ४७ ॥
[4]सात्त्वती गीयते शुद्धा दशमी मोक्षसंहिता ।
एतावत् सात्त्वतं शास्त्रमाविरासीत् सनातनात्[5] ॥
एतानि पञ्च शास्त्राणि मूलभूतानि वै मुने ।
युगे युगे [6]विभज्यन्ते विष्णुसंकल्पचोदितैः ॥ ४९ ॥
तत्तत्कर्तृसमाख्यातास्तास्तास्त्रय्यादिसंहिताः ।

[1] देशकाण्ड D.
[2] मत्तो व्यक्तं D.
[3] संशय A B C E F J.
[4] सात्त्वतैर्गीयते D.
[5] सनातनम् D.
[6] विचिन्त्यन्ते A B C E F J.

प्रादेशिक्यो निवर्तन्ते [1]ह्रासकालानुकालतः ॥ ५० ॥

शास्त्राभासप्रवृत्तौ कारणम्

हिंस्राणां मोहनार्थाय संकल्पा एव वैष्णवाः ।
शास्त्राभासाः प्रवर्तन्ते [2]देवब्रह्मर्षिवक्त्रतः ॥ ५१ ॥

उक्तार्थनिगमनम्

[3]एष [4]प्रमाणयोर्व्यूहो दिव्यः सौदर्शनः परः ।
शब्दार्थप्रविभागेन गदितस्ते मया मुने ॥ ५२ ॥

सुदर्शनपर्यायशब्दाः

प्राणो माया क्रिया शक्तिर्भाव उन्मेष उद्यमः ।
सुदर्शनं च संकल्पः शब्दाः पर्यायवाचकाः ॥ ५३ ॥

पञ्चानामपि शास्त्राणां भगवति निष्ठा

निष्ठा त्वेकैव शास्त्राणामेतेषां पञ्चवर्त्मनाम् ।
शास्त्रं सुदर्शनं नाम तदर्थो विष्णुरव्ययः ॥ ५४ ॥
प्रमाणमय उद्दिष्टो लेशतोऽयं महामुने ।
व्यूहः सौदर्शनो विष्णोः किं भूयः श्रोतुमिच्छसि ॥

इति श्रीपाञ्चरात्रे तन्त्ररहस्ये अहिर्बुध्न्यसंहितायां शब्दात्मकप्रमाण-
व्यूहविशेषस्वरूपनिरूपणं नाम द्वादशोऽध्यायः

आदितः श्लोकाः ७३८

[1] त्रास D.
[2] देवर्षिब्रह्मवक्त्रतः A B C E F J.
[3] J omits four lines from here.
[4] प्राणमयो व्यूहो D E.

## प्रमाणार्थनिरूपणं नाम त्रयोदशोऽध्यायः

प्रमाणार्थविषयकः प्रश्नः

**नारदः—**

नमस्ते देवदेवेश नमस्ते मरुतां पते[1] ।
भवानीपतये तुभ्यं नमस्ते वृषकेतन ॥ १ ॥
त्वद्वक्त्रकमलोद्भूता अर्था अवधृता मया ।
यत् कारणं च जगतामाधारो जगतां च यः ॥ २ ॥
जगतां यत् प्रमाणं च त्रयं तदवधारितम् ।
प्रमाणार्थमिदानीं मे वक्तुमर्हसि शंकर ॥ ३ ॥
यश्च यादृक् च यावांश्च प्रमाणास्यार्थ इष्यते ।

तत्प्रतिवचनप्रतिज्ञा

**अहिर्बुध्न्यः—**

शृणु नारद तत्त्वेन प्रमाणस्यार्थमुत्तमम्[2] ॥ ४ ॥
विष्णुसंकल्पमूलो यो [3]बहुधा प्रविजृम्भते ।

प्रमाणशब्दनिर्वचनम्

मितिर्मा गदिता सद्भिः प्रकृष्टा मा प्रमा स्मृता ॥

[1] पितः D.
[2] मुत्थितम् E F J; मथितम् A B C.
[3] बहु प्रेम्णि विजृम्भते A B C.

प्रकर्षश्च मितेः सोऽयं [1]यद्यथार्थावधारणम् ।
धीसाधकतमं यत् तत् प्रमाणमिति शब्द्यते ॥ ६ ॥

प्रमाणार्थस्वरूपम्

प्रमाणेनार्थ्यते यद्धि स प्रमाणार्थ उच्यते ।
यत् पुंसो हितमत्यन्तं सर्वदेशेषु सर्वदा ॥ ७ ॥
स प्रमाणार्थ इष्टोऽत्र स द्वेधा व्यवतिष्ठते ।

तस्य द्वैविध्यम्

हितं च साधनं चेति तयोस्तत्त्वमिदं शृणु ॥ ८ ॥

हितस्वरूपम्

आत्यन्तिकी निवृत्तिस्तु पुंसो या दुःखसंततेः ।
तयोपलक्षितं नित्यं सुखं यत् तद्धितं स्मृतम् ॥ ९ ॥

साधनस्वरूपम्

तस्य योऽव्यभिचारेण साधनत्वं प्रपद्यते ।
हितसाधनमित्युक्तः सोऽर्थो वेदान्तपारगैः ॥ १० ॥

हितस्वरूपयाथात्म्यम्

स्वरूपभूतं यत् पुंसो हितं सुखमुदीरितम् ।
भगवन्मयता सास्य भगवत्तापराह्वया ॥ ११ ॥

1 यद्धितार्थावधारणम् All MSS.

8

साधनद्वैविध्यम्

अत्यन्तसाधनं तस्य यत् तद् द्वेधा व्यवस्थितम् ।
विधा ज्ञानमिति त्वेका [1]धर्म इत्यपरा विधा ॥ १२ ॥

तयोर्हेतुहेतुमद्भावः

[2]हेतुमद्धेतुभावस्तु विधयोरनयोः स्मृतः ।

ज्ञानद्वैविध्यम्

ज्ञानं तु हेतुमत् तत्र तच्च द्वेधा व्यवस्थितम् ॥ १३ ॥
साक्षात्कारमयं [3]चैकं परोक्षं परमीर्यते ।

तयोरपि हेतुहेतुमद्भावः

हेतुमद्धेतुभावोऽयं द्वयोरपि निरूप्यते ॥ १४ ॥
हेतुमत्त्वपरोक्षं यत् परोक्षं हेतुरुच्यते ।

कर्मणां ज्ञानहेतुत्वम्

अनयोर्ज्ञानयोर्धर्मः स हेतुरिति गीयते ॥ १५ ॥
साक्षात् परोक्षे तत्साध्ये हेतुस्तन्मुखतो ह्यसौ ।

कर्मणां द्वैराश्यम्

अस्यापि द्वे विधे [4]दृष्टे तत्त्वशास्त्राब्धिपारगैः ॥ १६ ॥

[1] अपरा धर्म इत्यपि A B C E F J.
[2] J omits three lines from here.
[3] त्वेकम् D F.
[4] शिष्टे D.

साक्षादाराधनात्मैकः परस्तु व्यवधानतः ।

व्यवहितकर्मस्वरूपम्

[1]अपारं तत् परं ब्रह्म शक्तिमत् परमेश्वरः ॥ १७ ॥
नारायणसमाख्यातं नित्यं षाड्गुण्यमव्ययम् ।
विभूतयस्तु तस्येमे ब्रह्माद्याः स्थावरान्तिमाः ॥ १८ ॥
[2]भावनात्रयसंमिश्रास्तत्सुदर्शनजृम्भिताः ।
या सा भूतिः पुरा शक्तेः कोट्यंशेनोदिता मया ॥
तदंशलेशाद् ब्रह्माद्या विष्णुसंकल्पजृम्भिताः ।
एतद्विभूतिमुखतो यो ह्यकामहृतैर्नरैः ॥ २० ॥
ब्रह्मार्पणेन क्रियते स धर्मो व्यवधानवान् ।

अव्यवहितधर्मस्वरूपम्

विभूतिमत् परं ब्रह्म तदेवाव्यवधानतः ॥ २१ ॥
येन प्रीणयते योगी स साक्षाद्धर्म इष्यते ।

पाञ्चरात्रस्याव्यवहितधर्मपरत्वम्

सात्त्वतं शासनं सर्वं तस्यैतस्यावबोधकम् ॥ २२ ॥

सशिरस्कस्य वेदस्य व्यवहितधर्मपरत्वम्

यस्तु पूर्वस्त्रयीभागः परभागार्थतां गतः ।
अपरस्य स धर्मस्य निष्कामानां निरूपकः ॥ २३ ॥

[1] अन्तरङ्गं परं ब्रह्म D.
[2] भावनात्रयमिश्रास्तत्सुदर्शनविजृम्भिताः A B C E F J.

पाशुपतस्यैकविभूतिविषयकधर्मपरत्वम्

**धर्म एकविभूतिस्थो मया पाशुपते स्मृतः ।**
**उग्रव्रतैर्नरैः शश्वद् ब्रह्मप्रीत्यै स साध्यते ॥ २४ ॥**

सांख्यस्य परोक्षज्ञानफलकत्वम्

**साक्षाच्च व्यवधानाच्च यत् तन्मोक्षस्य साधनम् ।**
**परोक्षं तत् प्रसंख्यानं ज्ञानं सांख्येन चिन्त्यते ॥ २५ ॥**

वेदान्तानामपरोक्षज्ञानफलकत्वम्

**[1]अन्तरङ्गशमाद्यङ्गभक्तिश्रद्धापुरःसरम् ।**
**त्रय्यन्तैर्ब्रह्मविज्ञानमपरोक्षं विभाव्यते[2] ॥ २६ ॥**

योगस्यापरोक्षज्ञानाङ्गयमादिपरत्वम्

**बहिरङ्गान्तरङ्गाख्ययमाद्यङ्गकलापवान् ।**
**चित्तवृत्तिनिरोधात्मा योगो योगानुशासने ॥ २७ ॥**
**शश्वदभ्यासवैराग्यपरेशप्रणिधानतः ।**
**साक्षात्कारावभासाख्यसिद्धशुद्धापवर्गदः ॥ २८ ॥**

गुणप्रधानभावेन सर्वत्र सर्वोपदेशः

**यथोक्ततत्त्वविज्ञानं नानाहेतुविधान्वितम् ।**
**धर्मो बहुविधश्चेति [3]सर्वं सर्वैर्निरूप्यते ॥ २९ ॥**

[1] अन्तरङ्गशमाद्यं वै A B C E F J. [2] परोक्षं तद्विभाव्यते A B C J.
[3] सर्वैरत्र निरूप्यते A B C E F J.

शास्त्रेषु विविधफलान्तरसाधनान्तरोपदेशस्याभिप्रायकथनम्

हितप्रवृत्तेर्लोकानां तनूकाराय पाप्मनाम् ।
[1]रागद्वेषप्रयुक्तानामायुर्वेदोपदेशवत् ॥ ३० ॥

नानारूपफलावाप्त्यै नानानियमभेदिताः ।
शास्त्रैर्धर्मा विधीयन्ते नानारूपा धियस्तथा ॥ ३१ ॥

लौकिकपुरुषार्थद्वयोपक्षेपः

तदित्थं [2]सविशेषं ते पुमर्थद्वयमीरितम् ।
अथान्यल्लौकिकं[3] शास्त्रैः पुमर्थद्वयमीरितम् ॥ ३२ ॥
[4]अर्थकामौ तयोः कामः स्मृतो वैषयिकेरितः ।
अर्थो गोभूहिरण्यादिप्रेक्षोत्थानफलात्मकः ॥ ३३ ॥

त्रिवर्गस्य मिथः साध्यसाधनभावविवेकः

अर्थो धर्मस्य कामस्य तथार्थस्यापि साधनम् ।
[5]धर्मो धर्मस्य कामस्य तथार्थस्यापि साधनम् ॥ ३४ ॥
कामो धर्मस्य कामस्य तथार्थस्यापि साधनम् ।
अर्थः कामश्च सर्वत्र व्यभिचारेण साधनम् ॥ ३५ ॥
धर्मः सर्वस्य साध्यस्य नियमेनैव साधनम् ।
तदेतत् त्रितयं प्रोक्तं त्रिवर्ग इति पण्डितैः ॥ ३६ ॥

[1] रागद्वेषप्रवृत्तानाम् D. [2] भव्यशेषम् A B C F J; हव्यशेषम् E.
[3] लौकिकैः A B C E. [4] अर्थः कामो J.
[5] D and J omit two lines from here.

मोक्षस्य सर्वदा साध्यत्वमेव

मोक्षश्च साध्य एवेति पुरुषार्थचतुष्टयम् ।

अर्थकामयोः प्रमाणनिरूपणम्

दण्डनीतिः सवार्ता सा सोपवेदचतुष्टया ॥ ३७ ॥
प्रमाणत्वेन निर्दिष्टा पण्डितैरर्थकामयोः ।

इतिहासादेस्तत्त्वज्ञानसहकारित्वम्

इतिहासपुराणाख्य उपवेदो हि यः स्मृतः ॥ ३८ ॥
सहायभावं शास्त्राणां तत्त्वज्ञाने व्रजत्यसौ ।
इति ते लेशतः प्रोक्ता पुरुषार्थचतुष्टयी ॥ ३९ ॥

धर्मादीनामन्तरङ्गसाधनानि

अन्तरङ्गममुष्यास्तु साधनं शृणु नारद ।
निर्व्याजा निरुपस्कारा दया धर्मस्य साधनम् ॥ ४० ॥
हेतुरुत्थानमर्थस्य देशकालोपपादितम् ।
हेतुः कामस्य संकल्पो निर्व्याजो निरुपस्कृतः ॥ ४१ ॥
हेतुस्तु सर्वसंन्यासो मोक्षे ज्ञानपुरस्कृतः ।

तेषामेव बहिःसाधनानि

न्याय्यं धर्मादि धर्मस्य बहिःसाधनमुच्यते ॥ ४२ ॥
[1]बहिःसाधनमर्थस्य तन्त्रावापादिचिन्तनम् ।

[1] अर्थसाधन A B C E F J.

कामे पाणिग्रहाद्युक्तं बहिरङ्गं विचक्षणैः ॥ ४३ ॥
निष्कामधर्मकृत्यादि बहिर्मोक्षस्य साधनम् ।
विजृम्भितमिदं भूतेः पुरुषार्थचतुष्टयम् ॥ ४४ ॥
संकल्पो वैष्णवस्तस्य विजृम्भाहेतुरुच्यते ।

अध्यायार्थोपसंहारः

इति ते सकला प्रोक्ता प्रमाणार्थगतिः परा ।
ससाधना सप्रकारा किं भूयः श्रोतुमिच्छसि ॥ ४५ ॥

इति श्रीपाञ्चरात्रे तन्त्ररहस्ये अहिर्बुध्न्यसंहितायां प्रमाणार्थ-
निरूपणं नाम त्रयोदशोऽध्यायः

आदितः श्लोकाः ७८३

## जीवस्य संसारहेतुतदुद्धरणप्रकारवर्णनं नाम चतुर्दशोऽध्यायः

तत्रादौ मुक्तिविषयः पुनः प्रश्नः

**नारदः—**

अज्ञानतिमिरप्लोषिललाटनयनत्विषे ।
नमस्ते त्रिपुराराते नमस्तेऽन्तकविद्विषे ॥ १ ॥
पुरुषार्थाः श्रुताः सर्वे मुख्यगौणविकल्पिताः[1] ।
पुरुषार्थः श्रुतो मुख्यस्तत्र मुक्त्यभिसंज्ञितः ॥ २ ॥
भगवत्तामयी प्रोक्ता [2]मुक्तिश्च त्रिपुरद्विषा ।
तस्याश्च साधनं साक्षात् तत्त्वज्ञानं द्विधा स्थितम् ॥
साधनं तस्य च प्रोक्तो धर्मो निरभिसंधिकः ।
भूयो विस्तरतः शंस मुक्तिं तां चन्द्रशेखर ॥ ४ ॥
[3]यतो यस्य च या मुक्तिस्तच्च मे द्वितयं वद ।
न ह्यन्यं प्रष्टुमर्हामि त्वामृते सर्ववेदिनम् ॥ ५ ॥

जीवस्वरूपसंक्षेपः

**अहिर्बुध्न्यः—**

अनादिरपरिच्छेद्यश्चिदानन्दमयः पुमान् ।

[1] विकल्पतः E F J.
[2] मुक्तिश्च त्रिपुरद्विषे D; मुक्तिस्त्रिपुरविद्विषा B C E F J.
[3] तयोर्यस्य च सा A B C E F J.

भगवन्मय एवायं भगवद्भावितः सदा ॥ ६ ॥

जीवस्य भगवच्छक्त्यंशलेशत्वम्

या सा शक्तिर्महासत्ता विष्णोस्तद्धर्मधर्मिणी ।
तस्याः कोट्यर्बुदांशेन शक्ती द्वे कथिते तव ॥ ७ ॥
भूतिश्चेति क्रिया चेति भाव्यभावकसंज्ञिते ।
भूतिः सा क्रियया ज्वाला मरुतेव [1]प्रणर्त्यते ॥ ८ ॥
नानाभेदवती भूतेर्विभूतिः कथिता पुरा ।
शुद्ध्यशुद्धिवशाद् द्वेधा शुद्धा सा बहुधोदिता ॥ ९ ॥
पुंशक्तिः कालमय्यन्या पुमान् सोऽयमुदीरितः ।

तस्य कालवश्यत्वात् संसारप्राप्तिः

कालशक्तिविकारस्थः सोऽयं संसरति ध्रुवम् ॥ १० ॥

साधननिष्पत्त्या स्वरूपाविर्भावः

[2]सोऽयं शास्त्रीयमासाद्य मार्गं स्वेनाभिजायते ।

तत्र पुनः प्रश्नः

**नारदः—**

भगवन् देवदेवेश त्रिपुरान्तक शंकर ॥ ११ ॥
कालशक्तिविकारस्थः कथं संसरति ध्रुवम् ।

[1] प्रवर्तते A B C E F J.
[2] D omits three lines from here.

**कथं वोपायमासाद्य पुमान् [1]स्वेनाभिजायते ॥ १२ ॥**

भगवत्स्वातन्त्र्यस्यापर्यनुयोज्यत्वम्

**अहिर्बुध्न्यः—**

**सर्वैरननुयोज्यं तत् स्वातन्त्र्यं दिव्यमीशितुः ।**
**अवाप्तविश्वकामोऽपि क्रीडते राजवद्वशी ॥ १३ ॥**

भगवत्संकल्पस्य पञ्चधा विभागः

**संकल्पो नाम यस्तस्य सुदर्शनसमाह्वयः ।**
**सत्यप्यनन्तरूपत्वे पञ्चधा स [2] विजृम्भते ॥ १४ ॥**
**सृष्टिस्थित्यन्तकारेण निग्रहानुग्रहात्मना ।**

निग्रहशक्त्या जीवस्याकारादितिरोधानम्

**तिरोधानकरी शक्तिः सा निग्रहसमाह्वया ॥ १५ ॥**
**पुमांसं जीवसंज्ञं सा तिरोभावयति स्वयम् ।**
**आकारैश्वर्यविज्ञानतिरोभावनकर्मणा ॥ १६ ॥**

तिरोधायकपर्यायशब्दाः

**मायाविद्या महामोहो महातामिस्रमित्यपि ।**
**तमो बन्धोऽथ हृद्ग्रन्थिरिति पर्यायवाचकाः ॥ १७ ॥**

जीवाणुत्वादि

**आकारस्य [3]तिरोधानादणुत्वं पुंस इष्यते ।**

[1] स्वेनोपजायते D. [2] प्रविजृम्भते A B C E F J.
[3] तिरोभावादणुत्वं A B C E F J.

ऐश्वर्यस्य तिरोभावादकिंचित्करता स्मृता ॥ १८ ॥
पुंसो विज्ञानसंकोचादज्ञत्वं समुदाहृतम् ।
[1]तिरोहितः पुमाञ्छक्त्या विष्णुसंकल्परूपया ॥ १९ ॥
अणुः किंचित्करश्चेति किंचिज्ज्ञश्चेति कथ्यते ।

अणुत्वादेर्मलत्वं बन्धत्वं च

मलत्रयमिदं प्रोक्तं बन्धत्रयमिदं बुधैः ॥ २० ॥

अविद्यादिभिर्मलविवृद्धिः

तिरोभावनशक्त्यैवं वैष्णव्या बन्धमेयुषः ।
अविद्यास्मित्वरागाद्या मलं समुपचिन्वते ॥ २१ ॥

इष्टानिष्टप्राप्तिपरिहारेच्छा

क्लिश्यद्भिः क्लेशितः[2] क्लेशैरविद्यादिभिरीदृशैः ।
नुन्नः प्रेप्साजिहासाभ्यामागमाननुसंपतन् ॥ २२ ॥
इष्टार्थप्राप्तयेऽनिष्टविघाताय च लालसः ।
[3]कर्म तत् कुरुते कामी शुभाशुभफलोदयम् ॥ २३ ॥

कर्मवशात् जात्यायुर्भोगप्राप्तिः

ततः कर्मविपाकस्थः शुभाशुभविमिश्रितान् ।
जात्यायुरनुबन्धान्[4] स प्राप्नोति विधिचोदितः ॥ २४ ॥

[1] तिरोभूतः A D E F J.
[2] क्लेशितक्लेशैः A B C J.
[3] कर्मतः D.
[4] उपबन्धान् A B C J.

सुखादिवासनास्तास्ताः संचिनोति शनैः शनैः ।
एषा निग्रहशक्तेस्तु [1]तिरोधानपरंपरा ॥ २५ ॥

तिरोधाने सहकारिकारणम्

अंशौ यौ कालशक्त्याख्यौ भूतेः समनुवर्तिनौ[2] ।
ताभ्यां पुंसस्तिरोभावं तनुते निग्रहात्मिका ॥ २६ ॥

सृष्ट्यादीनां संचितकर्ममूलकत्वम्

[3]अजस्य त्वनया शक्त्या तिस्रः सृष्ट्यादिशक्तयः ।
संचितैः संप्रवर्तन्ते तैस्तैः कर्मभिरूर्जितैः ॥ २७ ॥

सहेतुकस्य बन्धस्यानादित्वम्

बन्धोऽनादिरयं प्रोक्तो बन्धहेतुश्च नादिमान् ।

बद्धजीवे भगवत्कृपाविर्भावः

एवं संसृतिचक्रस्थे भ्राम्यमाणे स्वकर्मभिः ॥ २८ ॥
जीवे दुःखाकुले विष्णोः कृपा काप्युपजायते[4] ।

कृपाया अनुग्रहशक्तिपातरूपत्वम्

[5]या ह्युक्ता पञ्चमी शक्तिर्विष्णुसंकल्परूपिणी ॥२९॥
अनुग्रहात्मिका शक्तिः सा कृपा वैष्णवी परा ।
शक्तिपातः स वै विष्णोरागमस्थैर्निगद्यते ॥ ३० ॥

[1] तिरोभाव A B C E F J. [2] पञ्य तौ A B C E F J.
[3] बन्धस्य D. [4] करुणा कापि जायते A B C E F J.
[5] A B C E F J omit five lines from here.

कृपाविषयस्य जीवस्य कर्मसाम्यप्राप्तिः

अनुग्रहात्मना शक्त्या सुदर्शनमयात्मना ।
स्वीकृतो हि यदा विष्णोः करुणावर्षरूपया ॥ ३१ ॥
समीक्षितस्तदा सोऽयं करुणावर्षरूपया ।
कर्मसाम्यं भजत्येव जीवो विष्णुसमीक्षितः ॥ ३२ ॥
[1]शक्तिपातः स वै जीवमुत्तारयति संसृतेः ।
कर्मणी च समे तत्र तूष्णींभावमुपागते ॥ ३३ ॥

सदृष्टान्तं कर्मणामुदासितृत्वोपपादनम्

यथा हि मोषकाः पान्थे परिबर्हमुपेयुषि ।
निवृत्तमोषणोद्योगाः [2]समाः सन्त उदासते ॥ ३४ ॥
अनुग्रहात्मिकायास्तु शक्तेः पातक्षणे तथा ।
उदासाते समीभूय कर्मणी ते शुभाशुभे ॥ ३५ ॥

मुमुक्षोर्मोक्षोपायप्राप्तिप्रकारः

तत्पातानन्तरं जन्तुर्युक्तो मोक्षसमीक्षया ।
प्रवर्तमानवैराग्यो [3]विवेकेऽभिनिवेशवान् ॥ ३६ ॥
आगमाननुसंचिन्त्य गुरूनप्युपसद्य[4] च ।
[5]लब्धसत्त्वप्रकारैस्तैः प्रबुद्धो बोधपालनः ॥ ३७ ॥

[1] शक्तिभावः A B C E F J.
[2] सदा सन्त उपासते A B C E F J.
[3] विवेकाभि A B C J.
[4] उपचर्य A B C E F J.
[5] लब्धतत्त्वः D.

[1]अक्षिण्वन् गुरुसंबोधं क्षिण्वन् क्लेशादिकानपि ।
विचिन्वन् सर्वतः सारमुपचिन्वन् परां[2] धियम् ॥ ३८ ॥
सांख्ययोगसमावेशी सत्कर्मनिरतः स्वयम् ।
[3]उग्रव्रतधरो ज्ञानी वेदान्तज्ञाननिश्चलः[4] ॥ ३९ ॥
संहृतैर्विगृहीतैश्च मार्गैरेभिः सुनिश्चयैः ।
क्लेशेन महता स्थानं वैष्णवं प्रतिपद्यते ॥ ४० ॥

लब्धज्ञानस्य मोक्षप्राप्तिः

संप्राप्य ज्ञानभूयस्त्वं निर्मलीकृतचेतनः ।
अनाविलमसंक्लेशं वैष्णवं तद्विशेत् पदम् ॥ ४१ ॥

इति श्रीपाञ्चरात्रे तन्त्ररहस्ये अहिर्बुध्न्यसंहितायां जीवस्य संसारहेतुतदुद्धरणप्रकारवर्णनं नाम चतुर्दशोऽध्यायः

आदितः श्लोकाः ८२४

[1] अक्षिण्वद्गुरुसंबोधः D.
[2] धियं पराम् A B C E F.
[3] उग्रवृत्त E; उग्रभूत J.
[4] निश्चयः D.

अधिकारिनिरूपणं नाम पञ्चदशोऽध्यायः

[1]ध्यातो धृतात्मभिश्चक्रमध्यस्थो मधुसूदनः ।
पायादपायात् संसाररूपकूपात्तु नः परः ॥

अधिकारिविषयः प्रश्नः

**नारदः—**

देवदेव नमस्तेऽस्तु वृषकेतन शंकर ।
त्वत्प्रसादाच्छ्रुतं दिव्यं रहस्यं [2]ज्ञानमुत्तमम् ॥ १ ॥
प्रश्नशेषं मम ब्रूहि यत् पृष्टोऽसि मया पुरा ।
पुरुषार्था हि ये प्रोक्ताश्चत्वारः सकलाश्रयाः ॥ २ ॥
के हि तानधिकुर्वन्ति तन्मे विस्तरतो वद ।

तत्प्रतिवचने प्रथमं सात्त्विकरीतिप्रतिपादनम्

**अहिर्बुध्न्यः—**

ये हि ते मनवो नाम विद्यागर्भाः पुरोदिताः ॥ ३ ॥
ब्राह्मणाः क्षत्रिया वैश्याः शूद्रा इति विभेदिताः ।
मानवास्तत्प्रसूता ये तथा मानवमानवाः ॥ ४ ॥

[1] D omits two lines from here.

[2] ज्ञानमद्भुतम् E F J.

मुखबाहूरुपादेभ्यो ब्राह्मणाद्याः समुत्थिताः ।
ब्राह्मणाः क्षत्रिया वैश्याः शूद्रा इत्यपि ते स्मृताः ॥
द्वितये ते यथायोगमधिकुर्वन्ति तानिमान् ।

मनुसन्ततिजानां पाञ्चरात्राधिकारः

ये पुरा कथिताः पञ्च सिद्धान्ताः सर्वसंमताः ॥ ६ ॥
मनुसन्ततिजास्तत्र सात्त्वतं [1]त्वधिकुर्वते ।

तेषां तन्निष्ठया भगवत्प्राप्तिः

त्रयोदशविधं कर्म [2]गुणैः सांयमिकैर्युतम् ॥ ७ ॥
कुर्वाणाः पञ्चकालस्थास्ते यान्ति पुरुषोत्तमम् ।

तेषु त्रैवर्णिकानां चातुराश्रम्यम्

विहितं चातुराश्रम्यं [3]त्रयाणां तत्र नारद ॥ ८ ॥
ब्रह्मचारी गृहस्थो वा वनस्थो भिक्षुरित्यपि ।

तेषां शुश्रूषया शूद्रस्य भगवत्प्राप्तिः

शूद्रः शुश्रूषया तेषां भगवत्कर्मसाधनात् ॥ ९ ॥
अरागरोषलोभः सञ्छनैर्याति हरेः पदम् ।

अन्यतमाश्रमस्थानामपि तेषां मोक्षसिद्धिः

[4]सद्ब्रह्मयाजिनस्ते वै शुद्धाः स्वाध्यायतत्पराः ॥ १० ॥

[1] चाधिकुर्वते A B C J.
[2] गुणैः समधिकैर्युतम् B C.
[3] त्रयाणां तदनन्तरम् C.
[4] D omits four lines from here.

अनन्ययाजिनो विप्रा आसृष्टेरधिकारिणः ।
मातापितृभ्यां तरुणाः प्राग्बुद्धेः साधु पालिताः ॥११॥
आचार्यनयसंपन्नास्ते शुश्रूषणतत्पराः ।
सम्यक् सप्तपदार्थज्ञा नियमस्थाः समाहिताः ॥ १२ ॥
प्रकृतिज्ञानसंपन्नाः प्रमादपरिवर्जिताः ।
त्यक्तकामाः सुधृतयः शुचयः संयतेन्द्रियाः ॥ १३ ॥
सिद्धा नाम [1]महाभागाः समाप्तज्ञाननिश्चयाः ।
धिया समाप्तकर्माणश्चरणैरन्विताः शुभैः ॥ १४ ॥
आसमाप्तेः समास्थाय चतुर्णामेकमाश्रमम् ।
पाञ्चकालिकमच्छिद्रं कुर्वाणाः शतवार्षिकम् ॥ १५ ॥
विवेकजां परां प्राप्य कर्मणोऽन्ते [2]शुभां धियम् ।
प्रद्योतमानविज्ञाना निर्धूतप्राकृतोद्यमाः ॥ १६ ॥
सहस्रार्चिषमीशानं लक्ष्मीपतिमनाविलम् ।
क्षेत्रज्ञं सर्वभूतानां वासुदेवं विशन्ति ते ॥ १७ ॥

गार्हस्थ्यस्याश्रमान्तरोपजीव्यत्वम्

अग्निमान् बहुमात्रावानेकः कौटुम्ब आश्रमः ।
व्रतादिनिरताः शुद्धास्त्रयोऽन्येऽनग्नयः स्मृताः ॥ १८ ॥
कौटुम्बमुपजीवन्ति ते त्रयो ह्यूर्ध्वरेतसः ।

1 महाभाग D.
2 धियं शुभाम् B C.

सात्त्विकरीतिनिगमनम्

गदिता सात्त्विकी [1]रीतिरिति ते लेशतो मुने ॥ १९ ॥

अथ त्रय्यादिरीतिकथनारम्भः

एवं विस्तरतो मेऽद्य रीतिमन्यां निशामय ।

मुखबाहूरुपज्जानां त्रय्याद्यधिकारः

ये हि ब्रह्ममुखादिभ्यो वर्णाश्चत्वार उद्गताः ॥ २० ॥
ते सम्यगधिकुर्वन्ति त्रय्यादीनां चतुष्टयम् ।

त्रयीनिष्ठानां फलसिद्धिः; सांख्यादिनिष्ठानां क्रमात् पञ्चरात्रारोहणं च

त्रयीस्था एव सिध्यन्ति सांख्यादिष्वपि च त्रिषु ॥
आरोहन्तीच्छया तेऽपि सात्त्वतं शासनं परम् ।

पाशुपतनिष्ठानां त्रयीधर्माननुष्ठातृत्वम्

प्राप्ताः पाशुपतं ये हि धर्मं ब्राह्मणपूर्वकाः ॥ २२ ॥
न धर्ममनुतिष्ठन्ति त्रयीस्थं ते पुनर्मुने ।
पञ्चरात्रं प्रविश्येव नान्यं धर्मं वितन्वते ॥ २३ ॥

सांख्यानां नैष्कर्म्यम्

निष्कर्माणः स्मृताः सांख्याः प्रसंख्यानैकतत्पराः ।

योगनिष्ठानां वैदिककर्मानुष्ठातृत्वम्

नित्यनैमित्तिकैर्युक्तो योगी योगाङ्गवाञ्छया ॥ २४ ॥

[1] रीतिर्लेशतस्ते महामुने A.

कुर्यादलब्धलाभाय लब्धवृद्ध्य एव च ।
ब्रह्मिष्ठो वैदिकं कर्म नित्यं नैमित्तिकं तथा ॥ २५ ॥
त्रय्यादिमार्गगा रीतिर्नारदैषा प्रदर्शिता ।

वर्णाश्रमतद्धर्माणां निरूपणम्

वर्णाश्रमविभागं मे धर्मैः सह निशामय ॥ २६ ॥

चत्वारो वर्णाः

वर्णाश्चत्वार उद्दिष्टा ब्राह्मणादिक्रमेण ये[1] ।

आद्यानां त्रयाणां वेदाध्ययनं द्विजातित्वं च

अधीयीरंस्त्रयो वर्णाः पूर्वं भूत्वा द्विजातयः ॥ २७ ॥

शूद्रस्य द्विजशुश्रूषा, एकजातित्वं च

चतुर्थ [2]एकजातिस्ताञ्छुश्रूषेतानहंकृतः ।

याजनाध्यापनप्रतिग्रहा ब्राह्मणस्यैव

ब्राह्मणो नाम यो वर्ण आद्यो ब्रह्ममुखोद्गतः ॥ २८ ॥
स त्रीनध्यापयेदेतान् ब्राह्मणादीननुक्रमात् ।
याजयेच्च यथाकामं वृत्त्यर्थमनसूयया ॥ २९ ॥
त्रिभ्यश्च प्रतिगृह्णीयादेष वैशेषिको विधिः ।

शस्त्रधारणादिकं क्षत्रियस्य

शस्त्राणां धारणं नित्यं क्षत्रजातेर्विशेषणम् ॥ ३० ॥

[1] वै A B C E F J. [2] एकजातिस्त्रीन् E F J.

**क्षतत्राणं यथाशास्त्रं प्रजानां परिपालनम् ।**

कृष्यादिकं वैश्यस्य

**विशो वैशेषिकी वृत्तिः कृषिगोरक्षवाणिजम् ॥ ३१ ॥**

इज्याध्ययनदानानि त्रयाणां तुल्यानि

**इज्याध्ययनदानं तु द्विजातीनामिदं समम् ।**
**नित्यं [1]धर्मार्थमेवैतत् तत्र हिंसादिवर्जनम् ॥ ३२ ॥**

शुश्रूषा शूद्रस्य धर्मो वृत्त्यर्था च

**शुश्रूषैव तु शूद्रस्य धर्मो वृत्त्यर्थमेव च ।**
**श्रेष्ठा ब्राह्मणशुश्रूषा कनिष्ठे त्वपरे स्मृते ॥ ३३ ॥**

चतुर्णां सामान्यधर्माः

**अहिंसा सत्यमक्रोधः स्वदारनिरतिर्दया ।**
**चतुर्ष्वेतेषु धर्मोऽयं सामान्येन विधीयते ॥ ३४ ॥**

ब्राह्मणोत्तमक्षत्रिययोश्चातुराश्रम्यम्

**[2]ब्रह्मणश्चातुराश्रम्यं क्षत्रस्य तु कथंचन ।**

क्षत्रियवैश्ययोराद्यमाश्रमत्रयम्

**[3]त्रयं चाद्यं क्षत्रविशोर्नियतं धर्मलक्षणम् ॥ ३५ ॥**

1 धर्मार्थ एवैतत् A B C E F. 2 ब्राह्मणे चातुराश्रम्यम् B C E F J.
3 त्रय्याश्रम्यम् D; त्रयं त्वाद्यम् E F.

त्रैवर्णिकानां प्रागुपनयनात् कामचारः

आचार्यजन्मनः [1]पूर्वमव्रतास्ते द्विजातयः ।

उपनयने द्वितीयं जन्म

आचार्याज्जन्म सावित्र्यां द्वितीयं दिव्यमिष्यते ॥ ३६ ॥

यज्ञदीक्षायां तृतीयम्

ते[2] त्रयो यज्ञदीक्षायां जन्म प्राप्य तृतीयकम् ।

तेषां स्वाध्यायनिष्ठानां देवतुल्यत्वम्

[3]ब्राह्मणाः सवनस्थार्याः सवनान्ते यथाक्रमम् ॥ ३७ ॥
स्वाध्याये वर्तमानास्ते देवाः सर्वेऽपि ते त्रयः ।

आश्रमधर्माः

इति ते कथिता वर्णा आश्रमानपि मे शृणु ॥ ३८ ॥

उपकुर्वाणब्रह्मचारिधर्माः

आचार्याज्जन्म संप्राप्य तदन्ते नियतं [4]वसन् ।
[5]तद्धर्मकारी तन्निष्ठस्तद्भक्तस्तत्परायणः ॥ ३९ ॥
तन्निवेदितसर्वार्थो भिक्षार्थी तत्कुलाद्बहिः ।
कर्मशेषेण चाचार्यादिच्छन् स्वाध्यायमत्वरः ॥ ४० ॥

1 पूर्वमप्रजास्ते D.
2 त्रयोऽपि यज्ञदीक्षायाम् D.
3 ब्राह्मणाः सवनस्थास्ते सवनान्ते यथा यथा D.
4 वसेत् A B C E F J.
5 तत्कर्मकारी D.

उपासीत बहिः संध्ये [1]नित्यस्त्राध्यनसूयकः ।
कुर्वन्निन्द्रियसंरोधं[2] भूतानामनुकम्पकः ॥ ४१ ॥
वह्निं समिद्भिरिन्धान उभे संध्ये समाहितः ।
धर्मज्ञसमयस्थं चाप्याचरन्नात्मनो व्रतम् ॥ ४२ ॥
उपकुर्वाणको नाम स्वाध्याये सिध्यति द्विजः ।

समाप्तब्रह्मचर्यस्येच्छया आश्रमान्तरप्राप्तिः

वेदस्नायी व्रतस्नायी गुरवे दक्षिणां ददत् ॥ ४३ ॥
प्राप्यानुज्ञां गुरोरिच्छेच्चतुर्णामेकमाश्रमम् ।

नैष्ठिकब्रह्मचारिधर्माः

यदीच्छेद् ब्रह्मचर्यं स ब्रह्मचारी स्वमाश्रमम् ॥ ४४ ॥
आचार्यमेव सेवेत युक्त आ देहपातनात् ।
जिज्ञासुर्ब्रह्मचारी स लभेत ज्ञानमुत्तमम् ॥ ४५ ॥
अन्यथा पुण्यलोपः स्यादिति वेदानुशासनम् ।

गृहस्थधर्माः

अथ चेद्रोचयेत् कर्तुं गार्हस्थ्यं धर्ममुत्तमम् ॥ ४६ ॥
लब्धानुज्ञो गुरोः स्नात्वा संप्राप्य विधिवत् स्त्रियम् ।
तया सह चरेद्धर्मं नित्यं स्वाध्यायतत्परः ॥ ४७ ॥
श्राद्धकृत् सत्यवादी च नित्यं चैवातिथिप्रियः ।

[1] नित्यं स्यादनसूयकः A B C E F J. [2] संकोचम् A B C E F J.

संकोचिनीं [1]चरन् वृत्तिमनसूयुरलोलुपः ॥ ४८ ॥
स्नातकव्रतशाली च पञ्चयज्ञपरायणः ।

गृहस्थस्यापि पाञ्चरात्रधर्मावश्यकता

[2]पञ्चकालरतो नित्यं दयाक्षान्तिधृतिस्थितिः[3] ॥ ४९ ॥
अक्रोधसत्यह्रीविद्याशौचास्तेयदमस्थितः ।
अनायासो ह्यकृपणः शास्त्रीये मङ्गले रतः ॥ ५० ॥
मनसा कर्मणा वापि यज्ञान् सर्वान् समाचरेत् ।

निष्कामकर्मिणो गृहस्थस्यापि मोक्षप्राप्तिः

अकामहतया बुद्धया त्यक्ताहंकारलोभया ॥ ५१ ॥
सत्तर्कव्यवसायाभ्यां लोचनाभ्येत्यसंभवम्[4] ।
श्रौतस्मार्तक्रियानित्यो नित्यनैमित्तिके रतः ॥ ५२ ॥
ईदृग्गृहस्थो जिज्ञासुः प्राप्य ज्ञानमनुत्तमम् ।
प्राप्तवेदान्तविज्ञानो वैष्णवं श्रयते पदम् ॥ ५३ ॥

सकामस्य गृहस्थस्य ब्रह्मलोकप्राप्तिः

केवलो [5]धर्मनित्योऽसौ ब्रह्मलोके महीयते ।

वानप्रस्थधर्माः

गार्हस्थ्यादथवा [6]पूर्वं वानप्रस्थ्यं श्रयेत् पदम् ॥ ५४ ॥

1 त्वरन् A B C E F.
2 जपयज्ञरतो D.
3 स्थितः B.
4 इत्थमेव सर्वेषु कोशेषु पाठः.
5 ब्रह्मनित्यः A B C E F J.
6 पूर्वाद्वानप्रस्थम् B C E F; पूर्णाद्वानप्रस्थम् A.

गृहस्थस्तु यदा पश्येद् वलीपलितमात्मनः ।
अपत्यस्यैव चापत्यं वनं चाथ समाश्रयेत् ॥ ५५ ॥
ग्राम्याहारं परित्यज्य वन्याहारोपयोगवान् ।
बहिरात्मनि वाप्यग्निं जुह्वद्यज्ञपरायणः ॥ ५६ ॥
वत्सरे वत्सरे त्रीणि तपांसि विधिवच्चरेत्[1] ।

वानप्रस्थस्यापि निष्कामकर्मिणो मोक्षप्राप्तिः

कुर्वन् वनस्थः शास्त्रार्थानकामहृतया धिया ॥ ५७ ॥
सेवमानो व्रतस्थश्च तास्ता दीक्षाः समाहितः ।
वृत्तिसंकोचकृच्छ्रुभ्रस्तत्त्वजिज्ञासया युतः ॥ ५८ ॥
संप्राप्य तत्त्वविज्ञानं वैष्णवं श्रयते पदम् ।

सकामस्य तस्य ब्रह्मलोकप्राप्तिः

केवलो [2]धर्मनित्यश्च महाप्रस्थानमाचरन्[3] ॥ ५९ ॥
वीतशोकभयो वन्यो ब्रह्मलोके महीयते ।

संन्यासिधर्माः

काषायवसनं प्राप्य द्वाभ्यामादित एव [4]वा ॥ ६० ॥
द्वयोरेकस्य वा पश्चात् पारिव्राज्यं समाचरेत्[5] ।
प्राजापत्यां निरुप्येष्टिं सर्ववेदसदक्षिणाम् ॥ ६१ ॥

[1] चरन् D.
[2] नित्यधर्मश्च A.
[3] चरेत् A B C.
[4] च B C.
[5] चरन् D.

लब्धानुज्ञो गुरोर्वाथ [1]कर्मश्रान्तो महाव्रती ।
समारोप्याग्निमानग्नींश्चतुर्थाश्रममावसेत्[2] ॥ ६२ ॥
विमुक्तः सर्वदोषेभ्यो विरक्तो विषयेषु च ।
उच्चावचां विचिन्वंश्च गतिमस्यान्तरात्मनः ॥ ६३ ॥
अन्वीक्षमाणः सूक्ष्मं च परमात्मानमात्मना ।
प्रसंख्यानपरो नित्यं वेदान्तज्ञानतत्परः ॥ ६४ ॥
समाधिस्थश्च सततमुग्रव्रतपरोऽपि वा ।
वास्यैकं तक्षतो बाहुं चन्दनेनैकमुक्षतः ॥ ६५ ॥
विद्वेषमनुरागं वा द्वयोरप्यविचिन्तयन् ।
वायुभूतः खवत् स्वस्थ उर्वीस्थिरमना मुनिः ॥ ६६ ॥
वारिवच्चार्द्रचेतास्तु शुचिर्ज्वलनवत् सदा ।
गाङ्गो ह्रद इवाक्षोभ्यः शून्यागारसमाकृतिः ॥ ६७ ॥
धियालोचितसर्वार्थो धिया त्यक्तपरिग्रहः ।
धिया स्वीकृतसच्छास्त्रो धिया तृप्तः सुशुद्धया ॥६८॥
दत्तसर्वाभयो योगी [3]सर्वैर्दत्ताभयस्तथा ।
स्वाध्यायाद्योगमासीनो योगात् स्वाध्यायमामनेत्[4] ॥
अब्रुवन् केनचित् किंचित् प्राप्ते कालेऽप्यविब्रुवन् ।
समः सर्वेषु भूतेषु मातृवत् पितृवत् सदा ॥ ७० ॥
आत्मज्योतिरात्मरतिः प्रसीदन्नात्मनि स्वयम् ।

[1] कर्मशान्तः A B C; कर्माश्रान्तः E.
[2] आवसन् A B C E F J.
[3] सर्वैर्मुक्ताभयः D.
[4] आत्मनः D.

प्रज्ञाप्रासादमारूढो विमुक्तः सर्वतो जनैः ॥ ७१ ॥
भूमिष्ठानिव शैलस्थः पश्यन् सर्वानवस्थितान् ।
[1]कैश्चिन्मूक इति प्रोक्तः कैश्चिद्धीर इतीप्सितः ॥ ७२ ॥
कैश्चित् कः स्विदिति प्रोक्तः [2]कैश्चिद् घोर इतीरितः ।
उपेक्षाकरुणामैत्रीमुदितालिङ्गितः सदा ॥ ७३ ॥
विवेकबोधसंतोषैर्नित्यं परिजनैर्वृतः ।
भैक्षाशी तुष्टिसंपूर्णो [3]धर्मैरीदृग्गुणैर्युतः ॥ ७४ ॥

संन्यासिनः परमपुरुषोपासनान्मोक्षप्राप्तिः

प्रदीप इव शान्तार्चिः परिव्राड् [4]ध्यानमास्थितः ।
देहसंस्कारनाशेन[5] वैष्णवं श्रयते पदम् ॥ ७५ ॥

अध्यायार्थनिगमनम्

इति वर्णाश्रमा ये[6] ते तुल्यवैशेषिकैर्युताः ।
[7]धर्मास्ते लेशतः प्रोक्ताः किं भूयः श्रोतुमिच्छसि ॥

इति श्रीपाञ्चरात्रे तन्त्ररहस्ये अहिर्बुध्न्यसंहितायाम् अधिकारि-
निरूपणं नाम पञ्चदशोऽध्यायः

आदितः श्लोकाः ९००

[1] कैश्चिन्मूढः D.
[2] कैश्चिच्चोरः A B C E F J.
[3] यमैः A B C E F J.
[4] ध्यानसंमतः D.
[5] नाशे सः B E F J.
[6] एते तुल्याः सर्वाश्रमैर्युताः A B C E F J.
[7] धर्मस्ते लेशतः प्रोक्तः A B C.

## वर्णोत्पत्तिनिरूपणं नाम षोडशोऽध्यायः

रक्षातदधिकारिविषयः प्रश्नः

**नारदः—**

**भगवंस्त्रिदशारिघ्न सर्वज्ञ वृषकेतन ।**
**प्रमाणार्थः श्रुतोऽस्माभिः सहेतुः सविपर्ययः ॥ १ ॥**
**सर्वस्यास्य च का रक्षा कश्च रक्षाधिकारवान् ।**
**सप्रकारमिदं द्वन्द्वं भगवन् वक्तुमर्हसि ॥ २ ॥**

तत्प्रतिवचनारम्भः

**अहिर्बुध्न्यः—**

**सुदर्शनमयी रक्षा देवस्य हरिमेधसः ।**
**[1]स्वमृते विष्णुसंकल्पं रक्षान्या न विधीयते ॥ ३ ॥**

वस्तुनिष्ठसामर्थ्यस्य सुदर्शनात्मकत्वम्

**या सा दिव्या क्रियाशक्तिर्विष्णुशक्त्यंशसंभवा ।**
**सुदर्शनाह्वया देवी सर्वकृत्यकरी विभोः[2] ॥ ४ ॥**
**तन्मयं विद्धि सामर्थ्यं सर्वं सर्वपदार्थजम् ।**
**तत्त्वानां तात्त्विकानां च चेतनाचेतनात्मनाम् ॥ ५ ॥**

[1] तत्र ते B C; संभूते D ; स्वभूते J. [2] हरेः D.

प्रमाणानां विचित्राणां भावाभावयुगस्य च ।
धर्मस्यार्थस्य कामस्य मुक्तेर्बन्धत्रयस्य च ॥ ६ ॥
यद्यत् स्वकार्यसामर्थ्यं तत्तत् सौदर्शनं [1]वपुः ।

शस्त्रास्त्रव्यूहस्य रक्षासाधनत्वम्

[2]उक्ता शस्त्रास्त्ररूपा ते विष्णुसंकल्पविक्रिया ॥ ७ ॥
यया देवो जगन्नाथः काले काले जनार्दनः ।
अवतीर्याथवाविश्य भूतानि [3]लघयेद्भुवम् ॥ ८ ॥

मन्त्रग्रामस्यापि रक्षासाधनत्वम्

नानामन्त्रमयी चान्या यन्त्रकोशविचित्रिता ।
[4]वेदतन्त्रोभयोद्भूता नानाप्रसवशालिनी ॥ ९ ॥
साक्षाद्विष्णोः क्रियाशक्तिः शुद्धसंविन्मयी परा ।

मन्त्रमयरक्षायां ब्राह्मणस्यैवाधिकारः

सर्वतत्त्वार्थपारज्ञः सर्वविद्याविशारदः ॥ १० ॥
अस्कन्ननित्यनैमित्तः शुद्धाभिजनसंमतः ।
त्रिशुक्लो निस्त्रिसंदेहः षट्कर्मविधिपारगः ॥ ११ ॥
ब्राह्मणो ब्रह्मयोनिस्थः स्वदारनिरतः शुचिः ।
अधिकुर्यात् क्रियाशक्तिं विष्णोर्मन्त्रमयीं पराम् ॥

[1] परम् D.
[2] उक्तशास्त्रार्थरूपा A B C F J; उक्ता शास्त्रार्थरूपा E.
[3] ललयेद्भुताम् A B C E F J.
[4] वेदतन्त्रमयोद्भूता A B C E F J.

ब्राह्मणस्यापि राजानवष्टब्धस्य रक्षायामसामर्थ्यम्

ब्राह्मणो नानवष्टब्धस्तया कार्यमिहार्हति ।
अवष्टभ्य तु राजानं जगतोऽर्थे तया चरेत् ॥ १३ ॥

राजप्रशंसा

राजा हि परमं भूतं सर्वदेवमयो विभुः ।
क्रियाशक्तेरधिष्ठानं वैष्णव्या भगवन्मयः ॥ १४ ॥
मूर्धतो हि पुरा देवो राजानमसृजत् प्रभुः ।
मूर्धाभिषिक्तस्तेनासौ सर्वभूतोपरि स्थितः ॥ १५ ॥
द्विगुणो [1]ब्राह्मणो राजा वेदशास्त्रेषु गीयते ।

राजद्विषां दृष्टादृष्टयोः प्रत्यवायः

यस्तु तं द्वेष्टि संमोहात् स हरिं द्वेष्टि दुर्मतिः ॥ १६ ॥
यो हरिं द्वेष्टि संमोहात् स लक्ष्मीं द्वेष्टि मानवः ।
लक्ष्म्या द्वेष्टा तु दुर्मेधाः सर्वधर्मेषु[2] हीयते ॥ १७ ॥
स भ्रष्टः सर्वलोकेभ्यः [3]सर्वदेवबहिष्कृतः ।
अप्रतिष्ठे तमस्यन्धे समास्तिष्ठति शाश्वतीः ॥ १८ ॥

अतो राजा अवश्यं बहु मन्तव्यः

ऐहिकामुष्मिकीं लक्ष्मीमतः प्रेप्सुरुदारधीः ।
राजानं बहु मन्येत सर्वलोकाधिदैवतम् ॥ १९ ॥

[1] ब्रह्मणो A B C J.
[2] धर्मेण D.
[3] सर्ववेद B C E.

केवलयोर्ब्राह्मणनृपयोर्लक्ष्म्या अस्थिरत्वम्

ब्राह्मणे केवले लक्ष्मीर्न वसत्यतिमार्दवात् ।
अत्यौग्र्याद् बिभ्यती क्षत्रे केवले नेच्छति स्थितिम् ॥

संसृष्टयोस्तयोर्लक्ष्म्याः स्थैर्यम्

ब्रह्मक्षत्रे तु संपृक्ते ह्यग्नीषोममयात्मनि ।
[1]निवसत्यतिसंप्रीता[2] ग्रीष्मे शीत इव ह्रदे ॥ २१ ॥

तत्र हेतुः

द्वे हि ते बिभृतो लोकस्थितिं संभूय तेजसी ।
तयोर्हि सकला शक्तिः स्थिता विष्णोः क्रियात्मिका ॥

अन्वयव्यतिरेकाभ्यां तत्र दृष्टान्तकथनम्

महत्या हि यथा नद्याः कुसरो न धृतेः क्षमम् ।
एवं लघुर्नरो नैव क्रियाशक्तेर्धृतौ क्षमः ॥ २३ ॥
पारावारो यथा धीरो महतीं तां [3]प्रतीच्छति ।
[4]ब्रह्मपृक्तं तथा क्षत्रं क्रियाशक्तिं [3]प्रतीच्छति ॥ २४ ॥
पूर्यमाणं महानद्या कुतटाकं विदीर्यते ।
रक्ष्यमाणस्तथाप्येको नैव पर्याप्यते तया ॥ २५ ॥

राजार्थं प्रयुक्ताया अपि क्रियाशक्तेः सर्वप्रजोपकारकत्वकथनम्

यथा समुद्रगामिन्यां महत्यां सरिति ध्रुवम् ।

[1] निवसत्यनिशं D.
[2] पूता B C.
[3] प्रयच्छति B C E F J.
[4] ब्रह्मवृत्तम् D.

उपस्नेहेन पूर्यन्ते सरांस्यन्यानि भूयसा ॥ २६ ॥
प्रयुक्तायां क्रियाशक्तौ चक्रे वै चक्रवर्तिनः ।
चक्रस्था हि प्रजाः सर्वाः [1]समेधन्ते तथा श्रिया ॥

चक्रवर्त्यादीनां क्रियाशक्तावधिकारतारतम्यम्

चक्रवर्ती नृपः पूर्वां द्वितीयां मण्डलेश्वरः ।
[2]अधिकुर्यात् क्रियाशक्तिं तृतीयां विषयेश्वरः ॥ २८ ॥
महामात्रो द्विजातिर्वा यो बह्वी रक्षति प्रजाः ।
[3]इमां नैको नरः कुर्यादेकस्मै मानवाय तु ॥ २९ ॥

क्रियाशक्तिस्वरूपकथनारम्भः

अधिकारः क्रियायाश्च शक्तेस्ते संप्रदर्शितः ।
[4]रूपमस्या यथावन्मे गदतस्तन्निशामय ॥ ३० ॥

सामान्यतः शक्तेर्द्वैविध्यम्

उन्मेषः परमः शक्तेर्विष्णोः कोटयंशकोटितः[5] ।
भाव्यभावकभेदेन स द्विधा [6]व्यवतिष्ठते ॥ ३१ ॥
भावको विष्णुसंकल्पः सुदर्शनपराह्वयः[7] ।

शक्तेः पर्यायशब्दाः

[8]सैषा देवी क्रियाशक्तिः सामर्थ्यं योग इत्यपि ॥३२॥

1 समेध्यन्ते E F J.
2 अधिकुर्यादिमां शक्तिं D.
3 इमामेको B C E F J.
4 रूपावस्थां A B C E F J.
5 कोटिशः E F; कोटिभिः J.
6 त्ववतिष्ठते D.
7 समाह्वयः A B C J.
8 D omits eight lines from here.

पारमेष्ठ्यं महातेजो मायायोग इतीदृशैः ।
शब्दैः [1]प्रकारसामर्थ्यैः संकल्पः सोऽभिधीयते ॥३३॥

भावकस्य भूत्यंशप्रवर्तकत्वम्

भाव्यो नाम य उन्मेषः सा भूतिरिति गीयते ।
शुद्ध्यशुद्धिमयी सेति पूर्वमेव निदर्शितम् ॥ ३४ ॥
ज्वलनस्येव सा ज्वाला संकल्पेन प्रतन्यते ।
एको नारायणो देवस्तस्य भावानुगामिनी ॥ ३५ ॥
तस्या देव्याः क्रियाशक्तेः स्थितिं मन्त्रमयीं शृणु ।

क्रियाशक्तेर्नादात्मकत्वम्

उद्यती सा क्रियाशक्तिर्भजते नादरूपताम् ॥ ३६ ॥

नादस्य दीर्घघण्टाध्वनिसाम्यम्

तं नादं परमं विद्धि दीर्घघण्टानदोपमम् ।

तस्य योगिमात्रप्रत्यक्षविषयत्वम्

परमैर्योगिभिः स्वान्ते स साक्षात् क्रियते स्वयम् ॥३७॥

क्वचिदुन्मेषात् तस्य बिन्दुरूपत्वम्

स बुद्बुदवदम्भोधौ क्वचिदुन्मेषमृच्छति ।
अनुद्रुतगतैः [2]सोऽथ योगिभिर्बिन्दुरुच्यते ॥ ३८ ॥

[1] प्रकाशसामर्थ्यैः J. [2] सोऽयम् B C.

बिन्दोर्नामनामिरूपेण द्वैविध्यम्

**नामनामिस्वरूपेण स बिन्दुर्भिद्यते द्विधा ।**

नाम्नः शब्दब्रह्मत्वम्

**तत्र नामोदयं प्राप्य शब्दब्रह्म प्रवर्तते ॥ ३९ ॥**

नामिनो भूतिरूपत्वम्

**प्राप्य नाम्युदयं भूतिः पूर्वोद्दिष्टा प्रवर्तते ।**

वर्णोत्पत्तिकथनारम्भः

**नामोदयमिदानीं मे [1]मन्त्राध्वानं मुने शृणु ॥ ४० ॥**
**सा हि बिन्दुमयी शक्तिः स्वेच्छया नामतां गता ।**
**अवर्णोऽप्येकधा पूर्वमनुत्तरमयात्मना[2] ॥ ४१ ॥**

बिन्दोर्द्वैविध्यम्

**स्वरव्यञ्जनभेदेन स द्विधा व्यवतिष्ठते ।**
**बिन्दुशक्तेरमुष्यास्तु भूयोऽपि शृणु विस्तरम् ॥ ४२ ॥**
**उदेत्येषा विसृष्टाख्या शब्दसर्गमयी परा ।**
**एकानेकविचित्रार्था[3] नानावर्णविकारिणी ॥ ४३ ॥**
**साक्षात् सोमस्वरूपा सा लक्ष्म्याः शब्दमयी तनुः ।**
**स्वरव्यञ्जनरूपेण सा विवर्तं प्रपद्यते ॥ ४४ ॥**

[1] मन्त्रध्यानम् D.
[2] मलात्मना D; मथात्मना E F J.
[3] विचित्रस्था A B C E F J.

अकारात्मना तस्य समुन्मेषः

[1]अ इत्यादिसमुन्मेषः सोऽनुत्तर उदीर्यते ।

अकारस्य सर्ववाग्रूपत्वम्

सर्वा वागयमेवैकस्तत्तदाकारभेदवान् ॥ ४५ ॥

बिन्दोरिकारोकारात्मना समुन्मेषः

स इच्छन्निरिति व्यक्त उन्मिषन्नुरिति स्मृतः ।

यथोक्तवर्णत्रयस्य सर्वस्वरविभावकत्वम्

एत एव त्रयो वर्णाः सर्वस्वरविभावनाः ॥ ४६ ॥

तेषां दीर्घतापत्तिः

अनुत्तरः स आनन्द आभावं प्रतिपद्यते ।
इरिच्छया [2]स ईशान ईभावं प्रतिपद्यते ॥ ४७ ॥
[3]उरुन्मिषन्नूनरूप ऊभावं प्रतिपद्यते ।

एचामुत्पत्तिः

अनुत्तरेच्छासंधानादेकारो नाम जायते ॥ ४८ ॥
अनुत्तराद्भवन् भूय ऐभावं प्रतिपद्यते ।
दिव्यादनुत्तरोन्मेषादोकारो नाम जायते ॥ ४९ ॥
अनुत्तराद्भवन् भूय औभावं प्रतिपद्यते ।

[1] अ इत्यस्यायमुन्मेषः A B C E F J.
[2] द्विरीशाना A B C E F J.
[3] उन्मिषन्नूनरूपेण D.

तेषां संध्यक्षरत्वम्

**संध्यात्मान इमे कूटाश्चत्वारः समुदाहृताः ॥ ५० ॥**

तेषामवयवार्थाविष्करणम्

**अनुत्तरेच्छायोगेन ह्येधमानः स ए स्मृतः ।**
**भूयोऽनुत्तरसंयोगादै चाप्यैश्वर्यवान् स्मृतः ॥ ५१ ॥**
**[1]दिव्यादनुत्तरोन्मेषादोतः सर्वत्र [2]ओ स्मृतः ।**
**अनुत्तरात् स संभूय और्जित्यादौगतिं गतः ॥ ५२ ॥**

ऋऌवर्णोत्पत्तिः

**एकत्रिभागयो ऋद्ध्या अरयो ऋ स्मृतो बुधैः ।**
**अलयोश्च तथा [3]ऌत्वमाकारः स्यादनुत्तरः ॥ ५३ ॥**
**भूयोऽप्यनुत्तरोद्योगात् प्लवमानस्तथा स्मृतः ।**
**एवं [4]चतुर्दशोद्योगान्नानाकारविभाविनी ॥ ५४ ॥**
**[5]नटीव कुण्डलीशक्तिराद्या[6] विष्णोर्विजृम्भते ।**
**अस्य रूपद्वयं सूक्ष्मं सृष्टिसंहारकारणम् ॥ ५५ ॥**
**[7]अनाख्येया महासत्ता क्रियाशक्तिः क्रमेण सा ।**
**शब्दात्मना [8]विवत्स्यन्ती सा पुरा याति सृष्टिताम् ॥**

1 दिव्यादनुत्तमोन्मेषात् D.
2 चो D.
3 अनुमितोऽयं पाठः; कोशेषु तु 'क्लृतं' इत्येव दृश्यते.
4 चतुर्दशोद्योगा नाना E F J.
5 नदीव A B C F J.
6 आख्या A B C F J.
7 अनाख्या या D.
8 विवस्वन्ती D; विवत्स्यन्ती B E F J.

सृष्टिः सर्गो विसर्गश्च विसर्जनमितीदृशैः ।

नाभौ कुण्डल्याः पश्यन्तीत्वम्

मूलाधारात् समुद्यन्ती सा शान्ता सा निरञ्जना ॥
अङ्क्ष्यन्ती साञ्जनैस्तैस्तैः संस्कारैः समनुत्तरम् ।
[1]दृष्टिदृश्यात्मतां प्राप्य शब्दार्थत्वविवर्तिनी ॥ ५८ ॥
पश्यन्ती नाम नाभौ सा योगदृश्योदयं गता ।
शक्तिः सा वैष्णवी सत्ता मन्त्रमाता समञ्जना ॥ ५९ ॥
अधिकारक्षयं यान्ति योगिनस्तां गता धिया ।

तस्या हृदब्जे विस्तारः

विजृम्भणोन्मुखी[2] लक्ष्मीः पश्यन्ती सा क्रियामयी ॥
[3]भावं संस्कृत्य संस्कारैः [4]समर्थाख्यां विवर्तनाम् ।
भृङ्गीव निनदन्ती सा [5]हृदब्जे याति विस्तृतिम् ॥ ६१ ॥
वाच्यवाचकभावेन लोलीभूता क्रियामयी ।
तदा संस्कृतयः सर्वाः स्मृतीः पुष्यन्ति वाच्यगाः ॥

तस्याः कण्ठदेशे विसर्गात्मना परिणामः

एवंविधा क्रियाशक्तिस्तत्तद्वाच्यविवक्षया ।
[6]शब्दरूपं समास्थाय कूटस्थं व्यक्तिवर्जितम् ॥ ६३ ॥

[1] द्रष्टृ B C D.
[2] उन्मुखा D.
[3] एवम् B C E F J.
[4] स्वमर्थाख्यविवर्तनम् A B C E F J.
[5] हृदये A B C E F J.
[6] शाब्दं स्वरूपमास्थाय D.

[1]सा यात्यनुत्तरस्पृष्टा कण्ठं शक्तिर्विसर्गिणी ।
[2]पुनः सानुत्तरे स्थित्वा चतुर्दशविभाविनी ॥ ६४ ॥
अनुत्तरोत्तरा याति कण्ठे हेति विजृम्भणम् ।
ततः सादिमयी भूत्वा [3]कान्तव्यञ्जनशालिनी ॥ ६५ ॥
अनुत्तरमयी भूयो बिन्दौ संप्रतितिष्ठति ।
बिन्दुः संहार इत्युक्तो विसर्गः सृष्टिरुच्यते ॥ ६६ ॥
इमौ द्वौ सृष्टिसंहारौ लेशतस्ते निदर्शितौ ।
मत्तः शृणु मुने भूयः स्वराणां विविधां ततिम् ॥६७॥

स्वराणामवान्तरभेदनिरूपणम्

यदादित्रितयं पूर्वं स्वरकूटस्थमीरितम् ।
अष्टादशविधं तत्तु प्रत्येकं योगिनां मतम् ॥ ६८ ॥
स्वरव्यञ्जनकूटौ यौ ऋ ऌ इत्युदितौ पुरा ।
आद्योऽष्टादशधान्त्यस्तु तयोर्द्वादशभेदवान् ॥ ६९ ॥
इति स्वराणां पञ्चानामशीतिश्चतुरुत्तरा ।
[4]स्वरकूटास्तु चत्वारो ये तेषामीदृशी भिदा ॥ ७० ॥
शतानि त्रीण्यथैकारा विंशतिश्चतुरुत्तरा ।
एवं पञ्च सहस्राणि शतान्यष्टावनुष्टुभाम्[5] ॥ ७१ ॥

[1] सा यात्यनुत्तरं A D.
[2] D omits four lines from here.
[3] कान्ता A B C E.
[4] A B C E F J omit two lines from here.
[5] अनुष्टुभः D.

ऐकारः कथितः सम्यक् शिक्षातत्त्वविशारदैः ।
ओकारश्च तथौकार इयद्भेदौ प्रकीर्तितौ ॥ ७२ ॥
[1]रम्यौ गौरौ यमित्येव संख्या संभूय संधिगा ।
योगिनस्तां प्रपश्यन्ति [2]मन्यन्ते मनसा नराः ॥७३॥
संभूय [3]स्वरसंख्या तु [4]स्तब्धौ गौरो यमित्यसौ ।
द्विस्तावन्तः स्वरा ज्ञेयाः सृष्टिसंहारभेदिताः ॥ ७४ ॥
सर्गयुक्ता बिन्दुयुक्ताः केवला इति ये त्रिधा ।
देहोऽर्थः सङ्ग इत्येव ते संभूय चतुर्दश ॥ ७५ ॥
सृष्टिः सोमः समाख्याता बिन्दुः सूर्य उदीर्यते ।

स्वराणां सूर्यचन्द्रकिरणात्मता

पूर्वे सप्त स्वराः सूर्यकिरणाः परिकीर्तिताः ॥ ७६ ॥
सोमस्य किरणा ज्ञेया आकारादय उत्तरे ।

तयोरहोरात्रप्रवर्तकत्वम्

अहर्नयति सूर्यस्तु स्वरैः पिङ्गलया चरन् ॥ ७७ ॥
रात्रिं सृजति सोमस्तु स्वरैः स्वैरिडया चरन् ।

परशक्तेः सुषुम्नासंचारित्वम्

स्वराणां या परा विष्णोः कूटस्था शक्तिरुज्ज्वला ॥

[1] रम्यौ गौरौ यमित्येव संख्याः संभूय संधिगाः D.
[2] मर्त्यत्वे मानसाः A B C.
[3] स्वात्मसंख्या तु A B C D.
[4] तल्लो गौरो E; तल्पो B C F.

सुषुम्नया संचरते शब्दब्रह्म वितन्वती ।
इति ते लेशतः प्रोक्ता स्वराणां गतिरुत्तमा ॥ ७९ ॥

व्यञ्जनसृष्टिकथनारम्भः

अथ व्यञ्जनसृष्टिं ते कथयामि मुने शृणु ।

विसर्गस्य वासुदेवमूर्तित्वम्

अनुत्तरोत्तरा सृष्टिर्या सा हेति [1]पुरोदिता ॥ ८० ॥
आदिव्यूहस्य देवस्य वासुदेवस्य सा तनुः ।
अच्युतो बिन्दुयुक्तोऽसौ रुन्धन्नाधारमादिमम्[2] ॥८१॥
साग्निं दीपयते नादं योगारम्भे तु योगिनाम् ।
अच्युतः सृष्टियुक्तोऽसावूर्ध्वसृष्टिं करोति च ॥ ८२ ॥
अच्युतः सृष्टियुक्तस्तु बहिःसृष्टिं करोत्ययम् ।

तस्मादूष्मणामुत्पत्तिस्तेषां चातुरात्म्यं च

[3]हात् सात् षात् शात्ततः शश्वच्छक्त्यूष्माण उदीरिताः ॥
चातुरात्म्यमिदं प्रोक्तं चतुर्ब्रह्मेति शब्दितम् ।

क्षकारसहितानां तेषां ब्रह्मशब्दवाच्यत्वम्

क्षेण कूटेन संयोगात् पञ्चब्रह्मेति शब्दितम् ॥ ८४ ॥
क्षस्तु सत्यस्य बीजं तु प्रोक्तः सात्त्वतशासने ।

1 पुरेरिता B C E F. 2 सादिमम् D.
3 हात् सात् षात् शात् ततस्तद्वच्छक्त्यूष्माण इतीरिताः A B C E F.

[1]कषकूटमुशन्त्यन्ये नित्यं तत्प्रतिरूपकम् ॥ ८५ ॥

अन्तःस्थानामुत्पत्तिस्तेषां संज्ञात्रयं च

शाद्रस्तस्माल्ल उद्दिष्टो लाद्रो राद्यः प्रजायते ।
[2]धारणा नाम विज्ञेया [3]याद्या विश्वस्य धारणात् ॥८६॥
अन्तःस्था इति च प्रोक्ता अन्तःस्थपुरुषेशयाः ।
अवस्था इति च प्रोक्ता [4]ईशावतरणक्रमे ॥ ८७ ॥

मकारोत्पत्तिः

[5]यकारादीशशक्तिस्थान्मकारो नाम जायते ।
अनुत्तरोत्तरो बिन्दुर्म इति प्रतिशब्द्यते ॥ ८८ ॥

तस्य सर्वचेतनसमष्टिरूपत्वं जीववाचित्वं च

चेतनानां तु सर्वेषां समष्टिः सा निगद्यते ।
[6]अस्मदर्थोऽयमुद्दिष्टः सोऽयमुत्तमपूरुषः ॥ ८९ ॥

भकारोत्पत्तिस्तस्य च प्रकृतिवाचित्वम्

सूक्ष्मेक्षयानुवृद्धौ सा प्रकृत्या [7]भोग्यरूपया ।
भ इत्येव मकारात् सा पुनः स्थूला विविच्यते ॥

[1] कक्ष D; तक्ष A; तं क्षकूटम् B C E F. [2] सारणा D.
[3] साद्या विश्वास A B; पाद्या विश्वस्य D; साद्या विक्षस्य C; सामविश्वास E F.
[4] ईशाय D. [5] यकारादीशयुक्ति D.
[6] D omits three lines from here. [7] भोग A B C.

बादिटान्तत्रयोदशवर्णोत्पत्तिः

**भोगोपकरणाकारा बहिरन्तर्व्यवस्थया ।**
**त्रयोदशात्मना व्यक्ता [1]बाद्या टान्ता महामुने ॥ ९१ ॥**

बादित्रयस्य महदहंकारमनोवाचित्वम्; तवर्गस्य ज्ञानेन्द्रियवाचित्वम्

**बुद्धिश्चाहंकृतिश्चैव मनश्चेति मनीषिभिः ।**
**[2]बादित्रितयमुद्दिष्टं नादि तान्तं तु धीन्द्रियम् ॥ ९२ ॥**

टवर्गस्य कर्मेन्द्रियवाचकत्वम्

**णादि टान्तं तु कर्माख्यमथ भोग्योद्भवो द्विधा ।**

चवर्गोत्पत्तिः; तस्य तन्मात्रवाचित्वम्

**ञादि चान्तं तु तन्मात्रपञ्चकं प्रविजृम्भते ॥ ९३ ॥**

कवर्गोत्पत्तिः; तस्य महाभूतवाचित्वम्

**ङादिः पञ्चमहाभूता कान्तान्या वर्णसंततिः ।**
**यस्माद्यस्योद्भवो वर्णात् [3]तत्त्वसृष्ट्यां तु तत् स्मरेत् ॥**

ळकारोत्पत्तिः

**लस्यैव करणान्यत्वे ळकारो नाम जायते ।**

व्यञ्जनानां वैविध्यम्

**चतुस्त्रिंशदिति प्रोक्ता वर्णास्ते व्यञ्जनात्मकाः ॥ ९५ ॥**

[1] पाद्या D. [2] पादि D.
[3] तत्त्वसृष्ट्यादि B C D E F.

एवमेकैकशो योगाद्भेदाः स्युर्बहवः स्वरैः ।
चतुःपञ्चाशदुद्दिष्टाः ककारास्तत्र वै मुने ॥ ९६ ॥
किकाराश्च कुकाराश्च कृकाराश्च तथाविधाः ।
क्लृकारास्तत्र षट्त्रिंशत् केकारा रसधीर्मुने ॥ ९७ ॥
तथाविधाश्च कोकारा योगिभिः संख्यया स्मृताः ।
स्तब्धस्वार्थोऽयमित्येवं [1]कैकारो योगिभिः स्मृतः ॥
कौकाराश्च तथासंख्याः सप्त संहृत्य ते पुनः ।
देहोऽर्थः सङ्ग इत्येवं संख्याताः परमर्षिभिः ॥ ९९ ॥
[2]वेगव्यञ्जनसंख्यैव [3]देहोऽर्थः साङ्गभेदिताः ।
नीतिमत्प्रतिभा[4] हेति संख्यया जायते मुने ॥ १०० ॥
स्वरव्यञ्जनसंयोगादियं संख्या समीरिता ।
एकद्वित्र्यादिसंयोगैर्व्यञ्जनानां क्रमात् क्रमात् ॥ १०१ ॥
केवलानां सस्वराणां ततः संख्याविधिः स्मृतः ।

वर्णमातृकाया भगवच्छक्तिप्रोतत्वम्

[5]पदवाक्यप्रमाणादिनानाकोरकशालिनी ॥ १०२ ॥
वर्णस्तम्बा [6]ज्ञानमूला शब्दशक्तिर्हि वैष्णवी ।
विष्णुना देवदेवेन तेन शक्तिमता स्वयम् ॥ १०३ ॥
स्थूलसूक्ष्मपरत्वेन प्रोतेयं वर्णसंततिः ।

1 कैकारा योगिभिः स्मृताः D.
2 योग B C.
3 देहोत्थाः सङ्ग B C.
4 प्रतिभागेति A B C E F J.
5 प्रबन्धादि D E F.
6 ज्ञानमूलम् A B C E F.

भगवदाज्ञया रुद्रांशस्यापि वर्णमातृकाधिष्ठातृत्वम्

**तदाज्ञयास्मदंशैश्च रुद्रैर्नानाविधैरियम् ।**
**मन्त्रयोनिरियं देवी मातृकाधिष्ठिता सदा ॥ १०४ ॥**

इति श्रीपाञ्चरात्रे तन्त्ररहस्ये अहिर्बुध्न्यसंहितायां वर्णोत्पत्ति-
निरूपणं नाम षोडशोऽध्यायः

आदितः श्लोकाः १००४

## वर्णसंज्ञानिरूपणं नाम सप्तदशोऽध्यायः

[1]ध्यायिनां सुखदं नित्यं ज्वालाजटिलकुन्तलम् ।
सुदर्शनाख्यं तद्दिव्यं महः किमपि धीमहि ॥

वर्णमातृकाधिष्ठातृरूपप्रश्नः

नारदः—

नमस्ते शर्व सर्वज्ञ सर्वासुरनिबर्हण ।
स्थूलसूक्ष्मपरैर्भावैर्यथा वर्णा अधिष्ठिताः ॥ १ ॥
विष्णुना देवदेवेन रुद्रैश्च भवदंशकैः ।
तथा तं मे परं भावं वक्तुमर्हसि शंकर ॥ २ ॥

तत्प्रतिवचनप्रतिज्ञा

अहिर्बुध्न्यः—

विष्णुशक्तिमया वर्णा विष्णुसंकल्पजृम्भिताः ।
अधिष्ठिता यथा [2]भावैस्तथा तन्मे निशामय ॥ ३ ॥

वर्णाधिष्ठातृवैष्णवरूपाणि

[3]प्रथमश्चाप्रमेयश्च व्यापकोऽकार उच्यते ।
आनन्द आदिदेवश्च गोपनश्चाः स्मृतो बुधैः ॥ ४ ॥

[1] D omits this verse. [2] भावैस्तन्मे निगदतः शृणु A B C E F J.
[3] अप्रमेयः प्रथमश्च D.

इष्ट इन्दुश्च रामश्च इकारः [1]परिपठ्यते ।
विष्णुश्च पञ्चबिन्दुश्च माया ईकार उच्यते ॥ ५ ॥
उकार उदयश्चापि ह्युद्दामो भुवनाह्वयः ।
प्रज्ञाधारश्च लोकेश ऊर्जं ऊकार उच्यते ॥ ६ ॥
ऋकार ऋतधामा च सत्यश्चाङ्कुश एव च ।
ज्वाला [2]प्रसरणश्चैव ॠकारो विष्टराह्वयः ॥ ७ ॥
ऌकारस्तारकः प्रोक्तो लिङ्गात्मा भगवानिति ।
ॡकारो दीर्घघोणश्च देवदत्तस्तथा विराट् ॥ ८ ॥
एकारस्तु जगद्योनिस्त्र्यश्रो विग्रह एव च ।
[3]ऐकारश्च तथैश्वर्यं योगी ह्यैरावणस्तथा ॥ ९ ॥
[4]ओदनश्चौतदेवश्च विक्रम्योकार उच्यते ।
[5]और्वो भूधरसंज्ञश्चाप्यौः स्मृतो ह्यौषधात्मकः ॥१०॥
त्रैलोक्यैश्वर्यदो व्यापी व्योमेशौंकार एव च ।
अंकारः सृष्टिकृत् प्रोक्तो विसर्गः परमेश्वरः ॥ ११ ॥
ककारः कमलश्चैव करालः प्रकृतिः परा ।
खकारः खर्वदेहश्च वेदात्मा विश्वभावनः ॥ १२ ॥
गकारस्तु गदध्वंसी गोविन्दश्च गदाधरः ।

[1] परिकीर्त्यते D E F J.
[2] प्रसारणश्चैव D.
[3] ऐश्वर्यं योगधाता च ऐः स त्वैरावणः स्मृतः A B C E F J.
[4] ओकार ओतदेहश्च ओदनश्चाथ विक्रमी A B C E F J.
[5] और्वोऽथ भूधराख्यश्च औः स्मृतो ह्यौषधात्मकः A B C E F J.

घकारस्त्वथ घर्मांशुस्तेजस्वी दीप्तिमांस्तथा ॥ १३ ॥
ङकार एकदंष्ट्राख्यो भूतात्मा भूतभावनः[1] ।
चन्द्रांशुश्चश्चलश्चक्री चकारः परिकीर्त्यते ॥ १४ ॥
[2]छन्दःपतिश्छलध्वंसी छकार छन्द एव च ।
अजितो जन्महन्ता च जकारः शाश्वतः स्मृतः ॥ १५ ॥
झकारो झषसंज्ञस्तु सामगः सामपाठकः ।
ञकार उत्तमाख्यश्च ईश्वरस्तत्त्वधारकः ॥ १६ ॥
विश्वाप्यायकरश्चन्द्री ट आह्लाद उदीरितः ।
धाराधरो [3]नेमिसंज्ञष्ठकारः [4]कौस्तुभो मतः ॥ १७ ॥
मौसलो दण्डधारश्च डकारोऽखण्डविक्रमः ।
ढकारो विश्वरूपश्च [5]दृढकर्मा प्रतर्दनः ॥ १८ ॥
णकारोऽभयदः शास्ता वैकुण्ठः परिकीर्तितः ।
तकारस्ताललक्ष्मा च वैराजः स्रग्धरस्तथा ॥ १९ ॥
धन्वी भुवनपालश्च थकारः [6]सर्वधारकः ।
दत्तावकाशो दमनो [7]दकारः शान्तिदः स्मृतः ॥ २० ॥
धकारः [8]शार्ङ्गधृग्धामा माधवश्च प्रकीर्तितः ।
नरो नारायणः पन्था नकारः समुदाहृतः ॥ २१ ॥
पकारः पद्मनाभश्च पवित्रः पश्चिमाननः ।

[1] वाहनः A J.
[2] छन्दःप्रतिच्छल A B C.
[3] निमिसंज्ञः D.
[4] कौस्तुभस्तथा D.
[5] वृषकर्मा D.
[6] सर्वरोधकः D.
[7] दत्तात्रेय इति स्मृतः D.
[8] शार्ङ्गधृग्धर्ता D J.

फकारः फुल्लनयनो लाङ्गली श्वेतसंज्ञितः[1] ॥ २२ ॥
बकारो वामनो ह्रस्वः पूर्णाङ्गः स च कथ्यते ।
भल्लातको भकारश्च ज्ञेयः सिद्धिप्रदो ध्रुवः ॥ २३ ॥
मकारो मर्दनः कालः प्रधानः परिपठ्यते ।
चतुर्गतिर्यकारश्च सुसूक्ष्मः शङ्ख उच्यते ॥ २४ ॥
अशेषभुवनाधारो रोऽनलः कालपावकः ।
लकारो विबुधाख्यश्च [2]धरेशः पुरुषेश्वरः ॥ २५ ॥
वराहश्चामृताधारो वकारो वरुणः स्मृतः ।
शकारः शंकरः शान्तः पुण्डरीकः प्रकीर्तितः ॥ २६ ॥
[3]नृसिंहश्चाग्निरूपश्च षकारो भास्करस्तथा ।
सकारस्त्वमृतस्तृप्तिः सोमश्च परिकीर्तितः ॥ २७ ॥
[4]सूर्यो हकारः प्राणस्तु परमात्मा प्रकीर्तितः ।
अनन्तेशः क्षकारस्तु वर्गान्तो गरुडः स्मृतः ॥ २८ ॥
[5]बिन्दुः संहार इत्युक्तो विसर्गः सृष्टिरुच्यते ।
विष्णुशक्तिमया एते स्थूलसूक्ष्मपरात्मकाः ॥ २९ ॥
अप्रमेयादयो भावाः शतं सार्धमुदीरिताः ।

वर्णाधिष्ठातृरौद्ररूपाणि

वर्णास्तेऽधिष्ठिता यैस्तैर्मर्दंशै रुद्रसंज्ञितैः ॥ ३० ॥

[1] संज्ञकः D. [2] परेशः D. [3] D omits this verse.
[4] हः प्राणः परमात्मा च दिव्यः सूर्य इतीरितः A B C; हकारः परमात्मा च दिव्यः सूर्य उदीरितः E F J.
[5] D omits this line.

तान्निबोध महाभागानक्षरस्थान् महामुने ।
[1]श्रीकण्ठानन्दसूक्ष्मेशास्त्रिमूर्तिरमरेश्वरः ॥ ३१ ॥
अङ्घ्रीशो भारभूतिश्च तिथिः [2]स्थाणुर्भवाह्वयः ।
[3]चण्डीशो भौतिकः सद्योजातश्चानुग्रहेश्वरः[4] ॥ ३२ ॥
अक्रूरश्च [5]महासेनः स्युरेताः स्वरमूर्तयः ।
ततः क्रोधीशचण्डीशपञ्चान्तकशिवोत्तमाः ॥ ३३ ॥
तथैकरुद्रः कूर्मैकनेत्राह्वचतुराननाः ।
अजेशः शर्वसोमेशौ लाङ्गली दारिकस्तथा ॥ ३४ ॥
अर्धनारीश्वरश्चोमाकान्तश्चाषाढदण्डिनौ ।
अत्रिर्मीनश्च मेषश्च लोहितश्च शिखी तथा ॥ ३५ ॥
चलगण्डद्विगण्डौ[6] च समहाकालवालिनौ ।
भुजङ्गेशः पिनाकी च खड्गीशश्च बकस्तथा ॥ ३६ ॥
[7]श्वेतो भृगुर्वकुलीशः संवर्तक इतीरितः ।
रुद्रमूर्तय उद्दिष्टा [8]मदीया वर्णपालिकाः ॥ ३७ ॥

वर्णचक्रपद्मनिरूपणम्

तथा वर्णमयं चक्रं पद्मं [9]चापि निबोध मे ।
प्रणवोऽक्षः समुद्दिष्टः शक्तिर्नाभिरुदीरिता ॥ ३८ ॥

1 श्रीकण्ठानन्तसूक्ष्माश्च D J.
2 स्थाणुर्हराह्वयः D.
3 झण्टीशो D E F J.
4 अहंग्रहेश्वरः B C.
5 महासौम्यः D.
6 द्विरण्डौ D E F J.
7 श्वेतो भृगुर्लकुलीशः संवर्तक इतीदृशाः D.
8 मदीया इत्यादिकं समुद्दिष्टः इत्यन्तं नास्ति B C.
9 च विनिबोध A.

अकचाष्टतपाश्चैव सवर्ग्या अरपद्धतिः ।
यादयो नेमिरुद्दिष्टा गरुडः प्रधिरुच्यते ॥ ३९ ॥
प्रणवः कर्णिका प्रोक्ता शक्तिः केसरपद्धतिः ।
स्वरद्विरष्टकं [1]वर्गा अन्तःस्था ऊष्मभिः सह ॥ ४० ॥
पत्राष्टकमिदं प्रोक्तं गरुडो दीप्तिरुच्यते ।
इति चक्राब्जमध्यस्था मातृकावर्णमालिनी ॥ ४१ ॥
मन्त्रयोनिर्महादेवी[2] वैष्णवी षड्गुणात्मिका ।

वर्णमातृकात्मकवैष्णवशक्तिस्वरूपवर्णनम्

आदिवर्णप्रक्लृप्ताङ्गा [3]वर्गाभरणभूषिता ॥ ४२ ॥
पद्मगर्भप्रतीकाशा शङ्खपङ्कजधारिणी ।
प्रणवेनाथ शक्त्या च श्रिया संक्लृप्तदेहिका[4] ॥ ४३ ॥
स्वरसंपूर्णवदना कचक्लृप्तकरद्वया ।
टतक्लृप्तपदद्वन्द्वा पादिक्लृप्तोदरा शुभा ॥ ४४ ॥
यरप्राणोष्मका देवी लकारवरहारिणी ।
[5]वकारकाञ्चीसुभगा शषकुण्डलधारिणी ॥ ४५ ॥
सहृत्का हान्तरात्मा च क्षप्रभा वर्णमालिनी ।
पाशाङ्कुशकराग्रा च वाणी ध्येया विपश्चिता ॥ ४६ ॥

प्रथमं वैष्णवशक्त्याराधनम्

वक्ष्यमाणेन मन्त्रेण पुरैवाराधयेद्गिरम् ।

1 वर्णा D.
2 महाशक्तिः A D.
3 वर्णाभरण All MSS.
4 देहया B C.
5 वकारकटिसूत्रा तु शषौ वै कुण्डलं भवेत् B C J.

ततो मन्त्रोद्धारः

[1]लब्धानुज्ञस्ततो देव्या गुरुपङ्क्तिं समर्च्य च ॥ ४७ ॥
गणेशमभिपूज्याथ मन्त्रानिष्टान् समुद्धरेत् ।

वैष्णवरूपैरेव वैष्णवमन्त्रोद्धरणम्

अप्रमेयादिभिर्भावैर्वैष्णवानुद्धरेत् सुधीः ॥ ४८ ॥

रौद्रमन्त्राणां रौद्ररूपैरुद्धरणम्; शक्तिमन्त्राणां शक्तिरूपैः

रौद्रान् रुद्रैस्ततः शाक्तान् [2]भारत्यंशैः समुद्धरेत् ।
यद्यपि व्यापका मन्त्रा नित्यं सिद्धा महामुने ॥ ४९ ॥
स्युः शक्तिशालिनो मन्त्रा एवं सृष्टिविचिन्तनात् ।

उक्तक्रमोल्लङ्घने प्रत्यवायः

उज्झित्वोक्तक्रमं यो हि मन्दात्मा मन्त्रमुद्धरेत् ॥ ५० ॥
भवन्ति शापदा मन्त्रास्तस्य शास्त्रातिवर्तिनः ।

अनुल्लङ्घनेऽभ्युदयः

अनुज्झित्वा क्रमं सर्वं यः सुधीर्मन्त्रमुद्धरेत् ।
तस्याध्ययनमात्रेण मन्त्रः सिद्धिं प्रयच्छति ॥ ५१ ॥

इति श्रीपाञ्चरात्रे तन्त्ररहस्ये अहिर्बुध्न्यसंहितायां वर्णसंज्ञा-
निरूपणं नाम सप्तदशोऽध्यायः

आदितः श्लोकाः १०५५

[1] लब्ध्वानुज्ञां ततो D.

[2] भारत्यङ्गैः D E F.

## मन्त्रोद्धारो नाम अष्टादशोऽध्यायः

ध्यातं सकृद्भवानेककोट्यघौघं हरत्यरम् ।
सुदर्शनस्य तद्दिव्यं भर्गो देवस्य धीमहि ॥

शक्तिमन्त्रोद्धारः

अहिर्बुध्न्यः—

शक्तिं समुद्धरेत् पूर्वमग्नीषोमात्मना स्थिताम् ।
विष्णुस्थां परमात्मस्थां स्पृशन्तीं व्यापिनीं पुनः ॥ १ ॥
वाणीहृदयमादाय[1] योजयेदन्तरात्मना ।
हृदा पुनः समायोज्य योजयेदूष्मणो [2]द्वयम् ॥ २ ॥
पञ्चबिन्दुं महाशक्तिं स्मरेदथ तदासनाम् ।
व्योमेशमाश्रयन्तीं तां स्मरेदथ धिया पुनः ॥ ३ ॥

संक्षेपतस्तत्प्रभावः

इयं दिव्या महाशक्तिः सोमसूर्याग्निभूषणा ।
माया नाम तनुर्विष्णोस्त्रैलोक्यैश्वर्यदोज्ज्वला ॥ ४ ॥
स्थूलसूक्ष्मपरत्वेन शक्तिरेषा निदर्शिता ।
सौदर्शनानां मन्त्राणामियं योनिर्महामुने ॥ ५ ॥

[1] माधाय D.

[2] यमः D.

विष्णुसंकल्परूपाणां ये चान्ये वैष्णवा भुवि ।
इयं सा परमा शक्तिरहंतेयं हरेः परा ॥ ६ ॥
विचित्रानेकशब्दार्थतत्तत्संकल्पकोरका ।
युग्मान्तैरादिभिः षड्भिराद्यन्तस्वरषट्कयोः ॥ ७ ॥
अङ्गक्लृप्तिः समुद्दिष्टा शक्त्या मेलितया स्वया ।

सुदर्शनदशाक्षरमन्त्रोद्धारः

मनसाभ्यस्य तां शक्तिं संतोषावधि वैष्णवीम् ॥ ८ ॥
समुद्धरेन्महामन्त्रं सौदर्शनमनन्यधीः ।
अमृतं शक्तिहृद्भूतमप्रमेयेन [1]वर्णयेत् ॥ ९ ॥
दिव्यं तदन्तरात्मानं परमात्मानमञ्जसा ।
योजयेत् प्रथमेनैव तत्स्थां तृप्तिं तु केवलाम् ॥ १० ॥
केवलं तत्स्थितं सोमं [2]तत्स्थितं च स्मरेत् सुधीः ।
अशेषभुवनाधारं [3]तत्स्थमानन्दमेव च ॥ ११ ॥
[4]कालपावकमादाय दुष्टपापेन्धनानलम् ।
योजयेद् व्यापकेनैव नानाविधविभाविना ॥ १२ ॥

संक्षेपतस्तत्प्रभाववर्णनम्

[5]दशाक्षरी महाविद्या शक्तिः सौदर्शनी त्वियम् ।
स्थूलसूक्ष्मपराकारा विष्णुसंकल्परूपिणी ॥ १३ ॥

1 कल्पयेत् E.
2 तत्तत्स्थानं B C.
3 तत्समानन्द D.
4 कालप्रापक D.
5 दशाक्षरा D.

[1]तत्तद्विचित्रसंकल्पसदसद्भावभाविनी ।
सर्वभावानुगा विष्णोः परा सौदर्शनी स्थितिः ॥ १४ ॥
[2]आकाशादिपृथिव्यन्तभूतिभेदानुयायिनी ।
सूक्ष्मा सौदर्शनी शक्तिः कारणादिविभागिनी[3] ॥१५॥
तत्तद्दुरितदैत्यौघतमोविध्वंसनात्मिका ।
[4]स्थूलचक्रस्वरूपाढ्या विष्णोः [5]सांकल्पिकी स्थितिः ॥
स्वरव्यञ्जनकूटस्थैः पूर्णेयं चतुरक्षरी ।
निदानं सर्वसिद्धीनामपदं[6] लाभनाशयोः ॥ १७ ॥
कूटे [7]त्र्यर्णमये त्वस्याः परतः प्रायशः [8]स्थितेः ।
याभ्यां षडक्षरी सैषा विद्या भुवनकारिका ॥ १८ ॥

त्रेधा पञ्चमबीजकथनम्

परमात्मानमादाय योजयेदुदयेन तु ।
प्रधानं संस्पृशेद्भूयः परं बीजं तु पञ्चमम् ॥ १९ ॥
[9]सूर्यमुद्दामकालाढ्यं सूक्ष्मं तद्बीजमुच्यते ।
सप्राणं भुवनाधारं रक्षोदुरितमर्दनम् ॥ २० ॥
स्थूलं तु पञ्चमं बीजं सौदर्शनमनुत्तमम् ।

1 तत्तद्विचित्रसंकल्पा D.
2 आगमादि D.
3 विभाविनी A B C E F J.
4 स्थूला D.
5 संकल्पसंस्थितिः A B C J.
6 स्वपदाम् B C; आपदाम् E.
7 त्वर्णमये D.
8 स्थितः A B C F; स्थितिः E.
9 सार A B C E F J.

त्रेधा षष्ठबीजकथनम्

यत्तत् सांकर्षणं घोरं लाङ्गलं परमायुधम् ॥ २१ ॥
योजयेदप्रमेयेण चन्द्रिकाकेवलेन च ।
परं तत् परमं षष्ठं दीप्तिशालि सुदर्शने ॥ २२ ॥
सर्वशास्त्रार्थकूटस्थमिति[1] तेजोऽप्रमेयकम् ।
षष्ठे [2]परा स्थितिर्बीजे सेयं नारद दर्शिता ॥ २३ ॥
तत् फुल्लनयनाकारं फुल्लैर्यन्नयनैर्वृतम्[3] ।
प्रथितं प्रथमाक्रान्तं विश्वाप्ययकृदुज्ज्वलम् ॥ २४ ॥
सूक्ष्मं षष्ठं समुद्दिष्टं बीजं सौदर्शनं परम् ।
यस्मान्नयति सन्मार्गं [4]छित्त्वाघं बाह्यमान्तरम् ॥ २५ ॥
प्रथते च मुहुर्वृद्ध्या विश्वमाप्याययत्यपि ।
इयं ते मध्यमावस्था सूक्ष्मा षष्ठी प्रदर्शिता ॥ २६ ॥
[5]श्वेताख्या व्यापकाक्रान्ता आह्लादेन तु केवलम् ।
षष्ठी स्थूला समुद्दिष्टा विधा नारद ते मुने ॥ २७ ॥
स्थाणुं छित्त्वा यथा दग्ध्वा [6]पूर्वं केदारकारकः ।
[7]फलप्रापणबीजानि प्रथयित्वा च वारिणा ॥ २८ ॥
आप्याय्य शान्तसंतापो व्याप्नुवन् विविधं फलम् ।
आह्लादं लभतेऽतीव सेयं षष्ठी परा मुने ॥ २९ ॥

[1] मति D E J.
[2] वरा A B C D.
[3] उन्नयनैर्वृतम् B C.
[4] नित्वाघम् D.
[5] श्वेताख्यो व्यापकाक्रान्त आह्लादेन च केवलम् D.
[6] पुरा A B C J.
[7] फलप्रमाण A B C E J.

इति ते दर्शिता शश्वच्छक्तिः सा षोडशाक्षरी।

सुदर्शनगायत्री

स्वशक्त्या तु समाक्रान्ता गायत्री सेयमीरिता ॥ ३० ॥

पुनः शक्तिमन्त्रवैभवः

एषा सौदर्शनी शक्तिर्भवबीजक्षयंकरी।
[1]जप्तार्चिता हुता ध्याता तारयत्येव साधकम् ॥ ३१ ॥
अस्याः प्रातिस्विकं बीजं चतुर्थं कूटमुत्तमम्।
[2]स्मृता प्रातिस्विकी शक्तिस्तृप्तिः[3] सोमामृतात्मिका ॥

शक्तिमन्त्रस्य प्रथमद्वितीयाक्षराभ्यां पुरुषसूक्तश्रीसूक्तयोराविर्भावः

अक्षरादादिमादस्याः सूक्तं पौरुषमुद्गतम्।
द्वितीयाक्षरसंभूतं श्रीसूक्तं नाम यन्मुने ॥ ३३ ॥

संक्षेपतो मन्त्रार्थवर्णनम्

[4]सहयोर्यत् स्मृतं ज्ञानं तत् सहस्रारमुच्यते।
सहो बलं समाख्यातं तत् स्रवत्यखिलेन यत् ॥ ३४ ॥
तत् सहस्रं समाख्यातमनन्तं[5] प्राणनं च तत्।
[6]अरं ज्ञानं समाख्यातं नित्यशुद्धं निरञ्जनम् ॥ ३५ ॥

1 जप्तार्चितहुतध्याता D.

2 C omits the portion from here up to the end of the chapter.

3 तृप्तिसोमा D.

4 सहसो: A J; महसो: B.

5 मनन्तप्राणिगं D.

6 आरं D.

ज्ञानक्रियात्मिका [1]शक्तिरिति सौदर्शनी कला ।
संप्राप्योदयमुद्दामं भुवनस्य कृते स्वयम् ॥ ३६ ॥
प्राणसूर्यात्मिका भूत्वा परमात्मस्वरूपिणी ।
निहत्य दुरितं [2]शश्वद्विश्वमाप्याययन्त्यपि[3] ॥ ३७ ॥
[4]श्वेता प्रसन्नभूयिष्ठा स्वयमानन्दते मुहुः ।
[5]संहृतैर्विगृहीतैश्च वाक्यैर्वर्णैः पदैरपि ॥ ३८ ॥
लेशतोऽर्थगतिः प्रोक्ता [6]विस्तृत्या नैव शक्यते ।

सुदर्शनसप्ताक्षरी

प्रणवेन समाक्रान्ता सेयं सप्ताक्षरी [7]स्मृता ॥ ३९ ॥

सुदर्शनाष्टाक्षरी

[8]स्वशक्त्या च समाक्रान्ता सेयमष्टाक्षरी स्मृता ।

सुदर्शननवाक्षरी

श्रिया समेता भूयोऽपि स्मृता सैषा [9]नवाक्षरी ॥ ४० ॥

अथाङ्गसिद्ध्यर्थाङ्गमन्त्रः

अथास्या [10]अङ्गसिद्ध्यर्थमेकमङ्गं निशामय ।
चन्द्रांशुमुद्धरेत् पूर्वमप्रमेयेण [11]भूषयेत् ॥ ४१ ॥

1 शक्तिरतः सौदर्शनी परा D.
2 विश्वं विश्व D.
3 यत्यपि A B E F G.
4 श्वेत A B E F.
5 संहृतैः D.
6 विस्तृत्याम् D.
7 वरा D.
8 D omits this line.
9 नवाक्षरा A B.
10 अङ्गशुद्ध्यर्थम् E F.
11 भूषितम् D.

अशेषभुवनाधारं परप्रकृतिसंयुतम् ।
आनन्देन समाक्रान्तं द्वितीयं कूटमुद्धरेत् ॥ ४२ ॥
चतुर्गतिमथादाय ह्यप्रमेयेण भूषयेत् ।
ततोऽमृतमुपादायाप्यमृताधारभूषितम् ॥ ४३ ॥
आनन्दयोजितं [1]पश्चात् परमात्मानमुद्धरेत् ।
आनन्दपूरितः[2] सोऽयं मन्त्रः सर्वाङ्गमन्त्रराट् ॥ ४४ ॥
अतिचञ्चलदीप्ताग्निः फुल्लत्कमलसंनिभः ।
सूर्यानलसहस्राभ आदिदेवसमद्युतिः ॥ ४५ ॥
नित्यतृप्तश्च मन्त्रात्मा [3]सूक्ष्मावस्थ उदाहृतः ।
[4]करालाकारवर्णाभा स्फुरच्चक्रायुतान्विता[5] ॥ ४६ ॥
निहत्य दुरितं सर्वं प्राणेन स्वेन तेजसा ।
[6]सोमसूर्यात्मिका भूत्वा गोपायति जगत्त्रयम् ॥ ४७ ॥
इति स्थूला गतिर्दिव्या चक्रमन्त्रस्य दर्शिता ।
[7]इदं नानाविधैर्बीजैर्हृदयाद्यङ्गसंततौ ।
योजयेच्चक्रमन्त्रं तु [8]यथा तन्मे निशामय ॥ ४८ ॥

इति श्रीपाञ्चरात्रे तन्त्ररहस्ये अहिर्बुध्न्यसंहितायां मन्त्रोद्धारो नाम अष्टादशोऽध्यायः

आदितः श्लोकाः ११०३

[1] कृत्वा D.
[2] पूरितम् D.
[3] सूक्ष्मावस्था उदाहृता E J.
[4] करालकालवह्न्याभम् D.
[5] आयुधान्वितम् D E.
[6] सोमः सोम्यात्मना D.
[7] युक्तं D.
[8] यथावन्मे B E F.

अङ्गोपाङ्गमन्त्रोद्धारो नाम एकोनविंशोऽध्यायः

ध्यातं सकृद्भवानेककोट्यघौघं हरत्यरम् ।
सुदर्शनस्य तद्दिव्यं भर्गो देवस्य धीमहि ॥

हृदयमन्त्रः

अहिर्बुध्न्यः—

यत्तज्ज्ञानमयं दिव्यं गुणानां प्रकृतिः परा ।
पञ्चानां तु बलादीनां नित्यशुद्धं निरञ्जनम् ॥ १ ॥
तन्नाम हृदयं मन्त्रं स षाड्गुण्यमयो यतः ।
तस्य वाचकमाकारमुद्धरेन्मनसा सुधीः ॥ २ ॥
ज्ञानत्वादप्रमेयश्च[1] प्रथमो [2]व्यापकः स्मृतः ।
आनन्द आदिदेवश्च गोपनश्चेति षड्विधाः ॥ ३ ॥
क्रमात् संहृत्य तज्ज्ञानं सांकर्षणमनुत्तमम् ।
[3]तत्तद्विशेषसंयोगाद्विशेष्यस्तन्मयः [4]सदा ॥ ४ ॥
इत्याभावसमायोगाज्ज्ञानात्मा मन्त्रराट् स्वयम् ।
हृदयाय नमः पश्चाद्व्यक्तयर्थं संप्रयोजयेत् ॥ ५ ॥

1 मेयस्य D.
2 व्यापकस्तथा D.
3 तद्विशेषेण A B C E F.
4 तदा A B C E F.

शिरोमन्त्रः

रमणीया समिद्धा च येच्छा देवस्य शाश्वती।
सर्वत्राप्रतिघा दिव्या ह्यमृताधारभेदिता ॥ ६ ॥
[1]वीति बीजेन निर्दिष्टा तच्चैश्वर्यं महद्धरेः।
ऐश्वर्यं च शिरःस्थाने यत्तत् सर्वोपरि स्थितम् ॥ ७ ॥
अविघातात्मकं यत्तदिच्छाया रूपमुत्तमम्।
समिद्धं रमणीयं तदमृतस्याश्रयः परः ॥ ८ ॥
[2]वीति तद्द्योतकं बीजं तेन संयोजयेच्छिरः।
तेन संयोजितश्चक्रमन्त्र ऐश्वर्यबृंहितः ॥ ९ ॥
[3]इच्छामिन्धान एवास्य मन्त्रिणः संप्रकाशते।
ततस्तच्छिरसे स्वाहा व्यक्त्यर्थं संप्रयोजयेत् ॥ १० ॥

शिखामन्त्रः

अमृता सोमरूपा च या सा तृप्तिमयी परा।
जगत्प्रकृतिरीशाना विष्णुशक्तिः परावरा ॥ ११ ॥
तस्या यो भुवनाकार उद्दाम उदयोऽमलः।
सु इत्येवं समाख्याता शक्तिस्तेनोदिता सती ॥ १२ ॥
विशेषयति रूपेण चक्रमन्त्रं सनातनम्।
तया [4]स भेदितः शक्त्या शक्त्यात्मा संप्रकाशते ॥
या सा कुण्डलिनी शक्तिर्हृदयस्था समीरिता।

[1] इति A B C E F.
[2] दिवि A B C E F.
[3] इच्छात्मिका स्थान एव D.
[4] सहोदिता A B C.

योगिभिर्या शिखा तस्या दिव्या दीपाकृतिः परा ॥
प्रसरत्यूर्ध्वभागे तु शिखास्थाने विराजते ।
अतः शक्तेः शिखास्थाने न्यासस्तस्यास्ततः स्मृतः ॥
शिखायै वषडित्येवं व्यक्त्यर्थं संप्रयोजयेत् ।

कवचमन्त्रः

[1]ऊर्जो नाम समुद्दिष्टो बलं विष्णोः स्वमूर्जितम् ॥१६॥
प्रज्ञाधारणसामर्थ्यं नित्यतृप्तिमयं परम् ।
सर्वकार्यैः समुद्युक्तः श्रमाभावे हि तृप्यति ॥ १७ ॥
अशेषभुवनाधारस्तद्बलं[2] परिगीयते ।
[3]बले बलं धारणेद्धा बिभर्ति सकलं जगत् ॥ १८ ॥
चतुर्गतिमयं यत्तत् प्राणानां परिगीयते ।
व्यानापानादिका सा च प्रोक्ता गतिचतुष्टयी ॥ १९ ॥
चतुर्गतिमयः प्राणो बलं तत् परिगीयते ।
अजितो भगवान् येन जयत्यखिलमच्युतः ॥ २० ॥
एतैर्गुणैः समायुक्तं बलं तद्वैष्णवं महत् ।
अप्रमेयमनाद्यं तत् सूर्यशब्देन गीयते ॥ २१ ॥
बलेन [4]भेदितो मन्त्रो बलात्मा व्यवतिष्ठते ।
बलं चाखिलगात्रेषु मूर्छितं विपुलं महत् ॥ २२ ॥
अंसयोस्तदभिव्यक्तिरतस्तत्रैव विन्यसेत् ।

[1] ऊर्जेन मघ उद्दिष्टो D.
[2] शङ्खस्तत्परिगीयते A B C E F.
[3] A B C omit four lines from here.
[4] बोधितो A B C E.

कवचाय हुमित्येव व्यक्त्यर्थं संप्रयोजयेत् ॥ २३ ॥

अस्त्रमन्त्रः

महत्ता न्यूनताभावः स च स्यादविकारिता ।
अव्याहतस्वसंकल्पः सुशब्दार्थो निरूपितः ॥ २४ ॥
चेतनाचेतनं विश्वं स्वसंकल्पेन [1]भावयन् ।
यः स्यादविकृतः सोऽस्य भावो माहासुदर्शनः ॥२५॥
तद्वीर्यं तच्च शास्त्रोक्तं यद् दुष्टदमनात्मकम् ।
शान्तिदं सर्वपापानां शंकरं जगतामपि ॥ २६ ॥
विकारविरहो दैत्यमर्दिनः परमात्मनः ।
महासुदर्शनेत्येवं तद्वीर्यं बहुधोच्यते ॥ २७ ॥
वीर्येण भेदितो मन्त्रो वीर्यात्मा व्यवतिष्ठते ।
तस्य हस्ततले स्थाने ततस्तत् तत्र विन्यसेत् ॥ २८ ॥
ततोऽस्त्राय फडित्येवं व्यक्त्यर्थं संप्रयोजयेत् ।

नेत्रमन्त्रः

अन्तर्बोधस्वरूपो यः प्राकृतध्वान्तनाशनः ॥ २९ ॥
सूर्यवत् तपतस्तस्य या ज्वालाप्यूर्ध्वगामिनी ।
पुरुषाणामशेषाणामैश्वर्यान्निरपेक्षता ॥ ३० ॥
[2]अमृताधाररूपत्वमनिशं जन्मघातकम्[3] ।

[1] भावयेत् D.
[2] तेजःस्वाधार A B C; तेजस्त्वाधार E F. [3] घातनम् D.

नैरपेक्ष्येण यत् तस्य तत् तेजः समुदाहृतम् ॥ ३१ ॥
ज्वालाशब्देन तत् तेजो वैष्णवं बहुधेर्यते ।
तेजसा भेदितो मन्त्रस्तेजोरूपोऽवतिष्ठते ॥ ३२ ॥
तेजसो नयनं स्थानमतस्तत् तत्र विन्यसेत् ।
वौषण्नेत्रत्रयायेति [1]व्यत्यासाद् व्यक्तये पठेत् ॥ ३३ ॥
इति षाड्गुण्यरूपेयं दर्शिता तेऽङ्गसंततिः ।
उपाङ्गसंततिश्चैव न्यसनीया विपश्चिता ॥ ३४ ॥

उपाङ्गमन्त्रः

कुक्षिपृष्ठांसयुग्मोरुजानुपादयुगेषु[2] च ।
शाद्यर्णान् व्यापिसंयुक्तान् ज्ञानाद्यैर्नमसा सह ॥३५॥
विन्यसेत् षड्गुणात्मैव मन्त्रिदेहः प्रजायते ।
अप्रमेयो गदध्वंसी पन्थाः स्वर्गापवर्गयोः ॥ ३६ ॥
इच्छामयो हि यो भावो विष्णुसंकल्पजृम्भितः ।
अशेषदुरितप्लोषात् सोऽग्निरित्युच्यते बुधैः ॥ ३७ ॥
अग्निना भेदितो मन्त्रस्त्वग्न्यात्मा व्यवतिष्ठते ।
प्राकारं कल्पयेत् तेन परितः पावकाकृतिम् ॥ ३८ ॥
अग्निप्राकारमध्यस्थो [3]दुर्निरीक्षोऽभिजायते ।
संस्मरंश्चक्रगायत्रीं परितश्चक्रमुद्रया ॥ ३९ ॥
ऊर्ध्वाधस्तिर्यगाकारं मुद्रयेदात्मनो बहिः ।

[1] व्यत्यस्य व्यक्तये A B C; व्यत्यस्य व्यत्यये E F.
[2] जङ्घापादयुगेषु B C.
[3] दुर्निरीक्ष्यः E.

अग्निप्राकारतः पूर्वं चक्रमुद्राथवा भवेत् ॥ ४० ॥

चक्रगायत्री

हृदयं चाथ चक्राय विद्महेपदमादिमम् ।
मन्त्रनाथस्य नेत्रादिपदं सूक्ष्मोऽथ धीमहि ॥ ४१ ॥
गायत्र्या आद्यनवमे ततश्चैवानिवारितः ।
ततः समस्तरूपं तु गायत्र्या दशमं पदम् ॥ ४२ ॥
उदिता चक्रगायत्री सप्तविंशतिकीर्तिता ।
अथ सौदर्शनास्त्राणां मन्त्रानेतान् निबोध मे ॥ ४३ ॥

चक्राद्यस्त्रमन्त्राः

ओं नमो भगवन् विष्णो सर्वेषामादिमं समम् ।
चक्रमूर्तिधरेत्येवं गदामूर्तिधरेति च ॥ ४४ ॥
[1]शार्ङ्गमूर्तिधरेत्येवं खड्गमूर्तिधरेति च ।
चक्राद्यस्त्रचतुष्कं तु ततः सेनापतेपदम् ॥ ४५ ॥
सर्वत्र समभुच्चार्य वदेत् प्रातिस्विकं ततः ।
मन्त्रनाथो भवेच्चक्रे षड्वर्णोऽथ गदादिषु ॥ ४६ ॥
कौमोदकि महाशार्ङ्ग महाखड्गेत्युदीरयेत् ।
[2]वर्मास्त्रे च ततो युञ्ज्यादेष मौनविधिक्रमः ॥ ४७ ॥
इमाश्चतस्रो गायत्र्यश्चक्रादीनामुदीरिताः ।
शङ्खादीनां चतुर्णां तु मन्त्रानेतान्निबोध मे ॥ ४८ ॥

[1] A D omit this line.    [2] वज्रास्त्रे B C E F.

शङ्खादिमन्त्राः

[1]ओं नमो भगवन् विष्णो सर्वेषामादितः समम् ।
शङ्खमूर्तिधरेत्येवं [2]हलमूर्तिधरेति च ॥ ४९ ॥
मुसलमूर्तिधरेत्येवं शूलमूर्तिधरेति च ।
सेनापतेपदं पश्चात् सर्वेषां तुल्यमुच्चरेत् ॥ ५० ॥
महाथ पाञ्चजन्याय स्वाहेत्येकाधिको मनुः ।
महाहलाय स्वाहेति मन्त्रोऽप्येकाधिकः स्मृतः ॥५१॥
महा च मुसलायाथ [3]स्वाहेत्यभ्यधिको मनुः ।
महाशूलाय स्वाहेति स चाप्यभ्यधिको मनुः ॥ ५२ ॥
इमाश्चतस्रो गायत्र्यः शङ्खादीनां प्रदर्शिताः ।
दण्डादीनामथाष्टानामिमान् मन्त्रान् निबोध मे ॥

दण्डाद्यस्त्रमन्त्राः

ओं नमो भगवन् विष्णो सर्वेषामादितः समम् ।
दण्डमूर्तिधरेत्येवं कुन्तमूर्तिधरेति च ॥ ५४ ॥
शक्तिमूर्तिधरेत्येवं पाशमूर्तिधरेति च ।
अङ्कुशमूर्तिधराय कुलिशमूर्तिधरेति च ॥ ५५ ॥
परशुमूर्तिधरायाथ ततः शतमुखेति च ।
अनलमूर्तिधरेत्येवं प्रातिस्विकपदक्रमः ॥ ५६ ॥
सेनापतेपदं पश्चात् सर्वेषां सममुच्चरेत्[4] ।

[1] A B C omit this line.
[2] खड्गमूर्तिधरेति च A B C.
[3] स्वाहेति त्र्यधिको D.
[4] उद्धरेत् B C E F.

महादण्डायाथ नमो मन्त्र एवाधिकः स्मृतः ॥
महाकुन्तायाथ नमो मन्त्रोऽप्येकोऽधिकः स्मृतः ।
महाशक्तये च नमो मन्त्रोऽप्येकोऽधिकः स्मृतः ॥
महापाशायाथ नमो मन्त्रोऽप्येकोऽधिकः स्मृतः ।
महाङ्कुशाय नम इत्येषोऽप्यधिक उच्यते ॥ ५९ ॥
महा च कुलिशायाथ नम इत्यपि तादृशः ।
महापरशवे चाथ नम इत्यपि तादृशः ॥ ६० ॥
महाशतमुखेत्येवमनलाय ततो नमः ।
अयं मन्त्रस्त्रयस्त्रिंशद्वर्णो वह्न्ययुतप्रभः ॥ ६१ ॥
इत्यस्त्राणामिमे मन्त्रा रूपतस्ते निदर्शिताः ।

अत्रानुक्तस्य संहितान्तरात् ग्रहणम्

आधाराद्यासनाकारो द्वारपर्यन्तपूजनम् ॥ ६२ ॥
मुद्रा च विविधाकारा यस्य यस्य च यादृशी ।
अभिषेकविधिश्चैव दीक्षानियम एव च ॥ ६३ ॥
भूतशुद्धिविधिश्चैव [1]ध्यानानि विविधानि च ।
सर्वं जयाश्रुतं कार्यं तत्तद्वैशेषिकं विना ॥ ६४ ॥
अमुद्राणामिहास्त्राणां दण्डादीनां महामुने ।
कार्या समन्विता दिव्या शक्तिमुद्रास्त्रमुद्रया ॥

[1] ज्ञानानि D.

**इति ते लेशतः प्रोक्तः सौदर्शनविधिक्रमः ।**
**ग्रहणादिप्रकारोऽयं वक्ष्यते शृणु तं मुने ॥ ६६ ॥**

इति श्रीपाञ्चरात्रे तन्त्ररहस्ये अहिर्बुध्न्यसंहितायाम् अङ्गोपाङ्गमन्त्रोद्धारो नाम एकोनविंशोऽध्यायः

आदितः श्लोकाः ११६९

## मन्त्रग्रहणादिदीक्षाविधानं नाम विंशोऽध्यायः

ध्यातं सकृद्भवानेककोट्यघौघं हरत्यरम् ।
सुदर्शनस्य तद्दिव्यं भर्गो देवस्य धीमहि ॥

### आचार्यलक्षणम्

**अहिर्बुध्न्यः—**

वेदवेदान्ततत्त्वज्ञो [1]विद्यास्थानविचक्षणः ।
ऊहापोहविधानज्ञो दैवपित्र्यक्रियापरः ॥ १ ॥
अवक्ता चापवादानामकर्ता पापकर्मणाम् ।
[2]अमत्सरी परोत्कर्षे परदुःखे घृणापरः ॥ २ ॥
दयावान् सर्वभूतेषु हृष्टः परसुखोदये ।
पुण्येषु मुदितायुक्त उपेक्षावान् कुबुद्धिषु ॥ ३ ॥
तपःसंतोषशौचाढ्यो योगस्वाध्यायतत्परः ।
पाञ्चरात्रविधानज्ञस्तन्त्रान्तरविचक्षणः ॥ ४ ॥
[3]तन्त्राणामन्तरज्ञश्च मन्त्राणां [4]कृत्यतत्त्ववित् ।
पदवाक्यप्रमाणज्ञो हेतुवादविचक्षणः ॥ ५ ॥

[1] विद्याख्यातो विचक्षणः D.
[2] अमत्सरः A B C.
[3] मन्त्राणामन्तरज्ञश्च E F.
[4] ऐक्य E F.

सामान्यस्यापवादस्य वेत्ता यन्त्रविचक्षणः ।
कुण्डमण्डलभेदज्ञः [1]क्रियाकारविचक्षणः ॥ ६ ॥
अध्यात्मज्ञानकुशलः शान्तो दान्तो जितेन्द्रियः ।
सदन्ववायसंभूत आचार्यो नाम वैष्णवः ॥ ७ ॥

शिष्यलक्षणम्

आचार्यमाश्रयेच्छिष्यः [2]श्रेयोऽर्थी सुसमाहितः ।
[3]विनयव्रतशाली च द्विजातिः संस्कृतः शुचिः ॥ ८ ॥
ब्रह्मचर्यपरो धीमान् स्वदारनिरतोऽथवा ।
अच्छलेन यथावत् स्वकृताकृतनिवेदकः ॥ ९ ॥
संसाराङ्गारमध्यस्थः पच्यमानः स्वकर्मभिः ।
भवन्तं शरणं प्राप्त उपसन्नोऽस्म्यधीहि भोः ॥ १० ॥
इत्येवं प्रतिपद्येत शिष्य आचार्यसत्तमम् ।

दीक्षाक्रमः

इत्येवं संप्रपन्नाय शिष्यायाच्छलवादिने ॥ ११ ॥
प्रत्यक्षाभिः परोक्षाभिरुपाधिभिरनेकधा ।
शोधितायैकरूपाय रहस्याम्नायगोपिने ॥ १२ ॥
अशठायानसूयाय लोभमोहाद्यसेविने ।
संवत्सरं परीक्ष्यैवं परितः परितो धिया ॥ १३ ॥

[1] क्रियाकार्य B.
[2] श्रोत्रियोऽर्थी समाहितः A B C E F.
[3] विनयी E F.

निष्कम्पाय वदेद्विद्यां यावती यादृशी च सा ।

अङ्गन्यासकरन्यासौ

मातृकामादितो[1] देवीं विन्यसेद्वपुषि स्वके ॥ १४ ॥
[2]अङ्गन्यासकरन्यासौ मन्त्रवर्णैः समाचरेत् ।
मृजेत् प्रकोष्ठमेकैकं त्रिर्मन्त्रेण त्रिरूपिणा ॥ १५ ॥
एवं पाणितलद्वन्द्वमङ्गुलीष्वथ विन्यसेत् ।
उभाभ्यां मध्यमाग्राभ्यामुभयस्मिंस्तलद्वये ॥ १६ ॥
तारकं तारिकां लक्ष्मीं प्रणवाद्यन्तगां न्यसेत् ।
प्रणवाद्यन्तगं सोमं मध्यमेऽङ्गुष्ठपर्वणि ॥ १७ ॥
सबिन्दुं विन्यसेत् प्राणमेवं तर्जनिपर्वणि ।
न्यसेद्वर्णांस्तृतीयादीनङ्गुल्यन्तरपर्वसु ॥ १८ ॥
लाङ्गलं परमास्त्रं तु न्यसेदूर्ध्वाङ्गुलीष्वथ ।

ऋष्यादीनां स्थानभेदः

ऋषिं शिरसि विन्यस्येच्छन्दो वदनगोचरम् ॥ १९ ॥
नारायणमनाद्यन्तं देवतां हृदये स्मरेत् ।

परसूक्ष्मस्थूलमन्त्राणामृषयः

पराकारस्य मन्त्रस्य परमात्मा ऋषिः स्मृतः ॥ २० ॥
संकर्षणस्तु सूक्ष्मस्य स्थूलस्याहमृषिः स्मृतः ।

1 अभितो D. 2 हस्तन्यास All MSS.

सुदर्शनमन्त्रस्याथर्वणवेदसारतमत्वम्

अथर्वाङ्गिरसो नाम पञ्च शाखा महामुने ॥ २१ ॥
तासु त्वन्तर्हितो दिव्यः कृतान्तो मन्त्रराट् स्वयम् ।

संकर्षणाज्ञया अहिर्बुध्न्येन तदुद्धरणम्

मया त्रेतायुगादौ तु तप्त्वा वर्षायुतं तपः ॥ २२ ॥
दिव्यात् संकर्षणादेशात् परमेण समाधिना ।
सर्व आथर्वणो वेदो मथितस्तु शनैः शनैः ॥ २३ ॥
मथ्यमानात् ततस्तस्माद् दध्नो घृतमिवोद्धृतः[1] ।
मन्त्रोऽयं सपरीवारः साङ्गोपाङ्गः सनातनः ॥ २४ ॥
स्थूलस्य मन्त्रनाथस्य ततो मामृषिमूचिरे ।
दैवी ब्राह्मी तथार्षी च गायत्री छन्द उच्यते ॥ २५ ॥
परः सूक्ष्मस्तथा स्थूलः परमात्मा च देवता ।

देहे संहारन्यासक्रमः

विन्यसेदथ गात्रेषु मन्त्रनाथं सनातनम् ॥ २६ ॥
परसूक्ष्मादिभावेन सोमार्कानलदीधितिम्[2] ।
प्रणवादित्रयं मूर्ध्नि ललाटे सोममेव च ॥ २७ ॥
आस्ये सूर्यं गले स्रां च हृदि रं नाभिगं तु हुं[3] ।
[4]मूलाधारे तु फट्कारं तारादित्रितयं हृदि ॥ २८ ॥

1 उद्गतम् D; उद्धृतम् A B C E F.
2 दीपितम् D.
3 हृम् D.
4 मूलाधारेऽथ D.

नाभौ [1]समूलगं हं च पादयोः स्त्रां च रं हृदि ।
हुं वक्त्रे फट् शिरोदेशे ततः सर्वात्मना क्रिया[2] ॥

अङ्गोपाङ्गन्यासः

हृदयादीन्यथाङ्गानि स्वेषु स्थानेषु विन्यसेत् ।
उपाङ्गेषु तथा न्यासं मान्त्रैर्वर्णैः समाचरेत् ॥ ३० ॥

देहस्य त्रेधा विभावनम्

स्थूलसूक्ष्मपरत्वेन देहं विद्यात् ततस्त्रिधा ।
अङ्गप्रत्यङ्गकोशाढ्यं[3] प्रत्यक्षं स्थूलमुच्यते ॥ ३१ ॥
पुर्यष्टकं तु सूक्ष्माख्यं परमाणव उच्यते ।
वह्न्यर्ककोटिसंकाशज्वालाकोलाहलाकुले ॥ ३२ ॥
त्रिविधे [4]मन्त्रनाथेऽस्मिंस्त्रिविधं [5]भावयेद्वपुः ।
तेजो दिव्यं महच्छुभ्रं मनःस्थं हृत्स्थमव्ययम् ॥
नारायणमयं ध्यायेदात्मानं ज्योतिषां [6]पतिम् ।
[7]ततस्तच्चक्रमध्याक्षसोमसूर्यानलात्मनि ॥ ३४ ॥
मज्जयित्वा स्वमात्मानं निर्वासनमथोद्धरेत् ।

सृष्टिन्यासः

ततः परादिभावस्थान् मन्त्रनाथान् सनातनान् ॥ ३५ ॥

1 समारुगम् A B C E F; समूरुगम् D.
2 त्रिधा D E.
3 केशाढ्यम् D.
4 मन्त्रराजे A B C E F.
5 व्यापयेत् D.
6 परम् D.
7 ततस्तच्चक्रमध्याक्षं A B C E F.

तेनैव [1]क्रमयोगेन तनूस्ता विसृजेत् पुनः ।
तासु प्रवेश्य चात्मानं पुनर्न्यासं समाचरेत् ॥ ३६ ॥
[2]हस्तदेहादिगो न्यासो यावत् पूर्वमुदाहृतः ।

शिष्यावेक्षणम्

अथ मन्त्रतनुर्दिव्यो मन्त्रात्मा मन्त्रसारथिः ॥ ३७ ॥
विष्णुसंकल्पजं रूपं वहन् सौदर्शनं वपुः ।
नेत्रैः शिष्यमवेक्षेत वह्न्यर्केन्दुमयैः क्रमात् ॥ ३८ ॥

शिष्यस्य संहारन्यासः

अथ स्थूलादिभावेन दहेन्मन्त्रेण [3]तद्धिया ।
पूर्वोक्तक्रमयोगेन शिष्यात्मानं परात्मनि ॥ ३९ ॥

सृष्टिन्यासः

निमज्जयित्वेत्याद्यं तु क्रमं सर्वं समाचरेत् ।
मनसा शुष्कदग्धोत्थे शिष्यदेहे तथा तथा ॥ ४० ॥
विन्यसेत् [4]क्रमयोगेन मन्त्रन्यासं धिया ततः ।

मन्त्रोपदेशः

अथ तस्योपदेष्टव्यः सहाङ्गो मन्त्रनायकः ॥ ४१ ॥
सार्थः सप्रतिपत्तिश्च यो यो भावः पुरोदितः ।

[1] चक्रयोगेन A B C E F.
[2] हस्तदेहादिको A B C E F.
[3] तं धिया A B C E F.
[4] क्रमशोऽङ्गेन B C E F.

एवं गृहीतमात्रे तु [1]मन्त्रनाथे सनातने ॥ ४२ ॥
[2]उत्पद्यते स्वयं चित्ते प्रत्ययो देवनिर्मितः ।

शिष्यकृत्यम्

सम्यगित्थं गृहीतेन मन्त्रेणानेन मन्त्रवित् ॥ ४३ ॥
कृतार्थं मन्यमानः स्वं गुरवेऽथ निवेदयेत् ।
आत्मानमथ चात्मीयं यत् किंचिदुत विद्यते । ४४ ॥
विना पापमनिष्टं च सर्वं तस्मै निवेदयेत् ।
एवं निवेद्य मन्वीत कृतार्थोऽहमिति स्वयम् ॥ ४५ ॥
[3]एवंधियो ह्यच्छलेन मन्त्रः स्वेन प्रकाशते ।
[4]भावस्य तारतम्येन तत्तद्दीक्षादिसाधनम् ॥ ४६ ॥
दीक्षया दीक्षयित्वाथ पात्रयित्वाथवा धिया[5] ।
संस्कारेणाथर्वणेन यद्वा संस्कृत्य मन्त्रतः ॥ ४७ ॥
मन्त्रोऽयमुपदेष्टव्यो गुरुणा [6]गुरुसेविनः ।
इत्थं ग्रहणसिद्धेन साधनेनाथ [7]वाग्यतः ॥ ४८ ॥
मन्त्रेणानेन सिद्धेन कुर्याल्लोकहितं सुधीः ।

क्षुद्रार्थं मन्त्रो न प्रयोज्यः

[8]न जातु यस्य कस्यापि क्षुद्रस्यात्मन एव वा ॥ ४९ ॥

[1] मन्त्रराजे A B C.
[2] उत्पाद्यते B C E.
[3] एवं ध्यात्वा ह्यच्छलेन मन्त्रं स्वेन प्रकाशयेत् A B C E F.
[4] चलस्य A B C; छलस्य E F.
[5] अथ पात्रया A B C.
[6] गुरुसेविना E.
[7] वान्यतः A B C.
[8] न जात्वेकस्य D.

लौकिकेऽर्थे विधिः कार्यः [1]क्षुद्रकृत्यं हि तत् स्मृतम् ।

मन्त्रप्रयोगविषयाः

त्रैलोक्यस्याथ रक्षार्थे भुवश्चक्रस्य वा कृते ॥ ५० ॥
राष्ट्रस्य वाथ राज्ञो वा राजमात्रस्य वा कृते ।
भावायैव विधिः कार्यो नैवाभावाय कर्हिचित् ॥५१॥

पुरश्चरणार्थप्रदेशविधिः

पर्वताग्रे नदीतीरे विष्णोरायतनेऽपि वा[2] ।
ऋषीणामाश्रमे वापि सिद्धानामालयेऽपि वा[3] ॥ ५२ ॥
गवामायतने वापि वह्न्यायतन एव वा ।

कृच्छ्रादिभिः शरीरशोधनम्

त्रिभिः कृच्छ्रैर्विशोध्य स्वं गायत्रीनियुतेन वा ॥
त्रिभिर्वा ब्रह्मकूर्चोत्थैः स्नानैः सात्त्वतचोदितैः ।

पुरश्चरणाङ्गनियमाः

अहरेकं हरेर्बिम्बमापादमवलोकयेत्[4] ॥ ५४ ॥
ततो भैक्षहविष्याशी यावकेनोत वर्तयेत् ।
[5]पयोव्रतो हविष्याशी यथा वा शक्नुयान्नरः ॥ ५५ ॥

1 क्षयकृत्यम् A B C E F.
2 अथवा D.
3 अयनेऽपि वा D.
4 आपीठमवलोकयेत् D.
5 A B C omit this line.

मन्त्रजपादिसंख्या

जपेल्लक्षाणि [1]षण्मन्त्री जुहुयाच्चायुतानि षट् ।
तावच्च तर्पयेत् तोयैर्ब्राह्मणानथ[2] तर्पयेत् ॥ ५६ ॥

मन्त्रसिद्धिः

अच्छलेनेतिवृत्तस्य मन्त्रनाथः प्रसीदति ।

तेन लोकसंरक्षा

प्रसन्नेनाथ मन्त्रेण रक्षा लोकानुकम्पया ॥ ५७ ॥
राजार्थितेन वै कार्या नार्थकार्पण्यतः क्वचित् ।
इति ते दर्शितः सम्यङ् मन्त्रनाथस्य विस्तरः ।

मन्त्रानधिकारिणः

नादान्तैः श्रावणीयोऽयं नैव यादृशतादृशैः ॥ ५८ ॥

इति श्रीपाञ्चरात्रे तन्त्ररहस्ये अहिर्बुध्न्यसंहितायां मन्त्रग्रहणादि-
दीक्षाविधानं नाम विंशोऽध्यायः

आदितः श्लोकाः १२२७

[1] तन्मन्त्री D.   [2] ब्राह्मणानपि A B C E F.

## ज्योतिर्मयरक्षानिरूपणं नाम एकविंशोऽध्यायः

ध्यातं सकृद्भवानेककोट्यघौघं हरत्यरम् ।
सुदर्शनस्य तद्दिव्यं भर्गो देवस्य धीमहि ॥

रक्षाप्रकारप्रश्नः

नारदः—

नमो निखिलगीर्वाणगणश्रेयोविधायिने ।
नमस्ते त्रिपुराराते भूयो गौरीगुरो नमः ॥ १ ॥
अत्यद्भुतमिदं दिव्यं वेदान्तेष्वपि दुर्लभम् ।
श्रुतं भगवतो वाक्यं कृतार्थोऽहमनेन वै ॥ २ ॥
भूयोऽहं श्रोतुमिच्छामि त्वद्वाक्यामृतमुत्तमम् ।
का रक्षा कीदृशी चैव कार्या मन्त्रेण मन्त्रिणा ॥ ३ ॥

रक्षाया द्वैविध्यम्

अहिर्बुध्न्यः—

रक्षा तु द्विविधा मान्त्री मन्त्रनित्येन धीमता ।
कार्या ज्योतिर्मयी पूर्वं पश्चात् तत्र च वाङ्मयी ॥ ४ ॥

अक्षकल्पनम्

यत् तद् दिव्यं महज्ज्योतिरक्षरं ब्रह्म शाश्वतम् ।

सूर्यस्य यः परः सूर्यश्चन्द्रश्चन्द्रस्य यः परः ॥ ५ ॥
अग्नेरग्निः परो दीप्तेस्तेजस्तत्तेजसामपि ।
नित्यतृप्तं सदानन्दमुदयास्तमयोज्झितम् ॥ ६ ॥
तदक्षं कल्पयेद् दिव्यमथ नाभिं स्मरेद् बुधः ।

नाभिकल्पनम्

तद्धर्मधर्मिणीं शक्तिं ब्रह्मणोऽनपगामिनीम् ॥ ७ ॥
[1]अनाकारामनौपम्यां लक्षयन्तीं सदा जगत् ।

शक्तेः श्रीशब्दवाच्यत्वं तन्निर्वचनं च

श्रयन्तीं श्रीयमाणां च शृणन्तीं शृण्वतीमपि ॥ ८ ॥
महानन्दां महाभासां निर्विकारां [2]निरेषणाम् ।

श्रियः षाड्गुण्यपूर्णता

ज्ञानशक्तिबलैश्वर्यवीर्यतेजःप्रभावतीम् ॥ ९ ॥
[3]अनन्तानन्तरूपां तामभेद्यां सर्वभेदिनीम् ।
नन्दां भद्रां जयां पूर्णां रिक्तां चैवामृतां हराम् ॥ १० ॥
त्रिरूपामत्रिरूपां च सर्वप्रत्यक्षसंमताम् ।
निषेधैरनिषेध्यां तामविधेयां विधिक्रमैः ॥ ११ ॥
अवाच्यां वाचिकां नित्यां गौरीं लक्ष्मीं सरस्वतीम् ।

अरकल्पनम्

अराणि पञ्च कृत्यानि शक्तेस्तस्याः प्रकल्पयेत् ॥ १२ ॥

1 अङ्गाकाराम् D.
2 निरीक्षणाम् A B C E F.
3 अनन्तामन्तरूपाम् D.

तिरोभावं सृजिं चैव स्थितिं संहृत्यनुग्रहौ ।

नेमिकल्पनम्

व्यूहं व्यूहान्तरं चैव नेमिभावं प्रकल्पयेत् ॥ १३ ॥
सच्चिदानन्दसंदोहमस्पन्दस्पन्दलक्षणम्[1] ।
सर्वक्रियास्पदं शुद्धमक्रियास्पदसेवितम् ॥ १४ ॥
उदयास्तमयस्थं तदुदयास्तमयोज्झितम् ।
अवस्थाविधुरं नित्यं शश्वच्चतुरवस्थितम् ॥ १५ ॥
अपदं चाक्रमं चैव क्रमास्थितचतुष्पदम् ।
अनायुधमसंरम्भं सर्वायुधसमन्वितम् ॥ १६ ॥
शास्त्रशास्त्रार्थतद्भेदं फलक्लृप्तिविचक्षणम् ।
चन्द्रार्काग्निसहस्रौघकोटिकोट्यर्बुदोपमैः ॥ १७ ॥
स्वभासां निचयैर्ध्वस्तसमस्तदुरितोदयम् ।

विभवेशादीनां नेमिबाह्यस्थानकल्पनम्

नेमिबाह्यस्थितान् ज्वालान् विभवेशाननुस्मरेत् ॥१८॥
चन्द्रार्काग्निसहस्राभान् संविदानन्दलक्षणान् ।
सर्वाकारान् निराकान् सर्वाभीष्टफलप्रदान् ॥ १९ ॥
कान्तिज्वालाकुलालीढरक्षोदैत्येन्द्रदानवान् ।
धूम्रां ज्वालाकुलोत्थां च सृष्टिं शुद्धेतरां स्मरेत् ॥ २० ॥
त्रैलोक्यं धरणीं चक्रं मण्डलं वा तदीश्वरम् ।

[1] पदलक्षणम् A B C E F.

अक्षस्थं कल्पयेत् तस्य यदीच्छेद्रक्षितुं धिया ॥ २१ ॥

एवं ध्यायिन आनुषङ्गिकं फलम्

इत्थं विचिन्तयेद् यत्र मन्त्री मन्त्रार्थतत्परः ।
तत्र नश्यन्ति पाप्मान आधयो व्याधयोऽपि वा[1] ॥
ईतयोऽरातयश्चैव न क्लेशा [2]दधते पदम् ।
राजा विजयते [3]नित्यं शश्वत् स्निह्यन्ति मन्त्रिणः ॥२३॥
नित्यं माद्यन्ति मित्राणि सुख्यन्ति सुहृदस्तथा ।
बध्नन्ति बान्धवाः प्रीतिं सन्तः सन्ति च संततम् ॥
पोष्याः पुष्यन्ति चार्थानां श्रयन्ति श्रिय एव च ।
ऋध्नुवन्ति प्रजा नित्यं प्रसीदन्त्यः परस्परम् ॥ २५ ॥
कामैर्धर्मान् निबध्नन्ति [4]धर्मैरर्थाननेकशः ।
अर्थैः कामान् निबध्नन्ति तथा धर्मानशेषतः ॥ २६ ॥
[5]धर्मैरर्थान् निबध्नन्ति तथा कामानशेषतः ।
धर्मार्थाभ्यां तथा कामं कामार्थाभ्यां तथेतरम् ॥ २७ ॥
अर्थं च धर्मकामाभ्यां संचिन्वन्ति सदा नराः ।

मुख्यफलकथनम्

सर्वे स्वधर्मनिरतास्तथा कल्याणभागिनः ॥ २८ ॥
संप्राप्य भगवज्ज्ञानं प्राप्नुवन्ति परं पदम् ।

1 च D.
2 दधिरे A B C E F.
3 विश्वं D.
4 धर्मैर्धर्माननेकशः D.
5 A B C omit this line.

अध्यायार्थनिगमनम्

**इति ज्योतिर्मयी रक्षा लेशतस्ते निदर्शिता।**
**रक्षां तु वाङ्मयीं प्रोक्तां गृणतो मे निशामय॥ २९॥**

इति श्रीपाञ्चरात्रे तन्त्ररहस्ये अहिर्बुध्न्यसंहितायां ज्योतिर्मयरक्षा-
निरूपणं नाम एकविंशोऽध्यायः

आदितः श्लोकाः १२५६

## मन्त्रमयरक्षानिरूपणं नाम द्वाविंशोऽध्यायः

ध्यातं सकृद्भवानेककोट्यघौघं हरत्यरम् ।
सुदर्शनस्य तद्दिव्यं भर्गो देवस्य धीमहि ॥

तत्रादौ चतुररब्रह्मचक्रम्

अहिर्बुध्न्यः—

शृणु [1]मन्त्रमयीं रक्षां वाङ्मयी या निगद्यते ।
[2]यस्मिन् विश्वमिदं प्रोतं सदेवासुरमानुषम्[3] ॥ १ ॥
मन्त्रनाथः पुरा यो हि षड्वर्णः समुदाहृतः ।
कामधुक् साधकेन्द्राणामचिन्त्याश्चर्यबृंहितः ॥ २ ॥
तं तारशक्तिश्रीबीजैर्ग्रथितं [4]कल्पयेन्मनुम् ।
तारेण वेष्टयेत् त्रिस्तं तथा शक्त्या तथा श्रिया ॥ ३ ॥
विलिखेत् परितो भूयः सहग्रथितमातृकम् ।
परितो विलिखेद् बाह्ये साध्यनाम विदर्भितम् ॥ ४ ॥
मन्त्रेश्वरं बहिर्भूयस्तारशक्तिश्रियो[5] लिखेत् ।
अक्षक्लृप्तिरियं दिव्या देवैरपि सुदुर्लभा ॥ ५ ॥

1 यन्त्रमयीं D.
2 यस्य D.
3 मानवम् D.
4 लक्षयेन्मनुम् D.
5 श्रिया A B C.

स्राकारं कल्पयेन्नाभिं शक्तिश्रीकारलोलितम् ।
स्राकारग्रथितेनैव मन्त्रनाथेन वेष्टयेत् ॥ ६ ॥
शक्तिश्रीतारग्रथितां मातृकां बहिरालिखेत् ।
अप्रमेयं ततस्तारं प्रथमं शक्तिमप्यतः ॥ ७ ॥
व्यापकं च श्रियं चेति क्रमात् पूर्वमरं लिखेत् ।
अप्रमेयेण ग्रथितं पार्श्वयोर्मन्त्रमालिखेत् ॥ ८ ॥
उद्दामादिक्रमेणैव दक्षिणं [1]चारमालिखेत् ।
[2]प्रासादादिक्रमेणैव पश्चिमं [1]चारमालिखेत् ॥ ९ ॥
[3]व्योमेशादिक्रमेणैवमुत्तरं चारमालिखेत् ।
इयं चतुररी दिव्या सुरैरपि सुपूजिता ॥ १० ॥
आद्यन्तयोरराणां च रेफं मन्त्राक्षरं लिखेत् ।
कालानलसमज्योतिर्भवेदरचतुष्टयम् ॥ ११ ॥
परितः कल्पयेन्नेमिं वैष्णवं तु षडक्षरम् ।
शक्तितारमाबीजैर्ग्रथितं[4] [5]वर्मवेष्टितम् ॥ १२ ॥
शक्तितारमाश्चैव परितस्त्रिस्त्रिरालिखेत् ।
फट्कारशक्तितारश्रीग्रथितां मातृकां पुनः ॥ १३ ॥
प्रधिभूमौ लिखेच्चक्रमेतच्चतुररं स्मृतम् ।

षडरविष्णुचक्रम्

तारकात्मकमेतत्तु चक्रमक्षं प्रकल्पयेत् ॥ १४ ॥

[1] द्वारमालिखेत् D.
[2] प्रधानादि D.
[3] A B C E F omit this line.
[4] बीजग्रथितं D.
[5] चर्म A B C E F.

तारशक्तिरमाबीजैर्ग्रथितं मन्त्रनायकम् ।
परितो विलिखेच्चक्रं पूर्वमक्षीकृतं हि यत्[1] ॥ १५ ॥
नामवर्णान् लिखेद् बाह्ये तारादित्रयदर्भितान्[2] ।
वैष्णवेन षडर्णेन ग्रथितं मन्त्रनायकम् ॥ १६ ॥
परितो विलिखेद् बाह्ये तद्बहिः सहदर्भिताम्[3] ।
मातृकां विलिखेत् सर्वमिदमक्षं विचिन्तयेत् ॥ १७ ॥
वैष्णवेन षडर्णेन शक्तिश्रीबीजतारकैः ।
ग्रथितं कल्पयेन्नाभिं स्राकारं परमाद्भुतम् ॥ १८ ॥
स्राकारग्रथितां चापि मातृकां परितो लिखेत् ।
रेफं च प्रणवं रेफं प्रणवं शक्तिमेव च ॥ १९ ॥
रेफं च प्रणवं पश्चाच्छ्रियं पश्चान्महामुने ।
रेफं चेति लिखेत् पूर्वमरं कालानलद्युतिम् ॥ २० ॥
प्रणवालोलितं मन्त्रमाग्नेयमरमालिखेत् ।
रेफं विं प्रणवं रेफं विं शक्तिं रेफमेव च ॥ २१ ॥
विं श्रियं रेफमित्येवं दक्षिणं चारमालिखेत् ।
रेफं ष्णं प्रणवं रेफं ष्णं शक्तिं रेफमेव च ॥ २२ ॥
ष्णं [4][श्रियं रेफमित्येवं नैर्ऋतं चाप्यरं लिखेत् ।
रेफं वें प्रणवं रेफं वें शक्तिं रेफमेव च ॥ २३ ॥
वें श्रियं] रेफमित्येवं वारुणं चाप्यरं लिखेत् ।

1 स्मरेत् A B C E F.
2 गर्भितम् A B C E F.
3 गर्भिताम् B C.
4 D omits the portion within brackets.

रेफं नं प्रणवं रेफं नं शक्तिं रेफमेव च ॥ २४ ॥
नं श्रियं रेफमित्येवं वायव्यं चारमालिखेत् ।
[1]रेफं मों प्रणवं [1]रेफं मों शक्तिं रेफमेव च ॥ २५ ॥
मों श्रियं रेफमित्येवमैशानं[2] चाप्यरं लिखेत् ।
तत्तदक्षरसंदिष्टं[3] मन्त्रं तत्पार्श्वयोर्लिखेत् ॥ २६ ॥
दशाक्षराण्यराणि स्युः प्रत्येकं षडिमानि तु ।
इयं हि षडरी दिव्या देवैरपि सुपूजिता ॥ २७ ॥
परितो विलिखेन्नेमिं मन्त्रमष्टाक्षरं बुधः ।
हुंकारं विलिखेन्नेमिं शक्तिश्रीतारलोलितम् ॥ २८ ॥
शक्तितारमास्त्रिस्त्रिरालिखेत् परितो बहिः ।
फट्कारग्रथितां बाह्ये मातृकां प्रधिमालिखेत् ॥ २९ ॥
एतत्तु षडरं चक्रं [4]षड्विंशार्णविनिर्मितम् ।

अष्टारनारायणचक्रम्

षडरं कल्पयेच्चक्रमक्षमेतन्महाद्युति[5] ॥ ३० ॥
अष्टाक्षरेण मन्त्रेण चक्रमष्टारमालिखेत् ।
महाबलं [6]महाभीमं कालानलसमद्युति[7] ॥ ३१ ॥
विधानमस्य चक्रस्य यथावदवधारय ।
विलिखेत् परितो मन्त्रं तारादित्रयलोलितम् ॥ ३२ ॥

[1] रेफमों A B C.
[2] मीशानं A B C E F.
[3] संदृब्धं D.
[4] षड्विष्णवर्णं D.
[5] तं महामुने B C E F.
[6] महावीर्यं B.
[7] समप्रभम् B.

नामवर्णान् लिखेद्वाह्ये तारादित्रयलोलितान् ।
अष्टाक्षरेण मन्त्रेण ग्रथितं मन्त्रनायकम् ॥ ३३ ॥
परितो विलिखेद् बाह्ये तद्बहिः सहृदर्भिताम् ।
मातृकां विलिखेत् सर्वमिदमक्षं विचिन्तयेत् ॥ ३४ ॥
अष्टाक्षरेण मन्त्रेण शक्तिश्रीबीजतारकैः ।
ग्रथितं कल्पयेन्नाभिं स्राकारं परमाद्भुतम् ॥ ३५ ॥
स्राकारग्रथितां चापि मातृकां परितो लिखेत् ।
एषा नाभिः समुद्दिष्टा बहिरष्टाक्षरं लिखेत् ॥ ३६ ॥
रेफं च प्रणवं तारं रेफं तारं च तारिकाम् ।
रेफं तारं श्रियं चैव रं चेति प्रागरं लिखेत् ॥ ३७ ॥
रेफं नं तारकं रेफं नं शक्तिं रेफनौ तथा ।
श्रियं रेफमिति प्राज्ञोऽप्याग्नेयं कल्पयेदरम् ॥ ३८ ॥
[1]रेफं मों तारकं [1]रेफं मों शक्तिं रेफमोंद्वयम् ।
श्रियं रेफं च मतिमानरं याम्यं क्रमाल्लिखेत् ॥ ३९ ॥
रेफं नां तारकं रेफं नां शक्तिं रेफमेव च ।
नां श्रियं रेफमित्येवं नैर्ऋतं च लिखेदरम् ॥ ४० ॥
रेफं रां तारकं रेफं रां शक्तिं रेफमेव च ।
रां श्रियं रेफमित्येवं वारुणं च लिखेदरम् ॥ ४१ ॥
रेफं [2]यं तारकं रेफं यं शक्तिं रेफमेव च ।
यं श्रियं रेफमित्येवं वायव्यं च लिखेदरम् ॥ ४२ ॥

[1] रेफमों A.  [2] रां A B C.

रेफं णां तारकं रेफं णां शक्तिं रेफमेव च ।
णां श्रियं रेफमित्येवं कौबेरं च लिखेदरम् ॥ ४३ ॥
रेफं यं तारकं रेफं यं शक्तिं रेफमेव च ।
यं श्रियं रेफमित्येवमैशानं च लिखेदरम् ॥ ४४ ॥
तत्तदक्षरसंयुक्तं मन्त्रं चाप्यरपार्श्वयोः ।
[1]अष्टारीयं महापुण्या सुरासुरनमस्कृता ॥ ४५ ॥
परितः कल्पयेन्नेमिं द्वादशाक्षरमद्भुतम् ।
तारतारानुताराभिर्ग्रथितं हुं बहिर्लिखेत् ॥ ४६ ॥
शक्तितारमास्त्रिस्त्रिः [2]परितो बहिरालिखेत् ।
[3]फट्कारग्रथितां बाह्ये मातृकां प्रधिमालिखेत् ॥ ४७ ॥
नारायणं महाचक्रमेतन्नारायणेरितम् ।
अक्षं कृत्वा चक्रमेतद् द्वादशारं बहिर्लिखेत् ।
वासुदेवं महाचक्रं विधिं तस्य निशामय ॥ ४८ ॥

इति श्रीपाञ्चरात्रे तन्त्ररहस्ये अहिर्बुध्न्यसंहितायां मन्त्रमयरक्षा-
निरूपणं नाम द्वाविंशोऽध्यायः

आदितः श्लोकाः १३०४

[1] अष्टाक्षरी A B C E F. [2] आलिखेत्परितो बहिः D.
[3] A B C E F omit three lines from here.

वासुदेवादियन्त्रनिरूपणं नाम त्रयोविंशोऽध्यायः

ध्यातं सकृद्भवानेककोट्यघौघं हरत्यरम् ।
सुदर्शनस्य तद्दिव्यं भर्गो देवस्य धीमहि ॥

द्वादशारचक्रम्

अहिर्बुध्न्यः—

द्वादशारस्य चक्रस्य क्रमोऽयं परिगीयते ।
पाप्मानो विप्रदूयन्ते यस्य स्मरणमात्रतः ॥ १ ॥
नारायणाह्वयं चक्रं यत् पूर्वं समुदीरितम् ।
तदक्षं कल्पयेन्मन्त्री वक्ष्यमाणविधानतः ॥ २ ॥
तारतारानुताराभिर्ग्रथितं मन्त्रनायकम् ।
[1]परितो विलिखेद् बाह्ये चक्रान्नारायणाह्वयात् ॥ ३ ॥
[2]नामवर्णान् लिखेद् बाह्ये तारादित्रयलोलितान् ।
द्वादशाक्षरमन्त्रेण ग्रथितं मन्त्रनायकम् ॥ ४ ॥
परितो विलिखेद् बाह्ये तद्बहिः सहृदर्भिताम् ।
मातृकां विलिखेत् सर्वमेतदक्षं विचिन्तयेत् ॥ ५ ॥

1 A B C omit this line.

2 B C omit two lines from here.

द्वादशाक्षरमन्त्रेण शक्तिश्रीबीजतारकैः ।
ग्रथितां कल्पयेन्नाभिं स्त्राकारं परमाद्भुतम् ॥ ६ ॥
स्त्राकारग्रथितां चापि मातृकां परितो लिखेत् ।
एषा नाभिः समुद्दिष्टा द्वादशाराण्यथो लिखेत् ॥
दिक्षु द्वे द्वे अरे लिख्याद्विदिक्ष्वेकैकमप्युत ।
रेफं मन्त्राक्षरं तारं रेफं मन्त्रार्णतारिके ॥ ८ ॥
रेफं मन्त्रार्णलक्ष्म्यौ च रेफमित्यनया दिशा[1] ।
अराणि द्वादशैवं च द्वादशाक्षरविद्यया ॥ ९ ॥
प्रागादीशानपर्यन्तं कल्पयेन्मन्त्रवित्तमः ।
तत्तदक्षरसंयुक्तं मन्त्रं चाप्यरपार्श्वयोः ॥ १० ॥
द्वादशारी महाविद्या सेयं सर्वेश्वरप्रिया ।
परितः कल्पयेन्नेमिं जितंताख्यमहामनुम् ॥ ११ ॥
तारतारानुताराभिर्ग्रथितं हुं बहिर्लिखेत् ।
शक्तितारमास्त्रिस्त्रिरालिखेत् परितो बहिः ॥ १२ ॥
फट्कारग्रथितां बाह्ये मातृकां प्रधिमालिखेत् ।
वासुदेवाह्वयं चक्रमेतद् देवैरभिष्टुतम्[2] ॥ १३ ॥
अस्य चक्रस्य माहात्म्यं वक्तुं शक्यं न मादृशैः ।

अजिताख्यद्वात्रिंशदरचक्रम्

अक्षं कृत्वा चक्रमेतद् द्वात्रिंशदरमालिखेत् ॥ १४ ॥

[1] अनिशम् B C.

[2] देवैरनुष्ठितम् B C E F.

अजिताख्यमिदं चक्रं सुरासुरनमस्कृतम् ।
अस्य चक्रस्य विधिवद् विधानमुपदिश्यते ॥ १५ ॥
वासुदेवाह्वयं [1]चक्रमस्याक्षं परिकल्पयेत् ।
यथा तथा विधानेन विधानं शृणु सांप्रतम् ॥ १६ ॥
तारतारानुताराभिर्ग्रथितं मन्त्रनायकम् ।
परितो विलिखेन्मन्त्री वासुदेवाह्वयाद् बहिः ॥ १७ ॥
तारादिग्रथितान् साध्यनामवर्णान् लिखेद्बहिः ।
जितंताग्रथितं मन्त्रं परितो बहिरालिखेत् ॥ १८ ॥
मातृकां विलिखेद् बाह्ये [2]सहृद्वन्द्वविदर्भिताम् ।
विद्यादजितचक्रस्य सम्यगक्षमिदं बुधः ॥ १९ ॥
जितंताख्येन मन्त्रेण शक्तिश्रीबीजतारकैः ।
ग्रथितं [3]कल्पयेन्नाभिं स्राकारं परमाद्भुतम् ॥ २० ॥
स्राकारग्रथितां चापि मातृकां परितो लिखेत् ।
एषा नाभिः समुद्दिष्टा पुण्डरीकाक्षसंमता ॥ २१ ॥
द्वात्रिंशतमराण्यस्य परितो नाभिमालिखेत् ।
दिक्षु चत्वारि चत्वारि लिखेदष्टसु वै क्रमात् ॥ २२ ॥
रेफं मन्त्राक्षरं तारं रेफं मन्त्रार्णतारिके ।
रेफं मन्त्रार्णलक्ष्म्यौ च रेफमित्यनया दिशा ॥ २३ ॥
द्वात्रिंशतमराण्येवं लिखेत् सम्यग्जितंतया ।

[1] मन्त्रमस्याक्षं E. [2] सहृद्वय D.
[3] कर्षयेन्नाभिं D.

तत्तदक्षरसंयुक्तं मन्त्रं चाप्यरपार्श्वयोः ॥ २४ ॥
सा द्वात्रिंशदरी दिव्या देवदेवजयप्रदा ।
परितः कल्पयेन्नेमिं नृसिंहानुष्टुभं पराम् ॥ २५ ॥
तारतारानुताराभिर्ग्रथितं हुं बहिर्लिखेत् ।
शक्तितारारमास्त्रिस्त्रिः परितो बहिरालिखेत् ॥ २६ ॥
फट्कारग्रथितां बाह्ये मातृकां प्रधिमालिखेत् ।
अजिताख्यमिदं चक्रं पुण्डरीकाक्षसंमतम् ॥ २७ ॥
[1]येनाद्य पुण्डरीकाक्षो दैत्यान् विजयतेऽखिलान् ।
एतदत्यद्भुतं चक्रं कथ्यते वैष्णवं यशः ॥ २८ ॥
नित्ययुक्तोऽत्र सन्मन्त्री जगद्विजयतेऽखिलम् ।

नारसिंहद्वात्रिंशदरचक्रम्

अक्षीकृत्यैतच्चक्रं तु चक्रमन्यत् प्रवर्तते ॥ २९ ॥
महाविष्णुमयं घोरं भद्रं मृत्युविमर्दनम् ।
विधानं शृणु तस्येदं कथ्यमानं मयानघ ॥ ३० ॥
तारतारानुताराभिर्ग्रथितं मन्त्रनायकम् ।
अजिताख्यान्महाचक्रात् परितो बहिरालिखेत् ॥ ३१ ॥
तारादिग्रथितान् साध्यनामवर्णान् बहिर्लिखेत् ।
उग्रवीरादिमन्त्रेण ग्रथितं मन्त्रनायकम् ॥ ३२ ॥
परितो विलिखेद् बाह्ये सहग्रथितमातृकम्[2] ।

[1] येनाद्यः B C E F.
[2] मातृकाम् All MSS.

महाविष्णुमयं[1] ह्येतदक्षं चक्रस्य शोभनम् ॥ ३३ ॥
उग्रवीरादिमन्त्रेण शक्तिश्रीबीजतारकैः ।
ग्रथितं कल्पयेन्नाभिं स्राकारं परमाद्भुतम् ॥ ३४ ॥
स्राकारग्रथितां चापि मातृकां परितो लिखेत् ।
एषा नाभिः समुद्दिष्टा महाविष्णुमयी परा ॥ ३५ ॥
द्वात्रिंशतमराण्यस्य परितो नाभिमालिखेत् ।
दिक्षु चत्वारि चत्वारि लिखेदष्टसु वै क्रमात् ॥ ३६ ॥
रेफं मन्त्राक्षरं तारं रेफं मन्त्रार्णतारके ।
रेफं मन्त्रार्णलक्ष्म्यौ च रेफमित्यनया दिशा ॥ ३७ ॥
द्वात्रिंशतमराण्येवं नृसिंहानुष्टुभा[2] लिखेत् ।
तत्तदक्षरसंयुक्तं मन्त्रं चाप्यरपार्श्वयोः ॥ ३८ ॥
सा द्वात्रिंशदरी [3]विद्या दुष्टदैत्यनिबर्हणी ।
अस्य चक्रस्य नेमिं तु त्रीणि छन्दांसि कल्पयेत् ॥ ३९ ॥
गायत्रीं त्रिष्टुभं चैव तथानुष्टुभमेव च ।
तारतारानुताराभिर्ग्रथितं हुं बहिर्लिखेत् ॥ ४० ॥
शक्तितारमास्त्रिस्त्रिः परितो बहिरालिखेत् ।
फट्कारग्रथितां बाह्ये मातृकां प्रधिमालिखेत् ॥
एतदत्यद्भुतं घोरं दुष्टदानवसूदनम् ।
नारसिंहं महाचक्रं मृत्युंजयमिति श्रुतम् ॥ ४२ ॥

[1] मयस्यैतदक्षं B C E F.
[2] नृसिंहानुष्टुभं B C.
[3] दिव्या E F.

प्रेतापस्मारकूश्माण्डदैत्यदानवराक्षसाः ।
डाकिन्यो भूतयोगिन्यो याश्चान्याः क्रूरजातयः ॥४३॥
स्मरणादस्य चक्रस्य विनश्यन्त्येव सर्वदा ।

शतारज्योतिश्चक्रम्

अक्षीकृत्यैतच्चक्रं तु ज्योतिश्चक्रं प्रवर्तते ॥ ४४ ॥
ज्योतींषि त्रीणि च्छन्दांसि गायत्र्यादीन्यसंशयम् ।
विधिज्ञैस्तस्य चक्रस्य विधानं विहितं शृणु ॥ ४५ ॥
यदेतत् प्रथितं ज्योतिर्दिवि प्रत्यक्षमुत्तमम् ।
एषा तदिति गायत्री [1]वेदानां जननी परा ॥ ४६ ॥
यदेतदग्निहोत्रस्थं[2] ज्योतिर्वहति वै हुतम् ।
जातवेदस इत्येषा त्रिष्टुबग्निमयी तनुः ॥ ४७ ॥
रसैः पुष्णाति यद्विश्वं ज्योतिर्नयननन्दनम् ।
तत् त्रियम्बकमित्येषानुष्टुबिन्दुमयी तनुः ॥ ४८ ॥
ज्योतिर्भिर्धार्यते विश्वं बोधतापनहर्षणैः ।
विरुद्धोपक्रमैर्विश्वं भोक्तृभोग्यमयात्मभिः ॥ ४९ ॥
यत् पूर्वमुदितं चक्रं महाविष्णुमयं [3]महत् ।
तदक्षं कल्पयेन्मन्त्री त्रिभिर्ज्योतिर्भिरुत्तमैः ॥ ५० ॥
छन्दोभिः कल्पयेदक्षं तारादिग्रथितं पुरा ।
महाविष्णुमयाद् बाह्ये विलिखेन्मन्त्रनायकम् ॥ ५१ ॥

[1] देवानां D. [2] नेत्रस्थं D.
[3] जगत् A.

तारादिग्रथितांश्चापि साध्यवर्णान् लिखेद् बहिः ।
छन्दोभिर्ग्रथितं मन्त्रं मन्त्री तद्बहिरालिखेत् ॥ ५२ ॥
मातृकां विलिखेद् बाह्ये सहृद्वयविदर्भिताम् ।
एतदक्षं समुद्दिष्टं ज्योतिश्चक्रस्य नारद ॥ ५३ ॥
त्रिभिस्तदाद्यैश्छन्दोभिः शक्तिश्रीबीजतारकैः ।
ग्रथितं कल्पयेन्नाभिं स्राकारं परमाद्भुतम् ॥ ५४ ॥
स्राकारग्रथितां चापि मातृकां बहिरालिखेत् ।
एषा नाभिः समुद्दिष्टा वेदवेदान्तपूजिता ॥ ५५ ॥
अराणि शतमस्य स्युर्विधानं [1]तस्य मे शृणु ।
वायुतो वह्निपर्यन्तं रक्षसः शर्वगोचरम् ॥ ५६ ॥
सूत्रद्वयं पातयित्वा चतुर्धा प्रविभज्य तु ।
अराणि पञ्च पञ्चैव क्षेत्रमेकैकमालिखेत् ॥ ५७ ॥
अराणि शतमेवं स्युर्विधानं तस्य मे शृणु ।
गायत्र्यादीनि यानि स्युस्तत्र च्छन्दस्त्रयं लिखेत् ॥५८॥
रेफं मन्त्राक्षरं तारं रेफं मन्त्रार्णतारके ।
रेफं मन्त्रार्णलक्ष्म्यौ च रेफमित्यनया दिशा ॥ ५९ ॥
विलिखेदरगायत्रीं गायत्र्यादौ समाहितः ।
अराणां त्रिष्टुभं चैव त्रिष्टुभैव समालिखेत् ॥ ६० ॥
[2]अनुष्टुभमराणां चानुष्टुभैव समालिखेत् ।

[1] तत्र D.

[2] A B C E F omit this line.

प्रागादिक्रमयोगेन यावदीशानगोचरम् ॥ ६१ ॥
तत्तदक्षरसंयुक्तं मन्त्रं चाप्यरपार्श्वयोः
शतारीयं महापुण्या सा ब्रह्मास्त्रमयी परा ॥ ६२ ॥
पादैः पदैरक्षरैश्च त्रिधैव प्रतिलोमया ।
ब्रह्मदण्डब्रह्मशिरोब्रह्मास्त्रमयतेजसा[1] ॥ ६३ ॥
आन्तरं नेमिभागं तु गायत्र्या कल्पयेत् सुधीः ।
आग्नेयास्त्रस्वरूपिण्या त्रिष्टुभा प्रतिलोमया ॥ ६४ ॥
मध्यमं नेमिभागं तु कल्पयेन्मन्त्रवित्तमः ।
अनुष्टुभा तृतीयं तु नेमिभागं प्रकल्पयेत् ॥ ६५ ॥
त्रैयम्बकास्त्ररूपिण्या वर्णशः प्रतिलोमया ।
विलिखेत् प्रतिलोमास्ता मन्त्रेण ग्रथिताः सुधीः ॥६६॥
तारतारानुताराभिर्ग्रथितं हुं बहिर्लिखेत् ।
शक्तितारस्मास्त्रिस्त्रिः परितो बहिरालिखेत् ॥ ६७ ॥
फट्कारग्रथितां बाह्ये मातृकां प्रधिमालिखेत् ।
त्रिषु लोकेषु विख्यातं त्रिज्योतिश्चक्रमुत्तमम्[2] ॥ ६८ ॥
नानास्त्रग्रामसंभिन्नं ब्रह्मज्योतिरनामयम् ।

ब्रह्मचक्रम्

अस्माच्चक्राद् बहिः पञ्च होतारः [3]सग्रहाः स्मृताः ॥६९॥
संभाराः [4]पत्नयश्चैव दक्षिणा हृदयानि च ।

1 तेजसः D.
2 अद्भुतम् E F.
3 सगृहाः A; संग्रहाः B C.
4 पतयश्चैव A B C.

तद्बहिः शतरुद्राणि पञ्च ब्रह्माणि तद्बहिः ॥ ७० ॥
[1]त्वरितां तद्बहिश्चैव सूक्तं पौरुषमेव च ।
श्रीसूक्तं तद्बहिश्चैव गायत्रीं व्याहृतित्रयम् ॥ ७१ ॥
प्रणवं चेति परितः [2]पङ्क्तीरेताः क्रमाल्लिखेत् ।
एतद् ब्रह्ममयं चक्रं सर्वच्छन्दोविनिर्मितम्[3] ॥ ७२ ॥
सर्वदुःखोपशमनं सर्वपापनिबर्हणम् ।
स्मृतिमात्रेण सर्वेषामभीष्टार्थप्रदं सदा ॥ ७३ ॥

सहस्रारमातृकाचक्रम्

बहिः प्रवर्तते चास्मान्मातृकाचक्रमुत्तमम् ।
[4]सोमसूर्याग्निबिन्दूनां कूटं तु परितो लिखेत् ॥ ७४ ॥
तारतारानुताराभिर्ग्रथितं मन्त्रनायकम् ।
तद्बहिर्विलिखेन्मन्त्री तारादिग्रथितान् पुनः ॥ ७५ ॥
नामवर्णान् लिखेद् बाह्ये तद्बहिर्मन्त्रमिश्रितान्[5] ।
मातृकां विलिखेद् बाह्ये सहग्रथितमातृकाम् ॥ ७६ ॥
एतदक्षं समुद्दिष्टं मातृकाचक्रसंभवम् ।
तारतारानुताराभिर्वर्णमातृकयापि च ॥ ७७ ॥
ग्रथितं [6]कल्पयेन्नाभिं स्राकारं परमाद्भुतम् ।
स्राकारग्रथितां चापि मातृकां बहिरालिखेत् ॥ ७८ ॥

[1] त्वरिताः B C E F.
[2] पङ्क्तीरेखाः E; पङ्क्तिरेखाः B C.
[3] विनिर्जितम् D.
[4] सोमसूर्येन्दुवह्नीनां E.
[5] तद्बहिर्मातृकां श्रिताम् B C E F.
[6] मन्त्रयेन्नाभिं D.

एषा नाभिः समुद्दिष्टा शब्दब्रह्ममयी परा ।
अराण्यस्य सहस्रं [1]स्युस्तद्विधानमिदं शृणु ॥ ७९ ॥
पूर्वादिषु विभक्तेषु सूत्रैः क्षेत्रेषु पूर्ववत् ।
पञ्च पञ्चाशतं कुर्यादराणि [2]प्रतिभागशः ॥ ८० ॥
पञ्चाशद्भिस्तु विंशत्या सहस्रारं भवेत् तलम् ।
तारतारानुताराभिर्वाग्भवाद्यैस्त्रिभिस्तथा ॥ ८१ ॥
चतुर्भिर्मातृकाबीजैराद्यैरौर्वान्तिमैः स्वरैः ।
आदिद्विसप्तसंभिन्नैः काद्यैः क्षान्तैश्च वर्णकैः ॥ ८२ ॥
त्रैलोक्यैश्वर्यदोपेतैः शतैः पञ्चभिरक्षरैः[3] ।
तावद्भिश्चैव सृष्ट्यन्तैः सहस्रेणेति संहतै[4]ः ॥ ८३ ॥
अराणि कल्पयेदेवं सहस्रं तद्विधिं शृणु ।
रेफं मन्त्राक्षरं तारं रेफं मन्त्रार्णतारके ॥ ८४ ॥
रेफं मन्त्रार्णलक्ष्म्यौ च रेफमित्यनया दिशा ।
प्रागादिक्रमयोगेन लिखेदरसहस्रकम् ॥ ८५ ॥
सहस्रारीयमुद्दिष्टा शब्दब्रह्ममयी परा ।
ऐश्वर्यं बिन्दुसंयुक्तं वाग्भवं संप्रचक्षते ॥ ८६ ॥
करालविबुधाख्यस्था माया व्यापिसमन्विता ।
कामराजमयं बीजं [5]सोमौर्वव्यापिसंयुता ॥ ८७ ॥

[1] स्यात् D. [2] प्रविभागशः A B C.
[3] पञ्च पञ्चभिरक्षरैः B C; शनैः पञ्चभिरक्षरैः D.
[4] संहरैः D. [5] सोमोर्वौर्यापि संयुता D.

[1]बीजं सारस्वतमिदं वाग्भवाद्या इमे त्रयः ।
कालानलस्थकमलभास्करानिलगामिनी[2] ॥ ८८ ॥
माया [3]व्यापिसमायुक्ता मातृकाबीजमादिमम् ।
अशेषभुवनाधारसूर्यानलविहारिणी ॥ ८९ ॥
पञ्चबिन्दुर्व्यापियुता द्वितीयं बीजमुच्यते ।
सोमानलस्थसूक्ष्मस्थानन्दव्यापिसमन्वयः[4] ॥ ९० ॥
तृतीयं बीजमुद्दिष्टं चतुर्थमपि मे श‍ृणु ।
[5]सोमतालाङ्कसूक्ष्मस्थकालपावकगोपना[6] ॥ ९१ ॥
कूटीकृता व्यापियुता चतुर्थं बीजमुत्तमम् ।
बीजानीमानि चत्वारि मातृकायां महामुने ॥ ९२ ॥
तत्तदक्षरसंयुक्तं मन्त्रं चोभयपार्श्वयोः ।
अराणां विलिखेन्मन्त्री सहस्रारविधिक्रमे ॥ ९३ ॥
मन्त्रार्णग्रथितां मन्त्री मातृकां प्रतिलोमिकाम् ।
विलिखेत् परितो मन्त्री तारादिग्रथितं च हुम् ॥ ९४ ॥
बहिर्लिखेच्छक्तितारमास्त्रिस्त्रिर्विचक्षणः ।
फट्कारग्रथितां चापि मातृकां [7]प्रधिमालिखेत् ॥
एतत् तन्मातृकाचक्रं यत्र सर्वं प्रतिष्ठितम् ।

1 सारस्वतमिदं बीजं D.
2 नलभामिनी E.
3 ह्यादि D.
4 सूक्ष्मस्थ आनन्दो व्यापिसंमितम् A B C E F.
5 सोमकायान्त D.
6 गोपना: A B C E F.
7 बहिरालिखेत् D.

[1]यद्बीजं मातृकाक्षाद्यं तद्बहिः प्रधिमालिखेत् ॥ ९६ ॥
ततश्चिन्तामणिं बाह्ये तद्बहिश्च लिखेत् पराम् ।
परावरां तद्बहिश्च तद्बहिः श्रियमालिखेत् ॥ ९७ ॥
तद्बहिस्तारिकां चैव तद्बहिस्तारकं परम् ।
तद्बहिश्चाङ्कुशांस्त्रिस्त्रिः पाशांस्त्रिस्त्रिश्च तद्बहिः ॥९८॥
[2]आचक्रादीनि चाङ्गानि तद्बहिः परितो लिखेत् ।
तद्बहिश्चापि दिग्बन्धं तस्य रूपमिदं शृणु ॥ ९९ ॥
पुरुषाय ततः स्वाहा दिङ्नामामर्षणं ततः ।
[3]सहेति च ततः पश्चाद्बन्धयामीति दिग्गतम् ॥ १०० ॥
आत्मने च ततः स्वाहा विदिङ्नामाप्यमर्षणम् ।
सहेति च ततः पश्चाद्बन्धयामि विदिग्गतम् ॥ १०१ ॥
विलिखेच्चक्रगायत्रीमग्निप्राकारमन्ततः[4] ।
आकाशमण्डलं बाह्ये तद्बीजेन समन्वितम् ॥ १०२ ॥
[5]वायुबीजं तु तद्बाह्ये स्वबीजेन समन्वितम् ।
[6]वह्निबीजं तु तद्बाह्ये स्वबीजेन समन्वितम् ॥ १०३ ॥
आप्यं तु मण्डलं बाह्ये स्वबीजेन समन्वितम् ।
तद्बाह्ये पार्थिवं बिम्बं स्वबीजेन समन्वितम् ॥ १०४ ॥
प्राणः सूक्ष्मोऽनलश्चैव[7] वारुणः पुरुषेश्वरः ।

1 यं बीजम् D.
2 अचक्रादीनि D.
3 सद्येति D.
4 प्राकारकं ततः D.
5 वायुर्बीजं तु D; वायुबिम्बं तु B C E F.
6 D omits this line.
7 अनिलश्चैव D.

सव्यापिनः क्रमादेतद् व्योमादेर्बीजपञ्चकम् ॥ १०५ ॥
अनलः कमलश्चैव भास्करो मर्दनस्तथा ।
अनलः सूक्ष्म और्वश्चाप्यूर्जः पिण्डीकृता इमे ॥१०६॥
सव्यापिनः स्मृतं बीजं चिन्तामणिरिदं परम् ।
परा नाम महाविद्या सोमस्थौर्वस्थसृष्टिका ॥ १०७ ॥
सव्यापी सोमगो विष्णुरियं प्रोक्ता परावरा ।
सौदर्शनेन कूटेन पृथिवीं परिवेष्टयेत् ॥ १०८ ॥
[1]योनिं सुदर्शनस्याथ वेष्टयेत् तारया बहिः ।
सोमः सूर्यस्ततः सोमः कालपावकयोर्द्वयम् ॥ १०९ ॥
सौदर्शनमिदं कूटं निरचां पञ्चकं हलाम् ।
एतत् सौदर्शनं रूपं कालानलसमद्युति ॥ ११० ॥
शमयेत् कूटमेतद्वै तारयामृतरूपया ।
अग्नीषोमात्मकं चक्रमेतत्ते दर्शितं मुने ।
वैष्णवं परमं तेजो [2]ध्याहि चक्रमिदं सदा ॥ १११ ॥

इति श्रीपाञ्चरात्रे तन्त्ररहस्ये अहिर्बुध्न्यसंहितायां वासुदेवादि-
यन्त्रनिरूपणं नाम त्रयोविंशोऽध्यायः

आदितः श्लोकाः १४१५

[1] योन्या D.
[2] व्यापि D.

यन्त्रदेवताध्याननिरूपणं नाम चतुर्विंशोऽध्यायः

ध्यातं सकृद्भवानेककोट्यघौघं हरत्यरम् ।
सुदर्शनस्य तद्दिव्यं भर्गो देवस्य धीमहि ॥

उक्तानामष्टानां चक्राणां संक्षेपेण फलकथनम्

अहिर्बुध्न्यः—

सोमसूर्यदहनप्रभोज्ज्वलं
चक्रमेतदुदितं महामुने ।
वाङ्मयं सकलमन्त्रसंमितं
शब्दशब्द्यमखिलं यदुद्गतम् ॥ १ ॥
ब्रह्मचक्रमुदितं यदान्तरं
केवलं [1]विमलधीप्रदं मुने ।
विष्णुचक्रमुदितं यदद्भुतं
[2]व्याप्तिकान्तिमतिविक्रमप्रदम् ॥ २ ॥
यत् तृतीयमुदितं महाद्भुतं
चक्रमुज्ज्वलयशोऽर्थदं तु तत् ।
यत्तु चक्रमुदितं तुरीयकं
मोक्षदं मुनिगणोदितं मुने ॥ ३ ॥

[1] सकल A B C E F.

[2] व्यक्ति E.

पञ्चमं विजयदायि कीर्तिदं
षष्ठमुग्रगदमृत्युनाशनम् ।
ब्रह्मवर्चसविधायि सप्तमं
संपदर्थविजयार्थमष्टमम् ॥ ४ ॥

विस्तरेण तन्महिमवर्णनस्याशक्यत्वम्

एकैकशोऽल्पश इदं गदितं फलं ते
चक्राष्टके सकलयोगिमुनीन्द्रवन्द्ये ।
वर्षायुतैर्बहुभिरप्यखिलात्मकस्य
शक्या न विस्तृतिरमुष्य मयाभिधातुम् ॥ ५ ॥
मन्त्राक्षरप्रथितभावविभेदपूर्वं
मन्त्री [1]यजेत विधिवन्मनुदेवतास्ताः ।
आकारशक्तिपरिवारविभूषणास्त्र[2]-
वीर्यप्रभावविषयैश्च विचिन्तयेत् ताः[3] ॥ ६ ॥

तत्तच्चक्रदेवतास्वरूपतद्ध्यानादिप्रपञ्चनम्

आद्यं निरञ्जनमशेषजगत्प्रसूति-
त्राणप्रमाथनियमोद्यदनुग्रहस्थम् ।
संपूर्णशक्तिमतरङ्गमहार्णवाभं
ध्यायेद्धरिं प्रणवगोचरमादिचक्रे ॥ ७ ॥

1 यथेह A B C F; यथैव E. 2 विभूषणार्थ A B C E F.
3 ताम् E.

श्वेतं प्रसन्नवदनं कमलायताक्षं
पीताम्बरं पृथुलवक्षसमात्मयोनिम् ।
पीनोरुदीर्घभुजबृन्दधृतारिशङ्ख-
कौमोदकीसरसिजं खलु विष्णुचक्रे ॥ ८ ॥

श्यामं किरीटिनमुदारचतुर्भुजस्थ-
कौमोदकीकमलवारिजवर्यचक्रम् ।
नारायणं नयननन्दनमादिदेवं
ध्यायेच्छ्रिया सह तृतीयपदस्थचक्रे ॥ ९ ॥

कुन्देन्दुगौरमरविन्ददलायताक्षं
शुद्धाक्षमालममलोद्यतबोधमुद्रम् ।
बाहुद्वयीविधृतचक्रविशुद्धशङ्खं
तं वासुदेवमिति चिन्तय तुर्यचक्रे ॥ १० ॥

शङ्खारिपङ्कजगदाङ्कुशपाशशार्ङ्ग-
सौनन्दकान् दधतमष्टभिरुग्रहस्तैः ।
तार्क्ष्यस्थितं रजतशैलनिभं पुराणं
संचिन्तयेदजितचक्रगतं पुमांसम् ॥ ११ ॥

क्रूरोग्रवक्रनखकोटिनिकृत्तदैत्य-
वक्षःस्थलोच्चलितशोणितदिग्धदेहम्[1] ।
घोरप्रकारनयनत्रयदुर्निरीक्ष्यं
षष्ठे विचिन्तय मुने नरसिंहमीशम् ॥ १२ ॥

[1] दैत्यम् A B C E F.

सोमाग्निसूर्यकिरणोद्गमपुञ्जकुञ्ज-
मध्यस्थितं विधृतपद्मगदारिशङ्खम् ।
छन्दःस्थितं भुवनकारणमप्रमेयं
श्रीशं विचिन्तय मुने पुरुषं पुराणम् ॥ १३ ॥

मातृकाचक्रे लक्ष्म्या ध्येयत्वम्

गोक्षीरशङ्खहिमदीधितिदेवसिन्धु-
कुन्दप्रभाविमलपङ्कजशङ्खहस्ता ।
स्मेरप्रसन्नवदना कमलायताक्षी
ध्येया [1]स्वचक्रभवनोपरि [2]मातृका सा ॥ १४ ॥
आलोलशूलदशकं त्रियुगाधिकं स्वै-
र्हस्तैर्द्विरष्टभिरथो दधती जपाभा ।
चिन्तामणिस्थितिमती नयनत्रयाढ्या
शक्तिर्हरेरिति मुने मनसा विचिन्त्या ॥ १५ ॥
पूर्णेन्दुशीतलरुचिर्धृतबोधमुद्रा
बाह्वन्तरस्थनिजबोधनपुस्तकाढ्या ।
देवी परा परमपूरुषदिव्यशक्ति-
श्चिन्त्या प्रसन्नवदना सरसीरुहाक्षी ॥ १६ ॥
पद्मारुणाभयवराङ्कुशपाशहस्ता
रक्ताम्बरा विपुलवारिजपत्रनेत्रा ।

[1] सचक्र B C E F. [2] मातृकाख्या A B C E F.

सूक्ष्मप्रभास्थितपरावरतत्त्वजाता
चिन्त्यादिशक्तिरपि[1] सा च परावराख्या ॥१७॥
बाहुस्थपाशवलिताखिलजीववर्गा
बन्धूकपद्मकुसुमारुणदेहकान्तिः ।
पीनस्तनी मदविघूर्णितनेत्रपद्मा
लक्ष्मीशपार्श्वनिलयाखिलदेवतेयम् ॥ १८ ॥
[2]वक्राग्रनासिनिशिताङ्कुशकीलितेन
[3]नम्रेण जीवनिकरेण समीड्यमाना ।
दिव्याङ्कुशस्थितिमती हरिशक्तिराद्या
ध्येया समाधिनिरतेन [4]महाप्रभावा ॥ १९ ॥

अङ्गमन्त्रदेवतातद्ध्यानादिप्रपञ्चनम्

अङ्गं तु चक्रमयदेवसमानरूप-
माचक्रपूर्वमखिलं गदितं यदादौ ।
गायत्र्यपि ज्वलितपावकतुल्यवर्णा
चक्रेशतुल्यविभवा विपुलस्तनाढ्या ॥ २० ॥
ज्वालाकुलद्रुतसमस्तसुरारिवर्गं
प्राकारमग्निमयमेव वदन्ति सन्तः ।

1 रिति सापि D.
2 वक्त्राग्र A; वक्राग्रनास D.
3 नेत्रेण B C; नक्रेण A.
4 महानुभावा D.

व्योमस्थशक्तिरपि सूर्यसहस्रमाला
[1]नीलाम्बुजद्युतिमती मनसा विचिन्त्या ॥ २१ ॥
मालां चतुर्गतिमयीं वपुषा दधाना
वायुस्थशक्तिरपि धूम्रतनुर्विचिन्त्या ।
कालानलाख्यतरुणार्कसहस्रमाला
तेजःस्थशक्तिरपि रक्ततनुर्विचिन्त्या ॥ २२ ॥
पीयूषरूपरचना सलिलस्थशक्ति-
र्ध्येया [2]वराहनियुतायुतक्लृप्तमाला ।
उत्तप्तकाञ्चनरुचिः पुरुषेश्वराख्या
भूशक्तिरादिपुरुषस्य विचिन्तनीया ॥ २३ ॥

सुदर्शनमयसर्वचक्रकूटध्यानम्

कालानलायुतसहस्रसमानरूपं
कूटं सुदर्शनमयं मनसा विचिन्त्यम् ।
तापातुरक्वथदशेषसुरारिमेदो-
निष्यन्दमेदुरितदीप्तिशिखाजटालम् ॥ २४ ॥

सौदर्शनसर्वमन्त्रमूलभूतशक्तिध्यानम्

सूर्येन्दुवह्निनयना तरुणार्कवर्णा
व्याप्य स्थिता जगदशेषमशेषवन्द्या ।

[1] B C omit two lines from here. [2] पराह A; परा वि D.

चक्राणि [1]बाहुनिवहैर्दधती सहस्रं
[2]योनिः सुदर्शनमनोरिति चिन्तनीया ॥ २५ ॥

उक्तेषु यन्त्रेषु द्विजस्यैवाधिकारः

लेशतो गदितमेतदुदारं
रक्षणं सकललोकहिताय ।
भूपतेरनुमतो द्विजवर्यो
भावयेदनिशमेतदतन्द्री[3] ॥ २६ ॥

उक्तयन्त्राणामानुषङ्गिकफलपूर्वकमुक्तिरूपपरमफलसाधनत्वम्

नाद्रवन्ति दुरितानि कदाचि-
द्विद्रवन्ति निखिला ग्रहरोगाः ।
वर्धते वसुमती बहुसस्या
न त्रिवर्गविहतिर्मनुजानाम् ॥ २७ ॥
धर्मार्थकामबहुलाश्चिरजीविनश्च
हीनाश्च पाप्मभिरुदारयशःप्रतापाः ।
आराध्य शास्त्रनिरता विहितक्रियाभि-
रन्ते विशन्ति [4]विमलाः परमं पुमांसम् ॥ २८ ॥

[1] बाहुनिधनैः D.
[2] विष्णुः D.
[3] मेव तु मन्त्री A B C E F.
[4] विमलं A D E F.

सौदर्शनमन्त्रेष्वभिक्रमनाशाद्यभाव:

दिव्यो विधिः कथित एष मुने समस्तो
विप्रैर्नृपैर्धृतसमाधिभिरत्र भाव्यम् ।
अस्मिन् समाधिविरही ललितक्रियोऽपि
[1]यत्नोचितं लभत एव फलं मनुष्यः ॥ २९ ॥

इति श्रीपाञ्चरात्रे तन्त्ररहस्ये अहिर्बुध्न्यसंहितायां यन्त्रदेवता-
ध्याननिरूपणं नाम चतुर्विंशोऽध्यायः

आदितः श्लोकाः १४४४

1 दत्तोचितं A B C.

## सुदर्शनयन्त्रवैभववर्णनं नाम पञ्चविंशोऽध्यायः

ध्यातं सकृद्भवानेककोट्यघौघं हरत्यरम् ।
सुदर्शनस्य तद्दिव्यं भर्गो देवस्य धीमहि ॥

यन्त्रवैभवं प्रदर्शयितुमुक्तार्थानुवादः

नारदः—

भगवन् सम्यगाख्यातं विस्तरेण [1]यथातथम् ।
यत्कारणं यदाधारं यत्प्रमाणमिदं जगत् ॥ १ ॥
तथा धर्मार्थकामानां स्वरूपं [2]साधनं तथा ।
परविद्या तथा विद्या तथा चाध्यात्मसंज्ञिता ॥ २ ॥
मुक्तिश्च परमा प्रोक्ता बन्धस्तत्साधनं[3] तथा ।
वर्णाश्रमविभागश्च तद्धर्माश्च विशेषतः ॥ ३ ॥
सर्वेषामेव वर्णानां राज्ञां रक्षाविधिस्तथा ।
राज्ञां तु रक्षणविधिर्दिव्योऽयं वर्णितस्तथा ॥ ४ ॥
कथं किल कलौ प्राप्ते राज्ञां रक्षाविधिर्भवेत् ।

संक्षेपतः कलिस्वरूपकथनम्

न यक्ष्यन्ति न दास्यन्ति न होष्यन्ति द्विजातयः ॥

[1] यथातथा D. [2] साधनानि च D.
[3] तद्भावनं D.

न सर्वे स्वेषु धर्मेषु करिष्यन्ति मतिं कलौ ।
शक्तयः सर्वमन्त्राणां प्रयास्यन्ति तिरस्कृतिम् ॥
निर्वीर्याश्च भविष्यन्ति राजानः सत्त्ववर्जिताः ।
निर्धना हृतराज्याश्च दस्युभिः परिपीडिताः ॥ ७ ॥
अल्पक्षीरा भविष्यन्ति गावः प्राप्ते कलौ युगे ।
प्रजाः क्षुधार्ताश्च [1]कलाववग्रहनिपीडिताः ॥ ८ ॥
पाषण्डधर्मनिरता भगवन्तं जनार्दनम् ।
निन्दनादीन् करिष्यन्ति तमःप्राया ह्यवेदिनः ॥ ९ ॥

तादृशे कलौ राज्ञां रक्षाविध्युपायप्रश्नः

इत्थं दोषास्पदे काले राज्ञां रक्षाविधिः कथम् ।
संपत्स्यते शक्तिहीनैर्द्विजैः सत्त्वविवर्जितैः ॥ १० ॥
येनोपायेन रक्षा स्यात्तं[2] मे ब्रूहि सुनिश्चितम् ।
सर्वज्ञ त्वदृते वक्तुं कः शक्नोति महेश्वर ॥ ११ ॥

तत्प्रतिवचनारम्भः

अहिर्बुध्न्यः—

साधु साधु यदेतत् त्वं पृष्टवानसि नारद ।
सत्यमेतत् कलौ रक्षाविधिर्मन्त्रैर्न युज्यते ॥ १२ ॥
तथापि भक्त इति ते कथयामि शृणुष्व तम् ।

[1] कलौ पापग्रह B C.  [2] तन्मे A B C.

सर्वेषामेव भूतानां [1]राज्ञां चैव विशेषतः ॥ १३ ॥
रक्षाविधिं परं गुह्यं तन्त्राणां सारमुत्तमम् ।

स्वकृतपितामहशिरश्छेदमहापापप्रशमाय नारायणात्
सुदर्शनयन्त्रप्राप्तिकथनम्

मम नारायणेनोक्तं पुण्ये बदरिकाश्रमे ॥ १४ ॥
पितामहशिरश्छेदमहापातकशान्तये ।
सर्वबाधाप्रशमनं सर्वदुःखनिवारणम् ॥ १५ ॥

तन्महिमसंक्षेपः

सर्वसिद्धिप्रदं सर्वसंपदामेककारणम् ।
पराभिचारशमनं परराज्यप्रदं [2]शुभम् ॥ १६ ॥
[3]कलिदोषापहरणं सर्वशत्रुनिबर्हणम् ।
यस्य संस्मरणेनैव नृणां नश्यन्ति शत्रवः ॥ १७ ॥
दस्यवो नष्टविषया विद्रवन्ति दिशो दश ।
यन्त्रं यस्य गृहे न्यस्तं तस्य सर्वं प्रसिध्यति ॥
यो राजा यन्त्रमेतत्तु सादरं कारयेद् गृहे ।
तस्य भूमण्डलं सर्वं भवेद् वश्यं न संशयः ॥ १९ ॥
सौदर्शनस्य यन्त्रस्य माहात्म्यं वर्णितं मया ।

[1] राज्ञां रक्षा A B C.
[2] शिवम् B C.
[3] कलिदोषहरं शान्तं D.

सुदर्शननारसिंहयन्त्रफलप्रदर्शनम्

सुदर्शनेन युक्तस्य नारसिंहस्य यन्त्रकम् ॥ २० ॥
यः कारयति तस्यान्यो लोको वश्यो भवेदपि ।
एतल्लेखनमात्रेण सर्वं [1]संपद्यते नृणाम् ॥ २१ ॥

विष्णुपञ्जरयन्त्रफलप्रदर्शनम्

विष्णुपञ्जरयन्त्रस्य करणेनैव देवताः ।
सर्वाः प्रसीदन्ति सदा किं पुनर्मनुजादयः[2] ॥ २२ ॥

समुदितयन्त्रत्रयफलस्याशक्यवर्णनत्वम्

एषां त्रयाणां यन्त्राणां समाहारफलं मया ।
वक्तुं न शक्यते सर्वं सर्वज्ञेनापि नारद ॥ २३ ॥

महासुदर्शनयन्त्रफलम्

महासुदर्शनस्येह यन्त्रस्य करणाद् द्विजः ।
त्रैलोक्यं समवाप्नोति किं पुनर्मण्डलं भुवः ॥ २४ ॥
एकत्र कल्पितसुदर्शननारसिंह-
मन्यत्र केवलसुदर्शनमुज्ज्वलाङ्गम् ।
संकल्पितोभयमुखं घटितास्त्रजालं
श्रीविष्णुपञ्जरगतं युतमन्त्रजालम् ॥ २५ ॥

1 संपत्स्यते E F.    2 मनुजा द्विज D.

माहासुदर्शनमपुण्यकृतां जनाना-
मप्राप्यमाश्रितसुखप्रदमेकयन्त्रम् ।
तेजोमयं सकललोकनमस्कृतं यत्
तत् कारयेत् सकललोकजयं यदीच्छेत् ॥ २६ ॥

इति श्रीपाञ्चरात्रे तन्त्ररहस्ये अहिर्बुध्न्यसंहितायां सुदर्शनयन्त्र-
वैभववर्णनं नाम पञ्चविंशोऽध्यायः

आदितः श्लोकाः १४७०

## महासुदर्शनयन्त्रलक्षणं नाम षड्विंशोऽध्यायः

ध्यातं सकृद्भवानेककोट्यघौघं हरत्यरम् ।
सुदर्शनस्य तद्दिव्यं भर्गो देवस्य धीमहि ॥

विस्तरेण महासुदर्शनयन्त्रलक्षणप्रश्नः

**नारदः—**

विस्तरेणास्य यन्त्रस्य संस्थानं लक्षणं तथा ।
श्रोतुमिच्छामि भगवंस्तन्ममाचक्ष्व पृच्छतः ॥ १ ॥

तत्प्रतिवचनप्रतिज्ञा

**अहिर्बुध्न्यः—**

विस्तरेण प्रवक्ष्यामि स्वरूपं लक्षणं तथा ।
अस्य यन्त्रस्य देवर्षे तन्मे कथयतः शृणु ॥ २ ॥

यन्त्रनिर्माणद्रव्याणि

रजतेन सुवर्णेन लोहैर्वा शिलयापि वा ।
यथाधिकारं यन्त्रस्य कुर्यादर्चां तु साधकः ॥ ३ ॥

यन्त्रलेखनसाधनद्रव्याणि

धातुचन्दनकर्पूरकुङ्कुमागुरुजै रसैः ।
सुवर्णसूच्या यदि वा [1]यन्त्रमेतल्लिखेत् पटे ॥ ४ ॥

[1] यन्त्रं तत् कारयेत् पटे D.

यन्त्रमध्ये सौदर्शनपुरुषलेखनम्

चन्द्रमण्डलमध्ये तु तारं कुर्यात् समाहितः ।
तस्य मध्ये [1]लिखेद् देवं रक्तवर्णं सुदर्शनम् ॥ ५ ॥

तत्स्वरूपवर्णनम्

पिङ्गाक्षं पिङ्गकेशाढ्यं रक्ताम्बरधरं विभुम् ।
युक्तं षोडशभिर्हस्तैरष्टाभिर्वा महाद्युतिम् ॥ ६ ॥
पाशाङ्कुशाब्जमुसलधनुःशार्ङ्गगदारिभिः ।
भीषणैरायुधवरैरुपेतं जयिनां वरम् ॥ ७ ॥
तद्विष्णोः परमं रूपं नित्यं तैजसविग्रहम् ।
दंष्ट्रानिष्ठ्यूतसप्तार्चिज्वालापल्लवितानम् ॥ ८ ॥
भूषणैर्भूषितं चित्रैर्भीषणं रोमहर्षणम् ।
स्वतेजसा जगत् सर्वं पूरयन्तं महाबलम् ॥ ९ ॥
निर्भिद्यमानदैतेयशोणिताशनलम्पटम् ।
उद्यत्प्रद्योतनशतप्रख्यं विख्यातपौरुषम् ॥ १० ॥
[2]मनस्तत्त्वेन सततं संश्रितं वेगवत्तया ।
नारायणकराम्भोजसेवारसविशारदम् ॥ ११ ॥
जवेन विष्णुचिन्तायाः परमं मार्गदर्शिनम् ।
स्मृत्यैव स्वानुरक्तानां दृष्टादृष्टार्थसाधनम् ॥ १२ ॥
स्वभक्तप्रत्यनीकानां मारणं सुरपूजितम् ।

[1] न्यसेद्देवम् D. [2] नमस्तत्त्वेन A C.

[1]संस्तूयमानचरितं सिद्धगन्धर्वदानवैः ॥ १३ ॥

तस्य सर्वशरण्यत्वं निर्दोषत्वं कल्याणगुणाकरत्वं च

भक्तारिभञ्जनपरं शरण्यं शरणार्थिनाम् ।
नित्यनिःसीमनिर्दोषकल्याणगुणसागरम् ॥ १४ ॥

तत्पादप्रान्ते साधकनामलेखनम्

एवंभूतं समालिख्य सदानन्दं सुदर्शनम् ।
तत्पादपद्मपर्यन्ते साधकं नाम विन्यसेत् ॥ १५ ॥

ततः पर्यन्ते षट्कोणचक्रलेखनम्

इन्दुबिम्बस्य पर्यन्ते षट्कोणं चक्रमालिखेत् ।
आग्नेयममितप्रख्यममोघं सर्वसाधकम्[2] ॥ १६ ॥

तत्र षडक्षरविन्यासः

प्राच्यादिदिक्षु कोणेषु षड् वर्णान् विन्यसेन्मनोः ।

अङ्गमन्त्रन्यासः

षट्सु कोणान्तरालेषु त्वङ्गमन्त्रान् न्यसेत् क्रमात् ॥

ततश्चतुर्दलपद्मलेखनम्

अस्माद्बहिस्तथा पद्मं चतुर्दलसमन्वितम् ।

तत्र न्यसनीया वर्णाः

सबिन्दुवर्म फट् चास्य दलेष्वेषु क्रमान्न्यसेत् ॥ १८ ॥

[1] संस्तूयमानमनिशम् D.

[2] घातकम् A D.

अन्तरालेष्वन्तःस्थवर्णविन्यासः

**दलान्तरालेष्वन्तःस्थान् विन्यसेत् साधकस्तथा ।**

ततः षोडशकेसराष्टदलपद्मलेखनम्

**बाह्ये तत्राष्टपत्राब्जमन्तः षोडशकेसरम् ॥ १९ ॥**

केसरेषु षोडशस्वरविन्यासः

**केसरेषु क्रमादस्य विलिखेत् षोडश स्वरान् ।**

दलेष्वष्टाक्षरमन्त्रन्यासः

**अष्टाक्षरं महामन्त्रं दलेष्वस्य समालिखेत् ॥ २० ॥**

द्वात्रिंशत्केसरषोडशदलपद्मलेखनम्

**द्वात्रिंशत्केसरं चास्य बहिः षोडशपत्रकम्[1] ।**

केसरेषु कादिसान्तवर्णविन्यासः

**ककारादि सकारान्तं केसरेष्वस्य चालिखेत् ॥ २१ ॥**

दलेषु षोडशार्णमन्त्रवर्णन्यासः

**दलेष्वस्य लिखेन्मन्त्रं षोडशार्णं तु वैष्णवम् ।**

द्वात्रिंशत्केसरदलपद्मलेखनम्

**द्वात्रिंशत्केसरदलं बाह्ये तस्य समालिखेत् ॥ २२ ॥**

केसरेषु वाराहानुष्टुभमन्त्रवर्णन्यासः

**केसरेष्वस्य पद्मस्य प्राच्यादिषु यथाक्रमम् ।**

[1] पत्रकम् B C E F.

मन्त्रमानुष्टुभं [1]सम्यग्वाराहं विलिखेत् परम् ॥ २३ ॥

दलेषु नारसिंहानुष्टुभमन्त्रवर्णन्यासः

द्वात्रिंशति दलेष्वस्य नारसिंहं क्रमाल्लिखेत् ।
आनुष्टुभं महामन्त्रममोघं सर्वसाधकम् ॥ २४ ॥

चतुःषष्टिदलपद्मलेखनम्

तस्य बाह्ये लिखेत् पद्मं चतुःषष्टिदलैर्युतम् ।

तद्दलेषु पातालनारसिंहमन्त्रन्यासः

पातालनारसिंहाख्यं [2]तद्दलेषु न्यसेन्मनुम् ॥ २५ ॥

पुनरष्टदलपद्मलेखनम्

पुनश्च पद्मं विन्यस्य दलैरष्टभिरावृतम् ।

तद्दलेष्वष्टाक्षरनारसिंहमन्त्रन्यासः

अष्टाक्षरं नारसिंहं तद्दलेषु समालिखेत् ॥ २६ ॥

तद्बहिर्माहेन्द्रमण्डलकल्पनम्

तद्बाह्ये मण्डलं कुर्यान्माहेन्द्रं वज्रभूषितम् ।
जाज्वल्यमानं स्वेनैव सर्वालंकारमण्डितम् ॥ २७ ॥

तद्बहिः साधकनाम्ना सह तद्बीजन्यासः

तस्य बाह्ये महादिक्षु प्रागादिषु यथाक्रमम् ।

[1] स्याद्वै वाराहम् A E F; सत्त्वैर्वाराहम् B C.
[2] तद्दलैर्विन्यसेन्मनुम् A B C; तद्दले विन्यसेन्मनुम् E F.

तद्बीजं विन्यसेद्धीमान्निजनाम्ना [1]समन्वितम् ॥ २८ ॥

बहिष्कोणेष्वन्तःस्थवर्णन्यासः

बहिष्कोणेषु चतुर्षु तथान्तःस्थान् प्रकल्पयेत् ।

कोणान्तरालेषु तद्बीजन्यासः

कोणाभ्यन्तरभागेषु तद्बीजं विन्यसेत् पुनः ॥ २९ ॥

तत्परितः स्वराणां प्रातिलोम्येन विन्यासः

परितस्तत् स्वरान् सर्वान् प्रातिलोम्येन चालिखेत् ।

तत्परितः सादिकान्ताक्षरविन्यासः

सकारादि ककारान्तं विन्यसेत् परितस्तथा ॥ ३० ॥

स्वनाम्ना पाशाङ्कुशाभ्यां चावेष्टनम्

विदर्भितं स्वनाम्नैव [2]परितोऽन्त्ययुगं [3]न्यसेत् ।
[4]पाशेनावेष्टयेदेतदङ्कुशेन तथातुरः ॥ ३१ ॥

भूपुरकल्पनम्

पुटितं भूपुरं तस्य बाह्ये कुर्यादतन्द्रितः ।

समन्तात् केशवादिमूर्तिन्यासः

केशवादीन् मूर्तिमतः समन्तादस्य विन्यसेत् ॥ ३२ ॥

[1] समायुतम् D.
[2] परितोऽन्ययुगम् A B D F.
[3] लिखेत् A B C E F.
[4] पाशेन वेष्टयेत् A B C E F.

केशवस्वरूपवर्णनम्

तप्तजाम्बूनदप्रख्यं पुण्डरीकायतेक्षणम् ।
अपारकरुणं पद्मशङ्खचक्रगदाधरम् ॥ ३३ ॥
पीताम्बरधरं देवं वनमालाविभूषितम् ।
हारकेयूरकटककुण्डलैरुपशोभितम् ॥ ३४ ॥
चतुर्बाहुमुदाराङ्गं प्रसन्नवदनं [1]विभुम् ।
प्रागादि विन्यसेद् देवं केशवं क्लेशनाशनम् ॥ ३५ ॥

नारायणस्वरूपवर्णनम्

शङ्खपद्मगदाचक्रधरं नीलाम्बुदच्छविम् ।
सर्वालंकारसंयुक्तं कुर्यान्नारायणं [2]ततः ॥ ३६ ॥

माधवस्वरूपवर्णनम्

पद्मकौमोदकीशङ्खचक्रधारिणमव्ययम् ।
देवमिन्दीवरश्यामं माधवं भावयेत् ततः ॥ ३७ ॥

गोविन्दस्वरूपवर्णनम्

चक्रकौमोदकीशङ्खपद्मायुधविराजितम् ।
इन्दुबिम्बनिभं कुर्याद् गोविन्दममितौजसम् ॥ ३८ ॥

विष्णुस्वरूपवर्णनम्

गदाब्जशङ्खचक्रास्त्रधरं परमभूषितम् ।
विष्णुं विश्वपतिं कुर्यात् पद्मकिञ्जल्कसंनिभम् ॥३९॥

[1] परम् A B C E F. [2] परम् A B C E F.

मधुसूदनस्वरूपवर्णनम्

चक्रशङ्खाम्बुजगदाधारिणं करुणानिधिम् ।
रक्तपद्मदलप्रख्यं भावयेन्मधुसूदनम् ॥ ४० ॥

त्रिविक्रमस्वरूपवर्णनम्

चक्रकौमोदकीपद्मशङ्खसेवितमीश्वरम् ।
उज्ज्वलत्कनकप्रख्यं तं कुर्वीत त्रिविक्रमम् ॥ ४१ ॥

वामनस्वरूपवर्णनम्

शङ्खचक्रगदापद्मधरं परमभूषितम् ।
तरुणादित्यसंकाशं वामनं भावयेत् ततः ॥ ४२ ॥

श्रीधरस्वरूपवर्णनम्

पद्मचक्रगदाशङ्खधरं सद्गुणसागरम् ।
पुण्डरीकनिभं देवं श्रीधरं परिकल्पयेत् ॥ ४३ ॥

हृषीकेशस्वरूपवर्णनम्

गदासुदर्शनयुते शङ्खपद्मे च बिभ्रतम् ।
विद्युत्प्रभं हृषीकेशं कुर्वीत कमलेक्षणम् ॥ ४४ ॥

पद्मनाभस्वरूपवर्णनम्

शङ्खपद्मे गदाचक्रे तथा बिभ्राणमुज्ज्वलम् ।
सहस्रादित्यसंकाशं पद्मनाभं तु कारयेत् ॥ ४५ ॥

दामोदरस्वरूपवर्णनम्

पद्मशङ्खगदाचक्रधरं बन्धूकसंनिभम् ।

भक्त्येकसुलभं देवं दामोदरमथ स्मरेत् ॥ ४६ ॥

नमोऽन्तानां तत्तन्नाम्नामपि लेखनम्

एवं क्रमेण न्यस्यैतानेषां नामानि च न्यसेत् ।
नमोऽन्तान्यमुकं रक्ष रक्षेति च समन्ततः ॥ ४७ ॥

प्रागादिषु प्रादक्षिण्येन बीजाक्षरन्यासः

यं शं रं षं तथा लं सं वं हं चेति द्वयं द्वयम् ।
प्राच्यादिषु महादिक्षु प्रादक्षिण्येन विन्यसेत् ॥ ४८ ॥

ऐशान्यादिष्वप्रादक्षिण्येन बीजाक्षरन्यासः

यं शं रं षं तथा लं सं वं हं चेति युगं युगम् ।
[1]ऐशान्यादिषु कोणेषु विन्यसेदप्रदक्षिणम् ॥ ४९ ॥

पुनः पाशाङ्कुशाभ्यां वेष्टनम्

पाशेन तु समावेष्ट्य [2]अङ्कुशेनापि वेष्टयेत् ।
सर्वमेतत् सबीजेन[3] हृल्लेखमनुना वृतम् ॥ ५० ॥

प्रागादिचतुर्दिक्षु विष्णुविन्यासस्तेषामायुधानि च

प्रागादिषु चतुर्दिक्षु विन्यसेद् विष्णुमव्ययम् ।
चक्रकौमोदकीशार्ङ्गखड्गैर्युक्तं यथाक्रमम् ॥ ५१ ॥
साधारणौ च सर्वेषां शङ्खचक्रौ वरायुधौ ।

[1] ईशान्यादिषु A B C E F. [2] अङ्कुशेन तु A B C E F.
[3] सजीवेन A B C E F.

आग्नेयादिकोणेषु हृषीकेशन्यासः

**आग्नेयादिषु कोणेषु हृषीकेशं ततो न्यसेत् ॥ ५२ ॥**

तेषामायुधविशेषाः

**शङ्खं हलं च मुसलं शूलं चैतेषु धारयेत् ।**

कोणान्तरालेष्वष्टसु जनार्दनविन्यासः

**विकोणेष्वष्टसु तथा जनार्दनमथो न्यसेत् ॥ ५३ ॥**

तेषामायुधविशेषाः

**दण्डं कुन्तं तथा शक्तिं पाशमङ्कुशमेव च ।**
**वज्रं तथैव परशुं तथा शतमुखानलम् ॥ ५४ ॥**
**करेष्वमीषामेतानि विलिखेत्तु यथाक्रमम् ।**

तत्तत्पार्श्वेषु तत्तत्परिवारलेखनम्

**प्रत्येकं परिवारांस्तु तेषां पार्श्वेषु विन्यसेत् ॥ ५५ ॥**

ततो भूमौ भूम्या सह पुरुषोत्तमस्मरणम्

**वराहरूपिणं देवं शङ्खचक्रगदाधरम्[1] ।**
**भूमौ च सहितं भूम्या संस्मरेत् पुरुषोत्तमम् ॥ ५६ ॥**

अम्बरे नरसिंहस्मरणम्

**अम्बरे नारसिंहं तु चिन्तयेदमितौजसम् ।**
**भीषणं घटितानेकभूषणं दारितासुरम् ॥ ५७ ॥**

1 चक्रधरं परम् A B C E F.

प्रागादिषु चक्रगदाशार्ङ्गखड्गस्मरणम्

प्राच्यां दिशि महाज्वालागतं चक्रं स्मरेद्बुधः ।
दक्षिणस्यां दिशि तथा स्मरेज्ज्वालागतां गदाम् ॥
प्रतीच्यां शार्ङ्गमत्युग्रज्वालामध्यगतं स्मरेत् ।
उत्तरस्यां दिशि तथा स्मरेत् खड्गं सुदारुणम् ॥ ५९ ॥

अस्य यन्त्रस्यापराङ्गकल्पनाय मध्ये चतुर्विंशत्यरचक्रकल्पनम्

अपराङ्गेऽथ यन्त्रस्य मध्ये चक्राब्जसंस्थितम् ।
चतुर्विंशत्यरं चक्रं सुनेमि रुचिराकृति ॥ ६० ॥

तन्मध्ये द्वादशदलपद्मलेखनम्

मध्येचक्रं न्यसेत् पद्मं युक्तं द्वादशभिर्दलैः ।

तत्कर्णिकायामाग्नेयमण्डलन्यासः

चक्राब्जकर्णिकास्थाने न्यसेदाग्नेयमण्डलम् ॥ ६१ ॥

तन्मध्ये योगनृसिंहलेखनम्

तन्मध्ये योगपट्टेन पिनद्धाङ्गं सनातनम् ।
नारसिंहं चतुर्बाहुं चतुश्चक्रधरं परम् ॥ ६२ ॥
समासीनमशोकस्य मूले कालानलद्युतिम् ।
सर्वाभरणसंयुक्तं सर्वभक्तार्तिहारिणम् ॥ ६३ ॥
अपारसंख्यकल्याणगुणपूर्णमहार्णवम् ।
भक्तानुकम्पिनं नित्यं सर्वलोकैकनायकम् ॥ ६४ ॥

तत्पादपर्यन्ते द्वयोस्तद्भृत्ययोर्विन्यासः

एवं विन्यस्य तत्पादपर्यन्ते [1]विन्यसेदुभौ ।
तदाज्ञाकारिणौ भीमौ नीलनीरदविग्रहौ ॥ ६५ ॥
उदग्रकायौ भीमाक्षौ भीमायुधधरौ वरौ ।
दंष्ट्राकरालवदनौ [2]विन्यसेद् वृत्तलोचनौ ॥ ६६ ॥

चक्रस्य प्रागादिष्वष्टशक्तिध्यानम्

चिन्तयेदथ चक्रस्य समन्तादष्ट योषितः ।
ऊर्ध्वमाबद्धकेशाढ्यास्तच्छक्तीः प्राप्तयौवनाः ॥ ६७ ॥
सर्वालंकारसंयुक्ता द्विभुजा माल्यधारिणीः ।
प्राच्यां दिशि जयां देवीं [3]पीतवर्णां विचिन्तयेत् ॥
आग्नेय्यां मोहिनीं देवीं श्यामलामायतेक्षणाम् ।
याम्यामनुस्मरेद् देवीं विजयां कृष्णरूपिणीम् ॥ ६९ ॥
रक्तवर्णां तथा देवीं नैर्ऋत्यां ह्लादिनीं तथा ।
अजितां पीतवर्णां तु प्रतीच्यां संस्मरेत् पराम् ॥
वायव्यां दिशि मायां तु कृष्णवर्णां सनातनीम् ।
उदीच्यां रक्तवर्णां तामाशायामपराजिताम् ॥ ७१ ॥
ऐशान्यां संस्मरेत् सिद्धिं धूम्रवर्णामतः परम् ।

यथोक्तलक्षणयन्त्रमहिमा

एवमेतन्महायन्त्रं महापातकनाशनम् ॥ ७२ ॥

[1] चिन्तयेदुभौ A B C E F.
[2] विन्यस्यौ D.
[3] सितवर्णाम् A D E F.

आयुरारोग्यधनदं पुत्रमित्रकलत्रदम् ।
सर्वविघ्नोपशमनं सर्वदुष्टनिवारणम् ॥ ७३ ॥
यो यदर्थी लिखेद्यन्त्रं तत् तदस्य प्रयच्छति ।
मणिविद्रुममुक्ताढ्यं कुर्याद् यन्त्रं हिरण्मयम् ॥ ७४ ॥
राजा चेद्राज्यमाप्नोति निष्कण्टकमनामयम् ।

भूर्जपत्रलिखितस्यापि यन्त्रस्य सर्वफलसाधनता

भूर्जपत्रे लिखित्वैतत् कुङ्कुमैश्चन्दनेन तु ॥ ७५ ॥
यो मर्त्यः शिरसा धत्ते तस्य स्यात् सर्वमीप्सितम् ।
पिशाचोरगरक्षांसि क्षिप्रं नश्यन्ति तस्य वै ॥ ७६ ॥

एतद्यन्त्रशिलाप्रतिष्ठाया मुक्तिसाधनत्वम्

शिलाप्रतिष्ठां यः कुर्यादेतस्य जगतीतले ।
सर्वान् कामानिहावाप्य विष्णुसायुज्यमाप्नुयात् ॥

लोहादिभिर्यन्त्रप्रतिमानिर्माणफलम्

लोहैर्वा रजतेनाथ यः कुर्यात् प्रतिमां बुधः ।
त्रिवर्गफलमाप्नोति निर्वाणमचिरात् पुनः ॥ ७८ ॥

कर्षणादिप्रतिष्ठान्तायतननिर्माणफलम्

कर्षणादि प्रतिष्ठान्तं कुर्यादायतनं च यः ।
आप्नुवन्ति च तद्वंश्याः पुण्यलोकाननुत्तमान् ॥ ७९ ॥

भयादिषु यन्त्रस्मरणे फलम्

भयागमे च संग्रामे वादे वा यः स्मरेदिदम् ।
विजयस्तस्य हस्तस्थो नात्र कार्या विचारणा ॥ ८० ॥

त्रिसंध्यं यन्त्रार्चनं मुक्तिसाधनम्

अर्चयेद्यस्त्रिसंध्यं वै यन्त्रमेतदनुत्तमम् ।
तापत्रयविनिर्मुक्तो विष्णुलोके महीयते ॥ ८१ ॥

रक्षाविधौ राज्ञां वैशेषिकविध्यारम्भः

राज्ञां रक्षाविधाने तु विशेषं शृणु नारद ।
राज्यार्थी हृतराज्यो वा परिभूतोऽथवा नृपैः ॥ ८२ ॥

तत्र प्रथममाचार्यपूजाविधिः

सौदर्शनस्य यन्त्रस्य प्रदातारं गुरुं परम् ।
सर्वेभ्यो ह्यधिकं मत्वा तमभ्यर्च्य महाधनैः ॥ ८३ ॥

ततो भगवदाराधनविधिः

ततो नारायणं देवं पुण्डरीकायतेक्षणम् ।
श्यामलं पीतवसनं सर्वाभरणभूषितम् ॥ ८४ ॥
आराधयेच्चतुर्बाहुमाचार्योक्तविधानतः ।

ततो यन्त्रनिर्माणम्

तप्तजाम्बूनदमयं मणिविद्रुमचित्रितम् ॥ ८५ ॥
सर्वालंकारसंयुक्तं कारयेद्यन्त्रमुत्तमम् ।

यन्त्रनिर्माणस्य राज्यप्राप्तिहेतुत्वम्

एतत्करणमात्रेण राज्यमाप्नोत्यनामयम् ॥ ८६ ॥

प्रतिष्ठापूर्वकार्चनस्य सप्तद्वीपान्तभूमिप्राप्तिहेतुत्वम्

प्रतिष्ठाप्यार्चयेदेतत् सादरं सर्वसिद्धिदम् ।
ततो भूमिमवाप्नोति सप्तद्वीपां सपत्तनाम् ॥ ८७ ॥

अन्ततस्त्रैलोक्यपालयितृत्वसिद्धिः

वश्या भवन्ति सततं सिद्धगन्धर्वदानवाः ।
त्रैलोक्यराज्यमखिलं पालयत्यवनीतले ॥ ८८ ॥

परकृताभिचारपरावर्तनसिद्धिः

अभिचाराः परकृताश्चैनमप्राप्य [1]भीषिताः ।
प्रविशन्ति प्रयोक्तारमापगेवाचलाहृता ॥ ८९ ॥

अवग्रहादिपरिहारसिद्धिः

अवग्रहाश्च नश्यन्ति शत्रवो विद्रवन्ति च ।
अपमृत्युमृगव्यालचोररोगादिभिर्भयम् ॥ ९० ॥
न तस्य राज्ये भवति विद्यते तत्कुले बलम् ।

सर्वेषां स्वधर्मप्रवृत्तिसिद्धिः

सर्वे स्वेष्वेव धर्मेषु प्रवर्तन्ते सदा मुने ॥ ९१ ॥

[1] दीपिताः D.

दुर्वाससा शप्तस्येन्द्रस्य यन्त्रेणानेन पुनः स्वपदप्राप्तिः

**पुरा दुर्वाससः शापाद्धृतराज्ये शचीपतौ ।**
**एतत्प्रसादादखिलं पुनः प्राप त्रिविष्टपम् ॥ ९२ ॥**

चतुर्मुखस्य भगवत्सकाशाद्यन्त्रप्राप्तिः

**एतत् पुरा महायन्त्रं ब्रह्मणे प्रोक्तवान् हरिः ।**

चतुर्मुखेन विश्वकर्मणा यन्त्रविमानयोर्निर्मापणम्

**ब्रह्मा च विश्वकर्माणमाहूयैतदकारयत् ॥ ९३ ॥**
**विमानं च तदारभ्य देवगन्धर्वदानवाः ।**

तदा प्रभृति यन्त्रस्यैव रक्षासाधनत्वम्

**अनेन रक्षणविधिं चक्रुः पूर्वं नृपास्तथा ।**
**तस्माद्राज्ञां च सर्वेषामेष रक्षाविधिः परः ॥ ९४ ॥**

अध्यायार्थनिगमनम्

**अभिनवदिननाथप्रोज्ज्वलद्बिम्बतुल्यं**
**कमलभवमुखाद्यैः संश्रितं देवबृन्दैः ।**
**परिगतमपि भूतैः पञ्चभिः सेव्यमानं**
**प्रकृतिमहदहंकारैः स्मरेद्यन्त्रराजम् ॥ ९५ ॥**

इति श्रीपाञ्चरात्रे तन्त्ररहस्ये अहिर्बुध्न्यसंहितायां महासुदर्शन-
यन्त्रलक्षणं नाम षड्विंशोऽध्यायः

आदितः श्लोकाः १५६५

## धारकयन्त्रनिरूपणं नाम सप्तविंशोऽध्यायः

ध्यातं सकृद्भवानेककोट्यघौघं हरत्यरम् ।
सुदर्शनस्य तद्दिव्यं भर्गो देवस्य धीमहि ॥

वृत्तानुवादपूर्वकं धारकयन्त्रविषयकः प्रश्नः

**नारदः—**

कथितो यन्त्रराजस्य देवदेवस्य विस्तरः ।
स्वरूपं साधनं चास्य प्रकारश्च फलं तथा ॥ १ ॥
अथेदं श्रोतुमिच्छामि भगवन् परमेश्वर ।
एतदत्यद्भुतं दिव्यं ध्रियते [1]केन भूषणम् ॥ २ ॥
न चास्य [2]धारणे शक्तिं कस्यचित् कलयाम्यहम् ।
अतिशक्तितयास्येमं संशयं छेत्तुमर्हसि ॥ ३ ॥

तत्प्रतिवचनारम्भः

**अहिर्बुध्न्यः—**

सत्यं न केनचिद्धर्तुं पार्यते तन्महाद्युति ।
ऋते यन्त्रान्तरादस्माद्[3] देवर्षे शक्तिशालिनः ॥ ४ ॥
शृणु तस्य मुनिश्रेष्ठ स्वरूपं [4]वीर्यमद्य वै ।

1 येन A B C E F.
2 भरणे D E F.
3 तस्मात् B C E F.
4 रूपमद्य वै D.

प्रथमं माहेन्द्रमण्डलनिर्माणम्

प्रथमं मण्डलं कृत्वा माहेन्द्रं [1]वसुधात्मकम् ॥ ५ ॥
सर्वालंकारसंयुक्तं [2]यन्त्रलाञ्छनलाञ्छितम् ।

तत्कोणेषु भूबीजाक्षरन्यासः

भौममेतस्य कोणेषु विन्यसेद् बीजमुत्तमम् ॥ ६ ॥
शेषाद्यैरष्टभिर्नागैर्धार्यमाणं[3] समन्ततः ।

मण्डलप्राग्भागे शेषगुलिकयोर्न्यासः

प्राग्भागे मण्डलस्यास्य भीषणौ भीमलोचनौ ॥ ७ ॥
विलिखेच्छेषगुलिकौ लोकयन्तौ परस्परम् ।

दक्षिणभागे वासुकिशङ्खयोः

वासुकिं शङ्खपालं च वीक्षमाणौ परस्परम् ॥ ८ ॥
दक्षिणस्यां दिशि तथा विन्यसेदस्य साधकः ।

पश्चिमे तक्षकमहाम्बुजयोः

पश्चिमायां [4]लिखेदेवं तौ तक्षकमहाम्बुजौ ॥ ९ ॥

उत्तरभागे कार्कोटकाम्बुजयोः

कार्कोटकं चाम्बुजं च लिखेदुत्तरतो मुने ।
तस्य मध्ये महाज्वालामालावर्तविराजितम् ॥ १० ॥

[1] वा सुधात्मकम् D.
[2] वज्रलाञ्छन A B C.
[3] वार्यमाणम् D.
[4] लिखेन्नाभौ तक्षकं च महाम्बुजम् D.

मध्ये वह्निमण्डलकल्पना

कोणषट्कयुतं वह्निमण्डलं बीजसंयुतम् ।

तन्मध्ये वायुमण्डलविन्यासः

समालिख्य च तन्मध्ये वायव्यं मण्डलं लिखेत् ॥ ११ ॥
वर्तुलं बिन्दुसंयुक्तं तद्बीजेन समन्वितम् ।

तन्मध्ये दशारचक्रलेखनम्

तन्मध्ये चक्रमतुलं प्रोज्ज्वलन्नेमिमण्डलम् ॥ १२ ॥
अरैर्दशभिराकीर्णं विन्यसेदरिमर्दनम् ।

अरेषु सुदर्शननारसिंहमन्त्रन्यासः

मन्त्रं सौदर्शनस्यास्य नारसिंहस्य विन्यसेत् ॥ १३ ॥
द्वाभ्यां द्वाभ्यां तु वर्णाभ्यामरेषु नवसु क्रमात् ।
दशमे हनशब्दं तु विन्यसेदरकेऽस्य वै ॥ १४ ॥

चक्रमध्ये अष्टदलपद्मलेखनम्

चक्रमध्ये न्यसेत् पद्मं दलैरष्टभिरन्वितम् ।
कर्णिकाघटितं रम्यं केसरैरुपशोभितम् ॥ १५ ॥

कर्णिकायां प्रणवन्यासः

तत्कर्णिकायां विलिखेत् तारं संसारतारकम् ।

तत्रैवाभीष्टार्थसाध्यनाम्नोर्विलेखनम्

अभीष्टमर्थं साध्यस्य नामधेयमतः परम् ॥ १६ ॥

एवंभूतेन धारकयन्त्रेण सकलार्थसिद्धिः

तदेतत् परमं दिव्यं मङ्गलानां च मङ्गलम् ।
पवित्राणां पवित्रं च [1]चोरपीडानिवारणम् ॥ १७ ॥
सर्वार्थसाधकं घोरं [2]विश्ववन्द्यमनुत्तमम् ।

यन्त्रेणानेनेन्द्रस्य शत्रुजयप्राप्तिः

पुरा देवेषु दैतेयैरभिभूतेषु वासवः ॥ १८ ॥
[3]बृहस्पतिं समाहूय प्रोवाचेदं वचस्तदा ।
बाधन्ते नितरामस्मानिमे दैतेयदानवाः ॥ १९ ॥
केनोपायेन भगवन् विजेष्यामो महासुरान् ।
बलहानिः कथं वैषां भविता भगवन् वद ॥ २० ॥
एवं मघवता प्रोक्तः प्रोवाचेदं बृहस्पतिः ।
[4]सौदर्शननृसिंहस्य यन्त्रस्य करणादिह ॥ २१ ॥
नश्यन्ति शत्रवः सर्वे सुराणां बलसूदन ।
इत्युक्त्वा स्थापयामास यन्त्रं मघवतः पुरे ॥ २२ ॥
मणिविद्रुममुक्ताढ्यं सौवर्णममितप्रभम् ।
ततः प्रभृति दैतेया नष्टश्रीका हतत्विषः ॥ २३ ॥
पराजिता विद्रवन्ति दिशो नष्टनिकेतनाः ।
तदेतदतिवीर्यं तु यन्त्रं सुरसुपूजितम् ॥ २४ ॥

[1] चोरव्याधि D.
[2] विश्ववश्यम् D.
[3] बृहस्पतिमुपाहूय D.
[4] सौदर्शनेर्नृसिंहस्य A B C.

अस्यैव यन्त्रस्य पूर्वोक्तमहासुदर्शनयन्त्रधारकत्वम्

तदेतेनैव यन्त्रेण यन्त्रं सौदर्शनं परम् ।
धार्यते तत् सुरमुने विचित्रं विष्टरात्मना ॥ २५ ॥
यन्त्रमेतन्मयाख्यातमेवं माहासुदर्शनम् ।
धृतं यन्त्रेण वीर्यात्तु सुदर्शननृसिंहयोः ॥ २६ ॥

राजन्वद्देशस्यैव यथोक्तयन्त्रभरणक्षमत्वम्

एतस्य तु विशिष्टस्य भरणे सैव भूः क्षमा ।
यस्याः पालयिता राजा धार्मिको दृढविक्रमः ॥ २७ ॥
देवद्विजगुरुप्राज्ञपूजकः परमास्तिकः ।

राज्ञो नित्यमेतदभ्यर्चनविधिः

एतदभ्यर्चयेद्राजा चक्राकारमतन्द्रितः ॥ २८ ॥
पुरुषाकारमपि वा तथैवोभयतोमुखम् ।

एतन्मन्त्रप्रदातुर्विशेषतः पूज्यत्वम्

[1]एतन्मन्त्रप्रदातारं विशिष्टं पूजयेद् बुधः ॥ २९ ॥

एतन्मन्त्रविधिना कर्षणादिप्रतिष्ठान्तकर्मविधिः

कर्षणादीनि कर्माणि प्रतिष्ठान्तान्यमुष्य तु ।
एतन्मन्त्रोक्तमार्गेण कारयेन्नृपतिः स्वयम् ॥ ३० ॥

[1] एवं मन्त्रप्रदातैव D.

तन्त्रस्यास्य सात्त्वतादिभिरेकतन्त्रत्वम्

सात्त्वतादिषु तन्त्रेषु विहितेनैव चाध्वना ।
सुदर्शनस्य मन्त्रस्य नारसिंहस्य वा मुने ॥ ३१ ॥
कल्पप्रयुक्ता विधयः सर्वे चैतस्य संनिधौ ।
भवन्ति सकलाश्चैतत्प्रभावेण प्रयोजिताः ॥ ३२ ॥
तस्माद्यथोक्तमार्गेण प्रतिष्ठाप्यैतदर्चयेत् ।

राज्ञामेतदर्चनेन राज्यादिलाभः

राजा राज्यं [1]जयं भूतिमायुरारोग्यमाप्नुयात् ॥ ३३ ॥

नित्यमर्चयतः फलविशेषः

नित्यमर्चयतो राज्ञः सप्तद्वीपवती मही ।
[2]समुद्रवसना चैषा विश्वा वश्या भविष्यति ॥ ३४ ॥

होमार्थं प्रासादकुण्डयोर्निर्माणम्

[3]प्रासादं लक्षणोपेतं विधाय परमासनम् ।
तत्रैव कारयेत् कुण्डं मन्त्रस्यास्य यथाविधि ॥ ३५ ॥

साधकेन तत्र होमादिनिर्वर्तनम्

भूपतेर्यानि कर्माणि [4]साधयंस्तानि साधकः ।
मन्त्रेणानेन जुहुयादस्मिन् कुण्डे समाहितः ॥ ३६ ॥

[1] प्रियं A B C E F. [2] ससमुद्रवना A B C E F.
[3] प्रसाद D; प्रसादं ल E F. [4] साधयंस्तत्र A B C; साधयंस्तस्य E F.

वैकल्पिकप्रदेशान्तरविधिः

अनेनैव तु मन्त्रेण राज्ञो रक्षाविधिर्यदि ।
विष्णोरायतने रम्ये [1]मण्डपे मण्डितेऽथवा ॥ ३७ ॥
कृत्वैतत् कुण्डमत्रैव राजाभ्यर्च्य महाधनैः ।
[2]एतन्मन्त्रप्रदातारं स्वकर्मण्येव कारयेत् ॥ ३८ ॥

पुनर्यन्त्रार्चनफलविशेषकथनम्

अनेन [3]कृतकृत्यस्तु राजा राज्यमवाप्नुयात् ।
नीरोगो निःसपत्नश्च दीर्घायुश्च भविष्यति ॥ ३९ ॥
नागैरनेकसाहस्रैरसंख्येयैश्च वाजिभिः ।
स्यन्दनैर्नरवर्यैश्च पूर्णा तस्य पुरी भवेत् ॥ ४० ॥
[4]यश्चैनमर्चयेद्राजा यन्त्रराजमनुत्तमम् ।
सर्वमन्त्रविशिष्टत्वादर्चितास्तेन[5] देवताः ॥ ४१ ॥
यदर्थं योऽर्चयेदेनमात्मार्थे यतते परम् ।
सर्वेषामेव भूतानां राज्ञश्च कुरुते हितम् ॥ ४२ ॥

अस्मिन् मन्त्रे यन्त्रे च राज्ञामेवाधिकारः

अयं मन्त्रश्च यन्त्रं च राज्ञामेव विधीयते ।
सर्वसाधारणार्थानि मन्त्रजातानि नारद ॥ ४३ ॥

1 मण्डले D.
2 एवं तत्र प्रदातारं स्वकर्मानेन कारयेत् D.
3 कृतरक्षस्तु A B C E F.
4 त्रिसंध्यमर्चयेद्भक्त्या A B C E F.
5 स्तस्य A B C E F.

संकल्पयेत् तृतीयांशं [1]तीर्थपीठमतःपरम् ॥ ५ ॥
गङ्गां तत्र स्मरेद्विष्णोर्वामपादविनिःसृताम् ।
अर्घ्यमस्यै निवेद्याथ ततो हृत्वा जलाञ्जलिम् ॥ ६ ॥
स्वमूर्ध्नि सिञ्चेत् त्रिस्तावत् सप्तकृत्वोऽभिमन्त्रितम् ।
निमग्नस्तत्र देवस्य पादाब्जन्यस्तमस्तकः ॥ ७ ॥
यथाशक्ति [2]जपेन्मन्त्रं तस्य ध्यानपरायणः ।
तत उत्तीर्य चाचम्य धृत्वा वस्त्रोत्तरीयके ॥ ८ ॥
धृतोर्ध्वपुण्ड्रः स्वाचान्तो देवादीनच्युतात्मकान् ।
ध्यात्वा संतर्पयेदन्यदाह्निकं विधिवच्चरेत् ॥ ९ ॥
यागभूमिमथागम्य क्षालिताङ्घ्रिकरो वशी ।

आराधनोपक्रमः

आचम्य वाग्यतो भूत्वा प्रारभेत समर्चनम् ॥ १० ॥
चतुर्द्वारयुतं रम्यं गत्वा [3]शरणमात्मवान् ।
द्वाःस्थानशेषानभ्यर्च्य ततो मण्डपमाश्रयेत् ॥ ११ ॥

मण्डपवर्णनम्

[4]तुङ्गं मङ्गलसंयुक्तं मणिकुट्टिमभूषितम्[5] ।
सौवर्णैर्बहुभिः स्तम्भैर्मणिविद्रुमभूषितैः ॥ १२ ॥
उपेतं दीपिकाजालैर्जातरूपमयैर्वृतम् ।

[1] तीर्थं D. [2] जपन्मन्त्रं D. [3] वरणम् D.
[4] तुङ्गमङ्गल A; तुङ्गं मण्डल D. [5] संयुतम् D.

विचित्राभिः पताकाभिस्तोरणैरुपशोभितम् ॥ १३ ॥
मणिकिङ्किणिजालैश्च वितानैः क्षौमकल्पितैः ।
विराजमानं सर्वत्र मणिपीठविराजितम्[1] ॥ १४ ॥

तत्र वेदिकानिर्माणम्

तस्य मण्डपरत्नस्य मध्ये परमभास्वराम् ।
पद्मरागमयैः स्तम्भैश्चतुर्भिरुपशोभिताम् ॥ १५ ॥
मुक्तामयवितानेन युक्तां रत्नचतुष्किकाम् ।
वैडूर्यघटितोत्तुङ्गवेदिकां दीपिकायुताम् ॥ १६ ॥
एवं कर्तुमशक्तश्चेद्देवं [2]ध्यायीत पूजकः ।

तत्र सपरिवारभगवद्ध्यानम्

एवं चतुष्किकामध्ये चक्राब्जमयविष्टरे ॥ १७ ॥
[3]आधारशक्तिकमठानन्तधर्मादिधारिते ।
पद्मे सोमरविज्योतिःसत्त्वादिपरिवारिते ॥ १८ ॥
[4]एवमुक्तप्रकारेण परिवारैर्निषेवितम् ।
वेदैर्मन्त्रैस्तथा शस्त्रैरस्त्रैः शक्तिभिरावृतम् ॥ १९ ॥
[5]ध्यायेत् तदासने देवं समासीनः समासने ।

भगवत्प्रार्थना

अर्चयामि त्वदीयोऽहं त्वद्दत्तैरौपचारिकैः ॥ २० ॥

1 विमिश्रितम् D.
2 ध्यायी स D.
3 D omits two lines from here.
4 देवमुक्तप्रकारैश्च D.
5 ध्यायेत् तदन्तिके शुद्धे D.

सांस्पर्शिकैरिति ब्रूयाद् [1]देवमाभ्यवहारिकैः ।

भूतशुद्धिक्रमः

संहरेद् देहतत्त्वानि प्रतिसंचरवर्त्मना ॥ २१ ॥
ततः स्थूलमिदं देहं शोषयित्वाथ संदहेत् ।
प्राणायामेन चाद्येन मन्त्रं [2]नाभ्यां तु विन्यसेत् ॥२२॥
[3]तदुद्भूतेन नादेन सुषुम्नामध्यवर्तिना ।
वायुमण्डलमभ्येत्य तदुत्थेनैव वायुना ॥ २३ ॥
संशोषयेदिमं देहं स्थूलं सुरमुने ततः ।
प्राणायामद्वितीयेन हृदये विन्यसेन्मनुम् ॥ २४ ॥
मन्त्रोत्थेनाग्निना देहं दहेन्मण्डलवर्तिना ।
तृतीयेन स्वमात्मानं प्राणायामेन देशिकः ॥ २५ ॥
अधो [4]निवेशयन् विष्णोर्वामपादाम्बुजस्य वै ।
स्वं तदङ्गुष्ठनिष्ठ्यूतपीयूषाप्लावितं स्मरेत् ॥ २६ ॥
पञ्चौपनिषदैर्मन्त्रैस्ततः संजातविग्रहः ।
न्यस्ताङ्गो मन्त्रविन्मन्त्रैश्चिन्तयित्वा सुदर्शनम् ॥
[5]आवाह्य ब्रह्मरन्ध्रेण हृत्पद्मे सूर्यमण्डलात् ।
प्रारभेत ततः पूजां करन्यासं विधाय वै ॥ २८ ॥
हृद्यागं प्रथमं कुर्यान्नियतेन्द्रियमानसः ।

[1] एवम् B C; एनम् E F.
[2] नासां तु A.
[3] तदद्भुतेन वातेन D.
[4] निवेशयेत् A B C E F.
[5] D omits this line.

पात्रादिस्थापनम्

आत्मनो दक्षिणे पार्श्वे वासितैः पावनैर्जलैः ॥
पूरितं स्थापयेत् पात्रं मूलमन्त्रेण [1]मन्त्रितम् ।
वामपार्श्वे तथा सर्वं विन्यसेत् साधनान्तरम् ॥ ३० ॥
ततो [2]विस्तीर्य पुरतः शाटिकामतिनिर्मलाम् ।
[3]तस्यामाग्नेयदिग्भागे विन्यसेदर्घ्यपात्रकम् ॥ ३१ ॥
[4]पाद्यपात्रमथो न्यस्येत् कोणे दक्षिणपश्चिमे ।
पात्रमाचमनीयस्य विन्यसेत् पश्चिमोत्तरे ॥ ३२ ॥
स्नानीयपात्रं दिग्भागे विन्यसेच्छांकरे ततः ।

अर्घ्यादिषु प्रक्षेप्यद्रव्याणि

सिद्धार्थमक्षतं चैव कुशाग्रं तिलमेव च ॥ ३३ ॥
यवं गन्धं फलं [5]पुष्पमष्टाङ्गं चार्घ्यमुच्यते
दूर्वा च विष्णुपर्णी च श्यामाकं पद्ममेव च ॥ ३४ ॥
पाद्यद्रव्याणि चत्वारि सोदकानि प्रकल्पयेत् ।
लवङ्गजातीतक्कोलद्रव्याण्याचमनीयके ॥ ३५ ॥
सिद्धार्थकादि स्नानीये पूर्ववत् कल्पयेद् बुधः ।

1 मन्त्रवित् A B C E F.
2 विस्तीर्य देवस्य शाटिकां पुरतोऽमलाम् A B C E F.
3 तस्मिन्नाग्नेयदिग्भागे विन्यसेत् पाद्यपात्रकम् A B C E F.
4 अर्घ्यपात्रमथो A B C E F.
5 पुष्पमर्घ्यमष्टाङ्गमुच्यते A B C E F.

तत्र मन्त्रासनं प्रथमम्

[1]अर्घ्यं संकल्पयामीति स्पृशेज्जप्त्वार्घ्यमादितः ॥
पाद्यपात्रादिकेष्वेवं ब्रूयात् सुरमुने क्रमात् ।
गन्धतोयेन संपूर्य पात्राण्येतानि सर्वशः ॥ ३७ ॥
अर्घ्यात् किंचित् समुद्धृत्य जलं पात्रान्तरेण तु ।
देवस्य दक्षिणे पाणौ मूलमन्त्रेण विन्यसेत् ॥ ३८ ॥
पुष्पं दत्त्वाथ पाद्येन पादौ देवस्य सेचयेत् ।
वस्त्रेण मार्जयित्वाथ दद्यादाचमनीयकम् ॥ ३९ ॥
अर्घ्यादिदत्तशिष्टानि[2] क्षिपेत् पात्रान्तरे तदा ।
चन्दनं माल्यदानं च धूपं दीपं दिशेत् ततः ॥ ४० ॥
पुनराचमनीयं च मुखवासमतः परम् ।
ताम्बूलं च निवेद्याथ प्रणम्यात्मनिवेदनम् ॥ ४१ ॥

स्नानासनं द्वितीयम्

विधाय स्नानपीठं तु गन्धपुष्पादिनार्चयेत् ।
विज्ञाप्य [3]पादुके दत्त्वा देवे [4]स्नानासनं गते ॥ ४२ ॥
वस्त्रभूषणमाल्यानि व्यपनीय ततः परम् ।
स्नानार्थं शाटिकां दद्यात् पाद्यमाचमनीयकम् ॥ ४३ ॥
पादपीठप्रदानं च दन्तकाष्ठं दिशेत् ततः ।

[1] ओमर्घ्यं कल्पयामीति जपेत् स्पृष्ट्वार्घ्यमादितः A B C E F.
[2] भक्तिशिष्टानि D. [3] पादुकां E F. [4] स्नानासने D.

जिह्वानिर्लेखनं चैव [1]मुखशोधमथो दिशेत् ॥ ४४ ॥
[2]पुनराचमनीयं च तथादर्शोपदर्शनम् ।
पुनस्ताम्बूलदानं च तैलाभ्यङ्गमतः परम् ॥ ४५ ॥
उद्वर्तनविधानं च दानमामलकस्य च ।
तोयदानं ततः कुर्यात् कङ्कतप्लोतमेव च ॥ ४६ ॥
[3]ततो विदद्याद् देवस्य देहशोधनशाटिकाम् ।
हरिद्रालेपनं कुर्यात् प्रक्षालनमतः परम् ॥ ४७ ॥
वस्त्रोत्तरीयके दद्यादुपवीतं तथैव च ।
पाद्याचमनके कुर्याद् विचित्रं चन्दनं तथा ॥ ४८ ॥
गन्धं पुष्पं तथा धूपं दीपमाचमनं तथा ।
नृत्तवादित्रगीतादिसर्वमङ्गलसंयुतम् ॥ ४९ ॥
अभिषेकं ततः कुर्यान्नीराजनविधिं ततः ।
प्लोतवस्त्रोत्तरीये च उपवीतमतः परम् ॥ ५० ॥
तत आचमनीयं च दत्त्वा देवाय देशिकः ।

तृतीयमलंकारासनम्

अलंकारासनं पश्चादभ्यर्च्य प्रोक्षणादिना ॥ ५१ ॥
विज्ञाप्य पादुके दत्त्वा देवे विष्टरमाश्रिते ।
अर्घ्यादीन्यथ पात्राणि पूर्ववत् कल्पयेत् ततः ॥ ५२ ॥
अर्घ्यं पाद्यं ततो दद्यात् तत आचमनीयकम् ।

1 मुखशोधनमादिशेत् B C. 2 पुनराचमनं चैव A B C E F.
3 A B C E F omit forty-nine lines from here.

गन्धवच्चन्दनाद्यैश्च द्रव्यैश्चार्घ्यादिकं चरेत् ॥ ५३ ॥
ततश्चित्राणि वासांसि प्रयच्छेद् भूषणानि च ।
यज्ञोपवीतदानं च तत आचमनीयकम् ॥ ५४ ॥
गन्धपुष्पप्रदानं चाप्यादर्शस्य प्रदर्शनम् ।
धूपदीपौ तथा दद्यात् पुनराचमनीयकम् ॥ ५५ ॥
ततः स्तोत्रं जपेच्छत्रचामराणां प्रदर्शनम् ।
दर्शनं वाहनानां च ततः शङ्खरवं तथा ॥ ५६ ॥
वीणाकाहलभेर्यादिनिनादश्रावणं तथा ।
नृत्तवादित्रगीताद्यैरर्चयेन्मन्त्रतस्ततः ॥ ५७ ॥
मूलमन्त्रेण दद्यात्तु पुष्पं देवाय देशिकः ।
पुष्पाञ्जलिं प्रतिदिशं प्रदक्षिणपुरःसरम् ॥ ५८ ॥
दत्त्वा पुनः प्रणम्याथ स्तोत्रैर्देवं स्तुवीत वै ।
स्वमात्मानं भगवते किंकरत्वाय वेदयेत् ॥ ५९ ॥
ततो ध्यात्वा जपेन्मन्त्रं यथाशक्ति समाहितः ।
आचार्यं गन्धपुष्पाद्यैः समभ्यर्च्य मुने ततः ॥
सर्वभोगैस्तु संपूर्णान् मन्त्रांस्तस्मै निवेदयेत् ।
मुखवासं ततो दद्यात् ताम्बूलं चार्घ्यमेव च ॥ ६१ ॥

चतुर्थं भोज्यासनम्

भोज्यासनमथाभ्यर्च्य देवं विज्ञाप्य पादुके ।
दद्यात् तत्रोपविष्टेऽस्मिन् पाद्यमाचमनं ततः ॥ ६२ ॥

अर्हणं च ततः कृत्वा दध्याज्यक्षीरमाक्षिकान् ।
गन्धं च पात्रे निक्षिप्य शोषणादिकमाचरेत् ॥
संप्रोक्ष्यार्घ्यजलेनैव मधुपर्कमथो दिशेत् ।
ततो दद्यात् सुवर्णं च गां च रत्नानि पूजकः ॥ ६४ ॥

हविर्निवेदनम्

सुसंस्कृतान्नमाज्यं च दधिक्षीरमधूनि च ।
मूलानि मोदकान् स्निग्धान् व्यञ्जनानि फलानि च ॥
यानि कालोपपन्नानि शुचीनि गुणवन्ति च ।
स्वादिष्ठानि प्रभूतानि हृद्यान्यन्यानि यानि च ॥
विशोध्य शोषणाद्यैस्तु संप्रोक्ष्यार्घ्यजलेन तु ।
विधाय रक्षामस्त्रेण हविरर्हणपूर्वकम् ॥ ६७ ॥
मुद्रां तु सुरभिं कृत्वा देवायैतन्निवेदयेत् ।
अनुवासं ततो दद्याद् दर्पणं च ततः परम् ॥ ६८ ॥
दद्यादाचमनीयं च हस्तमार्जनचन्दनम् ।
मुखवासं च ताम्बूलं प्रदायास्मै प्रणम्य च ॥ ६९ ॥

पुनर्मन्त्रासनं पञ्चमम्

अथ मन्त्रासनं न्यस्य कूर्चेन परिमृज्य च ।
गन्धपुष्पादिनाभ्यर्च्य दद्याद् विज्ञाप्य पादुके ॥
तथाधिरूढे देवेशे माल्यादिकमपोह्य तु ।
पाद्याचमनके [1]दत्त्वा ततो धूपं निवेदयेत् ॥ ७१ ॥

[1] कृत्वा D E F.

स्वादिष्ठानि फलान्यस्मै दद्यात् ताम्बूलमेव च ।
[1]गीतवादित्रनृत्ताद्यैर्देवमभ्यर्चयेत् ततः ॥ ७२ ॥
प्रदक्षिणं विधायास्मै प्रणमेद् दण्डवत् ततः ।

षष्ठं पर्यङ्कासनम्

अथ पर्यङ्कमभ्यर्च्य देवं विज्ञापयेत् ततः ॥ ७३ ॥
ततः [2]पादूप्रदानेन देवे पर्यङ्कमास्थिते ।
पाद्यमाचमनीयं च पुनर्दत्त्वा समाहितः ॥ ७४ ॥
माल्यभूषणकादीनि व्यपनीय [3]महामते ।
शयनोचितमाल्यानि [4]भूषणान्यंशुकानि च ॥ ७५ ॥
सुखस्पर्शानि [5]चान्यानि दद्याद्यज्ञोपवीतकम् ।
दद्यादाचमनीयं च गन्धं पुष्पमथो दिशेत् ॥ ७६ ॥
मुखवासं च ताम्बूलं दत्त्वा स्तोत्रैः स्तुवीत तम्[6] ।
अष्टाङ्गेन प्रणामेन प्रणम्य शरणं व्रजेत् ॥ ७७ ॥
प्रदक्षिणसमेतेन देवं योगासनस्थितम् ।
मनोबुद्ध्यभिमानेन सह न्यस्य धरातले ॥ ७८ ॥
कूर्मवच्चतुरः पादाञ्छिरस्तत्रैव पञ्चमम् ।

दास्यप्रार्थना

अज्ञानादथवा ज्ञानादशुभं यत् कृतं मया ॥ ७९ ॥

[1] A B C E F omit two lines from here.
[2] पादुकदानेन A B C.
[3] महामुने D.
[4] भूषणानि च तानि च D.
[5] देवाय D E F.
[6] वै A B C E F.

क्षन्तुमर्हसि तत् सर्वं दास्येन च गृहाण माम् ।
एवमाराधनं कुर्यादुभयत्र मुखे [1]हरिम् ॥ ८० ॥
सुदर्शनं नृसिंहं च विष्णुरूपं सुदर्शनम् ।

एवमनुष्ठितस्याराधनस्य मोक्षसाधनत्वम्

समाराधयतस्त्वेवमेकाहमपि नारद ॥ ८१ ॥
मुक्तिः करे स्थिता तस्य सर्वे कामाश्च किं पुनः ।

आनुषङ्गिकफलसाधनत्वं कैमुतिकम्

अनेन लोकपालाश्च सर्वे देवगणास्तथा ॥ ८२ ॥
[2]सिद्धगन्धर्वयक्षाश्च नागाश्चाप्सरसां गणाः ।
सर्वे वश्या भवन्तीह किं पुनर्भुवि मानवाः ॥ ८३ ॥
भूतप्रेतपिशाचाश्च कूश्माण्डाश्च विनायकाः ।
[3]प्रेष्यास्तस्य भविष्यन्ति साधकस्य महात्मनः ॥

परिवाराद्यर्चनविधिः

तथास्य परिवाराणां देवानां शक्तियोषिताम् ।
मन्त्राणामस्त्रशस्त्राणां स्वैः स्वैर्नामभिरर्चनम् ।
नमोऽन्तैरुपचारैश्च कुर्यात् षोडशभिः क्रमात् ॥ ८५ ॥

इति श्रीपाञ्चरात्रे तन्त्ररहस्ये अहिर्बुध्न्यसंहितायां भगवदाराधनविधि-
निरूपणं नामाष्टाविंशोऽध्यायः

आदितः श्लोकाः १६९६

[1] उद्दिश्येति शेषः.
[2] B C omit this line.
[3] प्रेष्यास्तत्र D.

## काम्याराधनविधिनिरूपणं नाम एकोनत्रिंशोऽध्यायः

ध्यातं सकृद्भवानेककोट्यघौघं हरत्यरम् ।
सुदर्शनस्य तद्दिव्यं भर्गो देवस्य धीमहि ॥

भगवदाराधनस्यानुषङ्गिकफलसाधनत्वकथंताप्रश्नः

**नारदः—**

एतदाराधनैः कस्य कथं देवादयः सुराः ।
अन्ये चोक्ता वशं यान्ति तन्मे ब्रूहि यथातथम् ॥ १ ॥

तत्प्रतिवचनारम्भः

**अहिर्बुध्न्यः—**

क्षत्रियस्य विशेषेण जयार्थित्वान्महामुने ।
येनार्चनविशेषेण विश्वे वश्या भवन्ति हि ॥ २ ॥
शृणुष्व तं समासेन कथयामि यथातथम् ।

तत्तदाराधनविशेषाणां तत्तद्दिग्विजयसाधनत्वम्

यदीच्छेद्विजयं दिक्षु सर्वासु च महीपतिः ॥ ३ ॥
आराधनविशेषैस्तु तत्तद्विजयमाप्नुयात् ।

तत्र प्राचीदिग्विषये

नृपेभ्यो विजयाकाङ्क्षी प्राच्येभ्यश्चेन्महीपतिः ॥ ४ ॥

आराधयेद्विशिष्टैस्तु द्रव्यैर्देवं सुदर्शनम् ।
सितपुष्पैः सितैर्वस्त्रैरङ्गरागैः सितैरपि ॥ ५ ॥
शाल्योदनैश्च दध्याढ्यैरर्चयित्वा सुदर्शनम् ।
[1]मण्डपे मण्डिते शुद्धे पूर्वोक्ते देवसंनिधौ ॥ ६ ॥
प्रासादलक्षणे कुण्डे चतुष्कोणपरिस्तृते ।
तत्र वह्निमथादाय[2] काष्ठैः प्रज्वाल्य बैल्वकैः ॥ ७ ॥
आसीनः प्राङ्मुखो भूत्वा शुचिस्तत्र समाहितः ।
तस्मिन् फलानि बैल्वानि सर्पिःसिक्तानि नारद ॥ ८ ॥
नियुतं मूलमन्त्रेण जुहुयाज्ज्वलितेऽनले ।
होमैरेभिः समुद्रान्ता प्राची वश्या भवेन्मही ॥ ९ ॥
फलानां कोटिहोमेन बैल्वानां वशमेष्यति ।
प्लक्षद्वीपस्य देशस्तु प्राच्यः सहमहीपतिः ॥ १० ॥
कोटिद्वयेन चैतेषां शाल्मलो वशमेष्यति ।
देशः [3]प्राच्यः सभूपालः स्वदेश इव नारद ॥ ११ ॥
कुशः क्रौञ्चस्तथा शाकः पुष्करद्वीपसंज्ञितः ।
एकद्वित्रिचतुःपञ्चषट्कैः प्राच्याः क्रमेण वै[4] ॥ १२ ॥
कोटीनां फलहोमानां वशं यास्यन्ति [5]भूपतेः ।
द्वीपानामपि चैतेषां प्राची माघवती पुरी ॥ १३ ॥
दशकोट्या तु होमानां वशं यास्यति सा ध्रुवम् ।

1 मण्डले D.
2 धाय E F.
3 प्राप्यः A.
4 तु D.
5 भूमिपाः B C.

[1]पालनार्थं तु [2]लोकानामेकेनांशेन वासवः ॥ १४ ॥
तत्रैव वर्तते सोऽपि साहाय्यं [3]तस्य यास्यति ।
स्त्रीभिरन्नैश्च पानैश्च वाजिभिः परमैर्गजैः ॥ १५ ॥
यथा स्वस्मिन् पुरे राजा विहरत्यविशङ्कया ।
चिन्तितोपनतैरेव तैर्द्रव्यै रंस्यते नृपः ॥ १६ ॥
अस्य प्रभावतः सर्वे विष्टब्धाः सर्वसागराः ।
गन्तुं [4]योग्या भविष्यन्ति स्यन्दनेन यथा स्थली ॥
हारं च वासवस्तस्य चक्रवर्तित्वलक्षणम् ।
सर्वरत्नमयं दिव्यमुपनेष्यति च स्वयम् ॥ १८ ॥

दक्षिणदिग्विषये

दक्षिणाशाजयाशा चेदजनिष्ट महीपतेः ।
पूर्वोक्ते मण्डपे देवं दक्षिणाभिमुखं नयेत् ॥ १९ ॥
रक्तमाल्याम्बरधरं रक्तचन्दनरञ्जितम् ।
रक्ताम्बरधरं [5]देवमभ्यर्च्योक्तेन वर्त्मना ॥ २० ॥
गुडौदनं हविस्तस्मै निवेद्य तिलमिश्रितम् ।
अर्धचन्द्रोपमं कुण्डं कृत्वा प्रासादलक्षणम् ॥ २१ ॥
कुशैः पुष्पैश्च लाजैश्च परिष्कृतमविक्षतम् ।
दक्षिणाभिमुखस्तत्र समासीनोऽग्रतो विभोः ॥

[1] पावनार्थं A B C E F.
[2] होमानां D.
[3] तत्र D.
[4] शक्याः B C.
[5] देवं समभ्यर्च्योक्तवर्त्मना B C.

मन्त्रेण वह्निमादाय काष्ठैः प्रज्वाल्य खादिरैः ।
[1]पद्मानां चैव रक्तानां नियुतैर्होममाचरेत् ॥ २३ ॥
ततः सा दक्षिणा पृथ्वी सागरान्ता वशा भवेत् ।
सोपहाराश्च राजानस्तत्रत्या द्वारि वारिताः ॥ २४ ॥
प्रतीक्षमाणाः स्थास्यन्ति कालं तस्य महात्मनः ।
ततो दक्षिणदिग्भागे[2] षट्सु द्वीपेषु संमताः ॥ २५ ॥
एकद्वित्रिचतुःपञ्चषड्भिर्वश्याः सभूभुजः ।
रक्तपद्माहुतीनां च कोटीनां तु यथाक्रमम् ॥ २६ ॥
एषा दक्षिणतो रम्या याम्या संयमिनी पुरी ।
सा रक्तपद्महोमानां दशकोट्या वशा भवेत् ॥ २७ ॥
यमोऽपि तस्य भावेन प्रसन्नः प्रीतमानसः ।
राज्ञो मनीषितं यत् तन्नान्यथा वर्तयिष्यति ॥ २८ ॥
अकालमरणं किंचित् तद्देशे न भविष्यति ।
ये पुर्यां संयमिन्यां च यमस्य वशवर्तिनः ॥ २९ ॥
[3]ते सर्वे तस्य वशगा भविष्यन्ति न संशयः ।
दिव्ये [4]रक्ताङ्गदे रम्ये सार्वभौमत्वलक्षणे ॥ ३० ॥
यमस्तु स्वयमादाय प्रीतस्तस्मै [5]प्रयच्छति ।

[1] पद्मानामथ A B C.
[2] दिग्भागाः षड्द्वीपेषु सुसंमताः D.
[3] D omits three lines from here.
[4] रत्नाङ्गदे E F.
[5] प्रदास्यति B C E F.

पश्चिमदिग्विषये

पश्चिमाशां प्रति यदा जिगीषुर्नृपतिस्तदा ॥ ३१ ॥
[1]मण्डपेऽलंकृते देवं पश्चिमाभिमुखं नयेत् ।
चित्रमालाधरं [2]चित्रैरंशुकैः समलंकृतम् ॥ ३२ ॥
चित्राङ्गरागैश्चित्राभिर्भूषाभिरुपशोभितम् ।
[3]मध्वोदनं हविः कृत्वा देवायैतन्निवेदयेत् ॥ ३३ ॥
पद्मोपमानं प्रासादं कुण्डं कृत्वा स्वलंकृतम् ।
तत्राधायाग्निमासित्वा[4] देवस्य पुरतो वशी ॥ ३४ ॥
काष्ठैः शमीमयैरग्निं [5]प्रज्वाल्याथ समाहितः ।
[6]मध्वक्तैः करवीरैस्तु नियुतं जुहुयान्मनुम् ॥ ३५ ॥
ततः ससागरा पृथ्वी जम्बूद्वीपस्य पश्चिमा ।
वर्तिष्यते वशे तस्य राज्ञः सनृपतिस्तदा ॥ ३६ ॥
करवीराहुतीनां च कोट्या कोटिद्वयेन च ।
कोटित्रयचतुःपञ्चषट्कैस्ते[7] च यथाक्रमम् ॥ ३७ ॥
षड् द्वीपखण्डाः पाश्चात्त्या वशं यास्यन्ति भूपतेः ।
सुखाख्या वारुणी रम्या पुरी परमभास्वरा ॥ ३८ ॥
सदा संनिहितैर्भोज्यैर्लेह्यैः पेयैश्च पूरिता ।
दिव्यपादपसंयुक्तैर्नन्दनैरुपशोभिता ॥ ३९ ॥

1 मण्डले D.
2 चित्रैरंशुभिः D.
3 मन्थोदनैः D.
4 मासाद्य D.
5 प्रज्वाल्यास्मिन् D.
6 मल्लिकैः D.
7 षट्कैस्तैश्च D.

सदोत्फुल्लाम्बुजाढ्याभिः सरसीभिः परिष्कृता।
आक्रीडपर्वतैर्युक्ता नानारत्नविभूषितैः ॥ ४० ॥
प्रासादैर्मण्डपैस्तुङ्गैर्मण्डिता सा हिरण्मयैः।
एवंविधा पुरी तस्य राज्ञो भोग्या भविष्यति ॥ ४१ ॥
वरुणोऽपि स्वयं छत्रं मणिविद्रुमभूषितम्।
मुक्तादामभिराकीर्णममृतस्यन्दि वन्दितम् ॥ ४२ ॥
चिह्नं तच्चक्रवर्तीनां[1] राज्ञे प्रीतः प्रदास्यति।

उत्तरदिग्विषये

उदीचीं दिशमुद्युक्तो जेतुं यदि महीपतिः ॥ ४३ ॥
चक्राब्जविष्टरे देवमुत्तराभिमुखं नयेत्।
पीताम्बराणि बिभ्राणं [2]पीतपुष्पैरलंकृतम् ॥ ४४ ॥
विद्रुमाभरणैर्युक्तं[3] कुङ्कुमक्षोदरञ्जितम्।
घृतौदनं हविः कृत्वा तेनाभ्यर्च्य सुदर्शनम् ॥ ४५ ॥
कुर्यात् तस्याग्रतः कुण्डं [4]वृत्तप्रासादलक्षणम्।
उदङ्मुखोऽग्निमाधाय कुण्डे मण्डपसंश्रिते ॥ ४६ ॥
काष्ठैरौदुम्बरैर्वह्निं प्रज्वाल्य ज्वलितेऽनले।
नन्द्यावर्तप्रसूनैस्तु नियुतं जुहुयात् [5]पुरः ॥ ४७ ॥
तेनेदं भारतं वर्षं काञ्चनाचलसंयुतम्।

[1] इत्थमेव सर्वत्र पाठः.
[2] पीतपत्रैः D.
[3] जुष्टं D E.
[4] वृतं A; वृत्तं B C E F.
[5] पुरा D.
[6] D omits two lines from here.

सराजकं तस्य वशे भविष्यति न संशयः ॥ ४८ ॥
लक्षद्वयेन होमानां वर्षं किंपुरुषाह्वयम् ।
सभूपं भूपतेस्तस्य वशमेष्यत्यसंशयम् ॥ ४९ ॥
लक्षत्रयेण वश्यं स्याद्धरिवर्षं सराजकम् ।
होमलक्षचतुष्केण भद्राश्वं वशमेष्यति ॥ ५० ॥
पञ्चषट्सप्तभिर्होमलक्षाणां पृथिवीपतेः ।
इलावृतं केतुमालं रम्यकं च वशे भवेत् ॥ ५१ ॥
हिरण्मये [1]मेरुवर्षे अष्टाभिर्नवभिस्तथा[2] ।
वशे भविष्यतो होमलक्षाणां समहीश्वरे ॥ ५२ ॥
षण्णां प्लक्षमुखानां तु द्वीपानां [3]भोगभूमयः ।
उक्तसंख्यायुतैर्होमैर्वशमेष्यन्ति नारद ॥ ५३ ॥
सर्वेषां द्वीपवर्षाणामुत्तरत्र पुरी वरा ।
विभावरीति विख्याता सोमस्य परमाद्भुता ॥ ५४ ॥
दशकोट्या वशे तस्य [4]होमानां सा भविष्यति ।
ये तस्यां देवतावर्गाः सोमस्य वशवर्तिनः ॥ ५५ ॥
ते सर्वे भूपतेस्तस्य वर्तिष्यन्ते वशे मुने ।
तस्य प्रभावतः सोमः स्वयमादाय चामरे ॥ ५६ ॥
स्वज्योत्स्नासंचयप्रख्ये रत्ननालसमन्विते ।
विश्वाधिराज्यचिह्ने ते शुभ्रे शीतलदर्शने ॥ ५७ ॥

[1] कुरुवर्षे E F.
[2] नवभिः क्रमात् D.
[3] भाग A D E F.
[4] होमेनासौ A B C E F.

प्रीतः प्रदास्यति [1]श्रीमानस्मै विस्मितकर्मणे ।

विदिशां विषये

महादिशां जयात् सिद्धो विदिशां वशिनो जयः ॥५८॥
उपहारान् प्रदास्यन्ति तत्तद्दिक्पालकाः परे ।

ऊर्ध्वलोकस्य विषये

ऊर्ध्वलोकजयोद्योगो यद्यवर्तिष्ट भूपतेः ॥ ५९ ॥
देवं मण्डपरत्ने तु [2]प्राङ्मुखासनमर्हयेत् ।
गन्धवन्माल्यसंवीतं मुक्ताभूषणभूषितम् ॥ ६० ॥
दिव्यचन्दनलिप्ताङ्गं क्षौमैः कल्पितवाससम् ।
एवमभ्यर्च्य विधिना पायसं खण्डसंमितम् ॥ ६१ ॥
आज्याढ्यं हविरावेद्य सर्वपक्वफलान्वितम् ।
प्रासादकुण्डमष्टाश्रं सर्वमङ्गलसंयुतम् ॥ ६२ ॥
कारयित्वास्त्रमन्त्रेण[3] वह्निमादाय[4] मन्त्रवित् ।
कृष्णागुरुमयैः [5]काष्ठैर्ज्वलयेज्जातवेदसम् ॥ ६३ ॥
तत्राज्यहोमं [6]कुर्याद्वै शतकोटिसमन्वितम् ।
अन्तरिक्षं ततस्तेन होमेन वशमेष्यति ॥ ६४ ॥
तल्लोकवासिनः सर्वे सिद्धगन्धर्वकिंनराः ।
यक्षाः किंपुरुषाश्चैव चारणाः साङ्गनागणाः ॥ ६५ ॥

[1] श्रीमांस्तस्मै D.
[2] प्राङ्मुखासनसंश्रितम् A B C E F.
[3] अग्निमन्त्रेण E.
[4] आधाय E F.
[5] दिव्यैः D.
[6] कुर्वीत D.

वीणावेणुमृदङ्गैश्च वाद्यैस्तालैश्च सर्वशः ।
तस्यापदानचरितगर्भा[1] भोगवलीः पराः ॥ ६६ ॥
गायन्तः परिवार्यैनं हर्षयिष्यन्ति भूपतिम् ।
कोटिकोट्या तु होमानां स्वर्गो वश्यो भविष्यति ॥
तत्र देवैर्महेन्द्रोऽपि देव्या शच्या समन्वितः ।
आरुह्यैरावतं नागमप्सराणां गणैः सह ॥ ६८ ॥
तमभ्येत्य महात्मानमवरुह्य मुदान्वितः ।
मणिपीठं समारोप्य वाचयित्वा च मङ्गलम् ॥
नृत्तैर्गीतैश्च वाद्यैश्च दिव्यदुन्दुभिनिस्वनैः ।
शङ्खकाहलनादैश्च सह तीर्थाहृतैर्जलैः ।
वासवश्चक्रवर्तित्वे [2]राजानमभिषेक्ष्यति ॥ ७० ॥
मणिमुकुटमथास्मै वारणं दिव्यमेकं
हयमनिलसमानं पुष्पकाभं विमानम् ।
सरसिजपरिक्लृप्तां काञ्चनीं दिव्यमाला-
मपि च [3]हरुषजुष्टो दास्यति [4]स्वात्मसाम्यम् ॥
हयमेधशतेन [5]याजयित्वा
नृपतिं सर्वमहीपतिं विधाय ।
शतमप्सरसः प्रदाय तस्मै
त्रिदिवं यास्यति वृत्रहा सदेवः ॥ ७२ ॥

[1] चरितमहाभोगा D.
[2] राजत्वे चाभि B C D E F.
[3] सर्वत्रायमेव पाठः.
[4] स्वां शचीशः A E F.
[5] योजयित्वा B C F.

नागलोकस्य विषये

[1]नागलोकेषु जाता चेज्जिगीषा चक्रवर्तिनः ।
पद्मरागमयैर्दिव्यैर्भूषणैरुपशोभितम् ॥ ७३ ॥
रक्तचन्दनलिप्ताङ्गं देवं पद्मैः समर्चयेत् ।
पिष्टौदनं गुडाढ्यं च हविस्तस्मै निवेद्य च ॥ ७४ ॥
प्रासादलक्षणे कुण्डे षट्कोणे ज्वलितानले ।
अपूपानां तु कोटीनां कोट्या होमं समाचरेत् ॥ ७५ ॥
तेन तक्षकमुख्यानां नागानां परमा पुरी ।
वश्या भवेद्भोगवती स्वपुरीवास्य भूपतेः ॥ ७६ ॥
तस्य प्रभावमवलोक्य स नागराजो
रत्नानि भास्वरतराणि महान्ति भान्ति ।
द्वे कुण्डले मणिमये च सहाङ्गनाभि-
रादाय सत्यमुपयास्यति सार्वभौमम् ॥ ७७ ॥

सामान्यपरिभाषा

[2]उक्तानामप्यनुक्तानां शृणु नारद लक्षणम् ।
सामान्यं येन सिद्धिः स्यादीप्सितार्थस्य मन्त्रिणः ॥
एकद्वित्रिचतुःपञ्चषट्सप्ताष्टनवात्मकाः ।

[1] नाकलोकेषु जाता वै जिगीषा यदि भूपतेः D.

[2] A B C F omit the portion from here up to end of the chapter.

विहारास्त्रिचतुःपञ्च समुखान्तायतोच्छ्रिताः ॥ ७९ ॥
दिग्विदिक्षु तथा मध्ये नवकाः परिकीर्तिताः ।
दिक्षु मध्ये तथा पञ्च शेषाः प्राङ्मुखपङ्क्तयः ॥ ८० ॥
एकद्व्यादियुगाश्चैव शान्तिपुष्ट्योः प्रकीर्तिताः ।
[1]एकत्र्याद्ययुजश्चैव क्षुद्रेषु नवकं विना ॥ ८१ ॥
पलाशौदुम्बराश्वत्थखदिराद्याश्च यज्ञियाः ।
दूर्वाद्याश्च तिलाद्याश्च प्रशस्ताः शुभकर्मणि ॥ ८२ ॥
[2]कारस्करादयः क्षुद्रे कटुबीजादयस्तथा ।
सहस्राद्या लक्षमध्याः कोट्यन्ता होमजातयः ॥ ८३ ॥
एको द्वौ बहवो वापि [3]यथद्ध्यर्चा ऋत्विजः स्मृताः ।
[4]एकस्मिन् वह्निकुण्डे चेज्जुहुयुः प्रागुदङ्मुखाः ॥ ८४ ॥
वासुदेवालयोद्यानमन्दिरेषु शुभा क्रिया ।
अशुभा तु श्मशानादावथ कालविधिक्रमः ॥ ८५ ॥
[5]युक्षु कुर्याद् दिनर्क्षेषु शुभामन्यामथान्यथा ।
व्यस्तैरथ समस्तैर्वा यद्वा कामविकल्पितैः[6] ॥ ८६ ॥
[7]समिदाज्यादिभिर्लक्षकोटिहोमादयः स्मृताः ।
[8]एवमभ्यूह्य कुर्वीत मन्त्रेणेष्टस्य साधनम् ॥ ८७ ॥

1 एकत्र्यादियुगं चैव E.
2 करस्करादयः क्षुद्रे कशबीजादयस्तथा E.
3 यथार्घा E; यथाल्पा D.
4 एतस्मिन् D.
5 दिक्षु E.
6 विकर्मितैः D.
7 सद्भिराज्यादिभिः D.
8 एवमावाह्य E.

अनुक्तमिव यत् किंचित् तान् स्वगृह्योक्तमाचरेत् ।
अपूर्वो वा भवेद्धोमो नाघारादिसमन्वितः ॥ ८८ ॥

इति श्रीपाञ्चरात्रे तन्त्ररहस्ये अहिर्बुध्न्यसंहितायां काम्याराधनविधि-
निरूपणं नामैकोनत्रिंशोऽध्यायः

आदितः श्लोकाः १७८४

# अस्त्राणां जन्मनामनिरूपणं नाम त्रिंशोऽध्यायः

**ध्यातं सकृद्भवानेककोट्यघौघं हरत्यरम् ।**
**सुदर्शनस्य तद्दिव्यं भर्गो देवस्य धीमहि ॥**

ब्राह्माद्यस्त्राणां देवपरिवारत्वकथंताप्रश्नः

**नारदः—**

**कथं ब्रह्मास्त्रमुख्यानां महतां शक्तिशालिनाम् ।**
**अस्त्राणामप्रमेयाणां देवस्य परिवारता ॥ १ ॥**

तेषां जन्मनामप्रश्नः

**कस्मादेतानि जातानि महास्त्राणि महेश्वर ।**
**अमीषां कानि नामानि तन्ममाचक्ष्व पृच्छतः ॥**

तत्प्रतिवचनार्थमाख्यायिकारम्भः

**अहिर्बुध्न्यः—**

**पुरा नारायणो देवः स्वयमेव व्यवस्थितः ।**
**प्राक् सृष्टेर्न रतिं लेभे लीलोपकरणादृते ॥ ३ ॥**

लीलार्थं भगवतो बहुभवनम्

**ततो लीलार्थमात्मानं बह्वकल्पयदीश्वरः ।**

पुरुषाधिष्ठितप्रधानसृष्टिः

**अथ प्रधानमसृजत् पुरुषाधिष्ठितं स्वतः ॥ ४ ॥**

प्रधानान्महतः सृष्टिः

**ततो महान्तमव्यक्ताज्जनयामास नारद ।**

महतोऽहंकारसृष्टिः

**गुणत्रयात्मकं तस्मादहंकारमतः परम् ॥ ५ ॥**

सात्त्विकाहंकारादेकादशेन्द्रियसृष्टिः

**इन्द्रियाणि दशैतानि ज्ञानकर्मात्मकानि वै ।**
**मनश्च सात्त्विकात् तस्मादहंकारादजीजनत् ॥ ६ ॥**

तामसाहंकारात् भूतसूक्ष्माणां भूतानां च सृष्टिः

**[1]भूतानि भूतसूक्ष्माणि दशैतानि महामुने ।**
**असृजत् तामसात् तस्मादहंकाराज्जनार्दनः ॥ ७ ॥**

सप्तावरणवेष्टिताण्डसृष्टिः

**महदादिविशेषान्तैरेतैरण्डमजीजनत् ।**
**दशोत्तरैरावरणैः सप्तभिः परिवेष्टितम् ॥ ८ ॥**

अण्डे चतुर्मुखसृष्टिः

**तस्मिन्नण्डे स्वयं विष्णुः प्रजापतिमथाकरोत् ।**
**उच्चावचानां भूतानां कर्तारं निजशक्तिभिः ॥ ९ ॥**

[1] जातानि A B C; D omits three lines from here.

भगवच्छक्तिभूतस्य कालस्य सृष्टौ सहकारित्वम्

हरिः स्वशक्तिरूपेण कालेन च समन्वितः ।
महदादिषु सृज्येषु सृष्टिं चक्रे जगन्मयः ॥ १० ॥

चतुर्मुखव्याजेन भगवत एव विचित्रजगत्स्रष्टृत्वम्

विष्णुर्ब्रह्मापदेशेन चिदचिन्मिश्रितं जगत् ।
विचित्रं जनयामास तत्तच्छक्तिसमन्वितः ॥ ११ ॥

वेदशब्देभ्य एव देवादीनां नामरूपव्याकरणम्

वेदानालोच्य भूतानां देवादीनां यमः प्रभुः ।
नामरूपे च विविधे यथापूर्वमकल्पयत् ॥ १२ ॥

आप्तकामस्यापि स्रष्टृत्वोपपत्तिः

[1]सर्वदावाप्तसकलकामोऽपि परमेश्वरः ।
जन्तुभिर्निजसृष्टैश्च लीलारसमथान्वभूत् ॥ १३ ॥

भगवत एव पालकत्वम्

अनालोच्यैव जगतां त्रातारमपरं हरिः ।
स्वयमेवांशरूपेण पालयत्यखिलं जगत् ॥ १४ ॥

दुष्टनिरसनं विना पालनस्याशक्यत्वम्

दैतेयानां दानवानामन्तरेण निबर्हणम् ।
न शक्यते पालयितुं सदेवासुरमानवम् ॥ १५ ॥

[1] सर्वदावाप्तकामोऽपि भगवान् परमेश्वरः D.

दुष्टनिबर्हणाय भगवत एव चक्रात्मनावस्थानम्

अतश्च भगवान् विष्णुश्चक्ररूपी व्यवस्थितः ।
हन्यन्ते तेन चक्रेण विश्वे दैतेयदानवाः ॥ १६ ॥

देवादीनां सुदर्शनधारणासामर्थ्यम्

देवादीनां सुराणां च विशेषाच्च महीक्षिताम् ।
न शक्यते धारयितुं सुदर्शनमनुत्तमम् ॥ १७ ॥

शस्त्रास्त्ररूपेण तस्य विभागः

अतस्तेषां विभक्तानि विविधानि बहूनि च ।
अस्त्राणि शस्त्रजातानि शत्रुनाशाय नारद ॥ १८ ॥

भगवदात्मकात् सुदर्शनादस्त्राणामुत्पत्तिः

अस्त्राणि तानि निर्जग्मुर्विष्णुरूपात् सुदर्शनात् ।
अमोघानि ततोऽस्त्राणि भीषणानि महान्ति च ॥
प्रजाः स्रष्टुं मनश्चक्रे चक्ररूपी जगत्पतिः ।
स्रष्टुमस्त्राणि सर्वाणि स्वस्माद्रूपान्महामुने ॥ २० ॥
तस्माद्देवो भीममापद्य चोग्रं
रूपं पिङ्गं पिङ्गलावृत्तनेत्रम् ।
दंष्ट्रानिर्यत्पावकक्लुष्टकाष्ठं
भीमं केशैः पिङ्गलैर्विद्युदाभैः ॥ २१ ॥

तत्र मुखजातान्यस्त्राणि

नारायणं पाशुपतं ब्राह्ममस्त्रं तथैव च ।

अस्त्रं ब्रह्मशिरो नाम विष्णुचक्रं च जृम्भणम् ॥
कालपाशमथाग्नेयमस्त्रं हयशिरस्तथा ।
प्रस्वापनं [1]तापसं च कालास्त्रममितप्रभम् ॥ २३ ॥
दण्डचक्रं कालचक्रं [2]धर्मचक्रं तथैव च ।
शैवं शूलं रौद्रमस्त्रं त्रिशूलं घोरमेव च ॥ २४ ॥
अस्त्राण्येतानि मुख्यानि मुखतो जज्ञिरे विभोः ।

वक्षोजातान्यस्त्राणि

संमोहनं तथैषीकमैन्द्रं चक्रं महाद्युति ॥ २५ ॥
अशनी द्वे च शुष्कार्द्रसंज्ञिते सर्वभीषणे ।
[3]पैनाकमस्त्रं कङ्कालं कापालमतिदारुणम् ॥ २६ ॥
सौर्यं वारुणपाशं च संतापनमरिंदमम् ।
अस्त्रं वारुणमत्युग्रं धर्मपाशं तथैव च ॥ २७ ॥
एतान्यस्त्राणि देवस्य निर्जग्मुर्वक्षसस्तथा ।

ऊरुजातान्यस्त्राणि

शक्तिद्वयं च वायव्यमस्त्रं मौसलमेव च ॥ २८ ॥
[4]गान्धर्वं दर्पणं चास्त्रं शोषणं परदारणम्[5] ।
तेजःप्रभं च पैशाचमैन्द्रमस्त्रं सुदारुणम् ॥ २९ ॥
याम्यं विलापनं चास्त्रं वैद्याधरममित्रहम् ।

[1] तामसं B C D; स्वापनं E.
[2] धर्मचक्रमथापरम् D.
[3] वैनायकास्त्रं D.
[4] गन्धर्वतर्पणं B C.
[5] दारुणम्.

कङ्कणीं मोदकीं चैव शिखरं क्रौञ्चमेव च ॥ ३० ॥
एतानि जनयामास निजोर्वोरुरुविक्रमः ।

पादजातान्यस्त्राणि

असिरत्नं प्रशमनं कन्दर्पदयितं तथा ॥ ३१ ॥
मदनं सौमनं चास्त्रं सत्यं संवर्तनं तथा ।
मायाधरं च सोमास्त्रं त्वाष्ट्रं शीतेषुमेव च ॥ ३२ ॥
भगास्त्रमस्त्राण्येतानि पद्भ्यां जातानि नारद ।

अपराङ्गजातान्युपसंहारास्त्राणि

[1]संदामनं सत्यवन्तं [2]धरणं धृष्टमेव च ॥ ३३ ॥
भृशाश्वतनयं चैव सत्यकीर्तिं तथैव च ।
मोहनं [3]रभसास्त्रं च [4]सर्वनाहं पराङ्मुखम् ॥ ३४ ॥
जृम्भकं प्रतिहारं च तथा वरणमुत्तमम् ।
अवाङ्मुखं धनं धान्यं वृषाक्षं कामरूपकम् ॥ ३५ ॥
दृढनाहं कामरुचिं सुनाभं मकरं तथा ।
दशाक्षं वृत्तिमन्तं च दशवक्त्रं तथापरम् ॥ ३६ ॥
रुचिरं दशशीर्षं च योगंधरममित्रहम्[5] ।
[6]अनिद्रं मकरं चैव [7]भोक्तारं कङ्कणीं तथा ॥ ३७ ॥

[1] सदमानं A B; सदामनं D.
[2] धारणं B C E; वरणं D.
[3] भासमस्त्रं च D.
[4] सर्वनाभं D; सर्वनागं B C.
[5] अमित्रजम् D.
[6] अनित्यं D.
[7] भेत्तारं D.

शतोदरं सौमनसं पद्मनाभं तथैव च।
महानाभं प्रमथनं ज्यौतिषं [1]क्रथनं तथा ॥ ३८ ॥
त्रैराशिं सार्चिमालिं च [2]विमलां धृतिकां तथा।
[3]सृष्टिं तथा [4]विषामास्त्रं [5]सुध्याताहं तथैव च ॥ ३९ ॥
विधूतं कृशनं चैव लक्षाक्षं कर्शनं तथा।
उपसंहाररूपाणि सर्वाण्यस्त्राण्यमूनि वै।
जनयामास देवोऽसौ स्वापराज्ञात् परंतपः ॥ ४० ॥

अध्यायार्थनिगमनम्

एवमुक्तानि नामानि जन्मान्यपि च नारद।
अस्त्राणामपि माहात्म्यं यन्त्रस्यास्य समासतः ॥

इति श्रीपाञ्चरात्रे तन्त्ररहस्ये अहिर्बुध्न्यसंहितायाम् अस्त्राणां जन्मनाम-
निरूपणं नाम त्रिंशोऽध्यायः

आदितः श्लोकाः १८२५

[1] शमकं D. [2] विमलावृतिकां D.
[3] D omits two lines from here. [4] सुषामास्त्रं E.
[5] संध्याताहं B C.

योगाङ्गयमनियमासननिरूपणं नाम एकत्रिंशोऽध्यायः

ध्यातं सकृद्भवानेककोट्यघौघं हरत्यरम्।
सुदर्शनस्य तद् दिव्यं भर्गो देवस्य धीमहि॥

हृद्यागस्वरूपप्रश्नः

**नारदः—**

प्रथमं बाह्ययागस्य हृदयाराधनं परम्।
उक्तं त्वया तत्स्वरूपं यथावद्वक्तुमर्हसि॥ १॥

तदुत्तरकथनारम्भः

**अहिर्बुध्न्यः—**

साधु पृष्टं त्वया तस्य स्वरूपं शृणु नारद।
येन प्रीणाति भगवान् सर्वलोकनमस्कृतः॥ २॥

हृद्यागलक्षणम्

यैर्बाह्ययागः[1] क्रियते साधनैस्त्रिविधैरिह।
संकल्पसिद्धैस्तैरेव देवं प्रति समर्चनम्॥ ३॥
हृदयाराधनं प्रोक्तमेतत् सर्वार्थसाधनम्।

[1] योगः A B C.

आत्मसमर्पणस्य हृद्यागतुल्यत्वम्

यद्वा भगवते तस्मै स्वकीयात्मसमर्पणम् ॥ ४ ॥
वियुक्तं प्रकृतेः शुद्धं दद्यादात्महविः स्वयम् ।
[1]विशिष्टदैवतायास्मै चक्ररूपाय [2]मन्त्रतः ॥ ५ ॥

प्रकृतिवियुक्तात्मस्वरूपविषयकः प्रश्नः

**नारदः—**

वियुक्तं प्रकृते रूपमात्मनो वक्तुमर्हसि ।
केनोपायेन तत्प्राप्तिस्तन्मे[3] ब्रूहि सुनिश्चितम् ॥ ६ ॥

तदुत्तरकथनारम्भः

**अहिर्बुध्न्यः—**

शृणु [4]तत् परमं सूक्ष्मं सर्वगं सर्वभृत्[5] तथा ।
ज्ञानरूपमनाद्यन्तमविकारि निरामयम् ॥ ७ ॥
अचक्षुःश्रोत्रमस्पर्शमपाणिचरणं ध्रुवम् ।
नामजात्यादिरहितमवर्णमगुणं[6] त्वपि ॥ ८ ॥
[7]विश्वश्रवो विश्वचक्षुर्विश्वपाणिपदं परम् ।
असक्तमचरं शान्तं [8]स्वयंज्योतिरनौपमम् ॥ ९ ॥
दूरस्थमन्तिकचरं ज्ञानगम्यं निरञ्जनम् ।

[1] विशिष्टं D.
[2] तन्त्रतः D.
[3] तत्स्यादिति विनिश्चितम् A B C E F.
[4] तं D.
[5] हृत्तथा A B C E F.
[6] अगुणच्छवि D.
[7] विश्वश्रवा B C.
[8] बलज्योति D.

भूतभर्तृ समज्योतिर्ज्योतिषां तमसः परम् ॥ १० ॥
अक्षरं सर्वभूतस्थं तद्विष्णोः परमं पदम् ।

योगकर्मणोर्विविक्तात्मस्वरूपप्राप्तिसाधनता

तत्प्राप्तिसाधनं योगः कर्म च श्रुतिचोदितम् ॥ ११ ॥

तद्विषयकः प्रश्नः

**नारदः—**

कीदृशं कर्म विज्ञेयं योगः कीदृश उच्यते ।
याभ्यां संप्राप्यते चात्मा [1]केवलं प्रकृतेः परः ॥ १२ ॥

तदुत्तरकथनारम्भः

**अहिर्बुध्न्यः—**

शृणुष्व [2]प्रथमं कर्म द्विविधं तदिहोच्यते ।

कर्मणां द्वैविध्यम्

एकं प्रवर्तकं प्रोक्तं निवर्तकमथापरम् ॥ १३ ॥

प्रवर्तकनिवर्तककर्मणोः क्रमादभ्युदयनिश्रेयससाधनत्वम्

प्रवर्तकं च स्वर्गादिफलसाधनमुच्यते ।
निवर्तकाख्यं देवर्षे विज्ञेयं मोक्षसाधनम् ॥ १४ ॥

जीवपरसंयोगस्याष्टाङ्गयोगशब्दार्थता

संयोगो योग इत्युक्तो जीवात्मपरमात्मनोः ।
अष्टाङ्ग एष कथितो येनात्मा दृश्यतां गतः ॥ १५ ॥

[1] केवलः E F. [2] परमं D.

योगाङ्गपरिगणनम्

अष्टाङ्गान्यस्य वक्ष्यामि पृथक् तानि निशामय ।
यमश्च नियमश्चैवमासनं तदनन्तरम् ॥ १६ ॥
प्राणायामस्ततः प्रोक्तः प्रत्याहारश्च धारणा ।
ध्यानं तथा समाधिश्चाप्यङ्गान्येतानि नारद ॥ १७ ॥

यमस्वरूपनिरूपणम्

सत्यं दया धृतिः शौचं ब्रह्मचर्यं क्षमार्जवम् ।
मिताहारस्तथास्तेयमहिंसेति यमा दश ॥ १८ ॥

सत्यादीनां स्वरूपनिरूपणम्

हितरूपं वचः सत्यं यथादृष्टार्थगोचरम् ।
दया दुःखासहिष्णुत्वं सर्वभूतेषु सर्वदा ॥ १९ ॥
आपद्यपि स्वकार्येषु कर्तव्यत्वस्थितिर्धृतिः ।
शौचं सर्वेन्द्रियाणां च वैधकर्मसु योग्यता ॥ २० ॥
ब्रह्मचर्यं स्वयोषित्सु भोग्यताबुद्धिवर्जनम् ।
अविकारमनस्त्वं तु क्षमा विकृतिहेतुषु ॥ २१ ॥
वाङ्मनःकायवृत्तीनामेकरूपत्वमार्जवम् ।
मिताहारस्त्वाश्रमिणां श्रुतिचोदितभोजनम् ॥ २२ ॥
अस्तेयमस्पृहान्येषां वित्ते वाक्कायमानसैः ।
अहिंसा वाङ्मनःकायैः परपीडानिवर्तनम् ॥ २३ ॥

नियमस्वरूपनिरूपणम्

सिद्धान्तश्रवणं दानं मतिरीश्वरपूजनम् ।
संतोषस्तप आस्तिक्यं ह्रीर्जपश्च तथा व्रतम् ॥ २४ ॥
एते तु नियमाः प्रोक्ता दश योगस्य साधकाः ।

सिद्धान्तश्रवणादीनां स्वरूपनिरूपणम्

सिद्धान्तश्रवणं प्रोक्तं वेदान्तश्रवणं बुधैः ॥ २५ ॥
दानं न्यायार्जितार्थस्य सत्पात्रे प्रतिपादनम् ।
विहिते कर्मणि श्रद्धा मतिरित्यभिधीयते ॥ २६ ॥
यथाशक्त्यर्चनं भक्त्या विष्णोरीश्वरपूजनम् ।
संतोषोऽलमनेनेति प्रीतिर्यादृच्छिकेन वै[1] ॥ २७ ॥
कृच्छ्रचान्द्रायणाद्यैश्च तपो देहविशोषणम् ।
आस्तिक्यमस्ति वेदैकगम्यं वस्त्विति निश्चयः ॥ २८ ॥
निषिद्धकर्मकरणे व्रीडा ह्रीः प्रोच्यते बुधैः ।
गुरूपदिष्टस्वाध्यायमन्त्राभ्यासो जपः स्मृतः ॥ २९ ॥
सदाचार्योपदिष्टेषूपायत्वप्रग्रहो व्रतम् ।

अथासनानां स्वास्थ्यहेतुत्वम्

आसनानि प्रवक्ष्यामि मुख्यानि विविधानि च ॥ ३० ॥
आस्थायैषामन्यतमं योगिनो यान्ति निर्वृतिम् ।

[1] मे D.

मुख्यासनपरिगणनम्

चक्रं पद्मासनं कूर्मं मायूरं कौक्कुटं तथा ॥ ३१ ॥
वीरासनं स्वस्तिकं च भद्रं सिंहासनं तथा ।
मुक्तासनं गोमुखं च मुख्यान्येतानि नारद ॥ ३२ ॥

चक्रासनम्

सव्योरुं दक्षिणे गुल्फे दक्षिणं दक्षिणेतरे ।
निदध्यादृजुकायस्तु चक्रासनमिदं परम् ॥ ३३ ॥

पद्मासनम्

ऊर्वोरुपरि संस्थाप्य उभे पादतले सुखम् ।
पद्मासनमिदं प्रोक्तं सर्वकिल्बिषनाशनम् ॥ ३४ ॥

कूर्मासनम्

गुदं [1]निपीड्य गुल्फाभ्यां व्युत्क्रमेण समाहितः ।
एतत् कूर्मासनं प्रोक्तं योगसिद्धिकरं परम् ॥ ३५ ॥

मयूरासनम्

निवेश्य कूर्परौ [2]सम्यङ् नाभिमण्डलपार्श्वयोः ।
अवष्टभ्य भुवं पाणितलाभ्यां व्योम्नि दण्डवत् ॥ ३६ ॥
समोन्नतशिरःपादो मायूरासनमिष्यते[3] ।
एतत् सर्वविषघ्नं च सर्वव्याधिनिवारणम्[4] ॥ ३७ ॥

[1] निरुध्य D.
[2] सम्यग्लग्नतुन्दिलपार्श्वयोः E.
[3] उच्यते E F.
[4] निबर्हणम् B C.

कुक्कुटासनम्

पद्मासनमधिष्ठाय जान्वन्तरविनिःसृतौ ।
करौ भूमौ निवेश्यैतद्व्योमस्थं[1] कुक्कुटासनम् ॥ ३८॥

वीरासनम्

एकत्रोरौ तु संस्थाप्य पादमेकमथेतरम् ।
ऊरुं पादे निवेश्यैतद्वीरासनमुदाहृतम् ॥ ३९ ॥

स्वस्तिकासनम्

उभे पादतले कृत्वा जानूर्वोरन्तरे दृढम् ।
ऋजुकायः [2]समासीत स्वस्तिकं तत् प्रचक्षते ॥ ४० ॥

भद्रासनम्

सीवन्याः पार्श्वयोर्गुल्फौ निवेश्याग्रपदे दृढम् ।
बद्ध्वा कराभ्यां तत् प्रोक्तं भद्रासनमघापहम् ॥ ४१ ॥

सिंहासनम्

सीवन्याः पार्श्वयोर्गुल्फौ व्युत्क्रमेण निवेश्य च ।
करौ जान्वोर्निधायोभौ प्रसार्य निखिलाङ्गुलीः ॥ ४२ ॥
नासाग्रन्यस्तनयनो व्यात्तवक्त्र ऋजुः सुधीः ।
एतत् सिंहासनं प्रोक्तं सर्वदेवाभिपूजितम् ॥ ४३ ॥

[1] स्थः A B C E F. [2] समासीनः A B C E F.

मुक्तासनम्

मेढ्रादुपरि विन्यस्य सव्यगुल्फमिहेतरम् ।
गुल्फं विन्यस्य पाणी [1]चाप्यङ्कमध्ये निवेश्य च ॥४४॥
मुक्तासनमिदं प्रोक्तं स्थिता यत्र मुमुक्षवः ।

गोमुखासनम्

उभयोर्गुल्फयोः कृत्वा पृष्ठपार्श्वावुभावपि ॥ ४५ ॥
व्युत्क्रमेणाथ पाणिभ्यां विन्यस्ताभ्यां [2]विगृह्य च ।
पृष्ठगाभ्यां पदाङ्गुष्ठावेतद् गोमुखमुच्यते ॥ ४६ ॥

प्राणायामसिद्धये नाडीशुद्ध्यावश्यकता

प्राणायामप्रसिद्ध्यर्थं नाडीशुद्धिमनन्तरम् ।
देहस्थवायुभिः कुर्यात् साग्निभिश्च तपोधन ॥ ४७ ॥

इति श्रीपाञ्चरात्रे तन्त्ररहस्ये अहिर्बुध्न्यसंहितायां योगाङ्गयमनियमासन-
निरूपणं नामैकत्रिंशोऽध्यायः

आदितः श्लोकाः १८७२

[1] च हस्तमध्ये D; चाप्यङ्कं मध्ये E.

[2] प्रगृह्य D.

नाडीशुद्धिवायुजययोगाङ्गप्राणायामादिनिरूपणं नाम
द्वात्रिंशोऽध्यायः

ध्यातं सकृद्भवानेककोट्यघौघं हरत्यरम् ।
सुदर्शनस्य तद् दिव्यं भर्गो देवस्य धीमहि ॥

नाडीसंख्यास्थानादिप्रश्नः

नारदः—

नाड्यः कति तिष्ठन्ति कीदृश्यः किंप्रमाणकाः ।
क्व वर्तन्ते शरीरेऽस्मिन् कथमासां विशोधनम् ॥

वायुसंख्यादिप्रश्नः

वायवः कति तिष्ठन्ति किंनामानश्च कीदृशाः ।
कानि कर्माण्यमीषां [1]तु तत् [2]सर्वं वक्तुमर्हसि ॥ २ ॥

तदुत्तरकथनारम्भः

अहिर्बुध्न्यः—

तदेतत् परमं गुह्यं शृणुष्वानन्यमानसः ।

[1] च D; त्वं E F.
[2] सत्यं D.

शरीरस्य षण्णवत्यङ्गुलपरिमाणत्वम्

शरीरं सर्वजन्तूनामङ्गुलीभिरनामयम् ॥ ३ ॥
स्वाभिः स्वाभिः सुरमुने षण्णवत्यङ्गुलात्मकम् ।

शरीरमध्यभागनिर्णयः

शरीरमध्यः क इति शुश्रूषा चेन्महामुने ॥ ४ ॥
[1]श्रूयतां पायुदेशात्तु द्व्यङ्गुलात् परतः परम् ।
मेढ्रदेशादधस्तात्तु द्व्यङ्गुलान्मध्य उच्यते ॥ ५ ॥

शरीरस्थवह्निमण्डलस्वरूपम्

चतुष्कोणं त्रिकोणं तद् वृत्तमाग्नेयमण्डलम् ।
चतुष्पदां नृणां चैव विहंगानां यथाक्रमम् ॥ ६ ॥

नाडीमूलस्थानम्

मेढ्रान्नवाङ्गुलादूर्ध्वं नाडीनां [2]कन्द उच्यते ।
चतुरङ्गुलमुत्सेधं चतुरङ्गुलमायतम् ॥ ७ ॥
अण्डाकारं परिवृतं मेदोमांसास्थिशोणितैः ।

नाभिचक्रस्थानम्

तत्रैव नाभिचक्रं तु द्वादशारं प्रतिष्ठितम् ॥ ८ ॥
शरीरं ध्रियते येन तस्मिन् वसति कुण्डली ।

नाभिचक्रस्यारेषु सुदर्शनमन्त्रवर्णन्यासः

सौदर्शनस्य मन्त्रस्य यानि वर्णानि सन्ति वै ॥ ९ ॥

1 स्नायुदेशात् परस्तात्तु D.   2 कन्दम् A B C E F.

विभज्य तानि सर्वाणि व्यञ्जनानि स्वरांस्तथा ।
चक्रेऽस्मिन् विन्यसेत् तानि प्राच्याद्यारेषु च क्रमात् ॥

शिष्टाक्षराणां चक्रमध्ये न्यासः

शेषाणि विन्यसेन्मध्ये [1]चक्रस्यास्य समाहितः ।

नाभिचक्रं परितः कुण्डल्यवस्थितिः

वर्तते परितश्चक्रमष्टवक्त्राथ कुण्डली ॥ ११ ॥
अष्टप्रकृतिरूपेण भोगेनावेष्ट्य वैष्णवी ।
ब्रह्मरन्ध्रं सुषुम्नायाः [2]पिदधाति मुखेन वै ॥ १२ ॥

चक्रमध्ये अलम्बुसासुषुम्नयोः स्थितिः

अलम्बुसा सुषुम्ना च मध्ये चक्रस्य तिष्ठतः ।

अन्यासां द्वादशनाडीनां स्थानभेदाः

अरे प्राच्ये सुषुम्नायाः कुहूर्नाडी वसत्यसौ ॥ १३ ॥
अनन्तरारयुग्मे च [3]वारुणा च यशस्विनी ।
दक्षिणारे सुषुम्नायाः पिङ्गला वर्तते क्रमात् ॥ १४ ॥
तदनन्तरयोः पूषा वर्तते च पयस्विनी ।
सुषुम्नापश्चिमे चारे स्थिता नाडी सरस्वती ॥ १५ ॥
शङ्खिनी चैव [4]गान्धारी तदनन्तरयोः स्थिते ।

[1] चक्रनाभ्यां D. [2] संदधाति D.
[3] वारणा D. [4] गान्धारा D.

उत्तरे च सुषुम्नाया इडाख्या निवसत्यरे ॥ १६ ॥
अनन्तरं हस्तिजिह्वा ततो विश्वोदरा स्थिता ।
प्रदक्षिणक्रमेणैव चक्रस्यारेषु नाड्यः ॥ १७ ॥
वर्तन्ते द्वादशस्वेता द्वादश ब्रह्मणः सुताः ।

मुख्यानां चतुर्दशनाडीनां नामानि

इडा च पिङ्गला चैव सुषुम्ना च सरस्वती ॥ १८ ॥
कुहूः पयस्विनी चैव [1]वारुणा च यशस्विनी ।
विश्वोदरा हस्तिजिह्वा [2]गान्धारी शङ्खिनी तथा ॥१९॥
अलम्बुसा च पूषा च [3]मुख्यास्त्वेताश्चतुर्दश ।

देहवर्तिनाडीसंख्या

द्विसप्ततिसहस्राणि[4] नाडीनां देहवर्तिनाम् ॥ २० ॥

मुख्यास्तिस्रो नाड्यः

तासु तिस्रो मुख्यतमाः सुषुम्नेडा च पिङ्गला ।

तास्वपि सुषुम्ना मुख्यतमा

तासां सुषुम्ना मुख्या स्यादामूर्धान्तं व्यवस्थिता ॥२१॥

जीवस्य नाडीचक्रे भ्रमणम्

प्राणारूढो भवेज्जीवश्चक्रेऽस्मिन् भ्रमते सदा ।
ऊर्णनाभिर्यथा तन्तुपञ्जरान्तर्व्यवस्थितः ॥ २२ ॥

[1] वारणा D.
[2] गान्धारा D.
[3] उक्ताश्चैताः A B C E F.
[4] सहस्राणाम् D E F.

सुषुम्नाया मध्यमरन्ध्रस्य कुण्डल्या पिधानम्

पञ्चरन्ध्रयाः सुषुम्नायाश्चत्वारो रक्तपूरिताः ।
कुण्डल्या पिहितं शश्वद् ब्रह्मरन्ध्रं तु मध्यमम् ॥ २३ ॥

नाडीनां परिमाणनिरूपणम्

प्राच्यः पार्श्वः सुषुम्नाया ललाटान्तं समुच्छ्रितः ।
प्रतीच्यः कन्धरान्तस्तु द्वौ पार्श्वौ सव्यदक्षिणौ ॥ २४ ॥
आ पार्श्वशिरसः प्राप्तौ गुह्यमेतदुदाहृतम् ।
अलम्बुसाख्या नाडी स्यादापादान्तं व्यवस्थिता ॥२५॥
आमेढ्रान्तं कुहूः प्राप्ता [1]वारुणा विश्वदेहगा ।
आदक्षिणपदाङ्गुष्ठं संप्राप्ताथ यशस्विनी ॥ २६ ॥
प्राप्ता दक्षिणनासान्तं पिङ्गलाख्या तु नाडिका ।
पूषा पयस्विनी चैव दक्षिणाक्षिश्रुती गते ॥ २७ ॥
जिह्वामूलमभिप्राप्ता नाडी नाम्ना सरस्वती ।
शङ्खिनी वामकर्णं च [2]गान्धारी वामलोचनम् ॥ २८ ॥
वामघ्राणं गता नाडी इडा नाम्नेति विश्रुता ।
प्राप्ता वामपदाङ्गुष्ठं हस्तिजिह्वा तु नाडिका ॥ २९ ॥
विश्वोदरोदरं प्राप्ता प्रोक्ता नाडीगतिर्मया ।

इडापिङ्गलयोश्चन्द्रसूर्यावस्थितिः

इडायां वर्तते चन्द्रः पिङ्गलायां प्रभाकरः ॥ ३० ॥

[1] वारणा D.

[2] गान्धारा A D E F.

द्वावेव कुरुतः कालं भुङ्क्ते तं ब्रह्मनाडिका ।

शारीरवायुवृत्तान्तकथनम्

श्रूयतां वायुवृत्तान्तः शरीरान्तरवस्थितः ॥ ३१ ॥

शरीरे दश वायवः

प्राणापानसमानाश्चाप्युदानो व्यान एव च ।
नागः कूर्मश्च कृकरो देवदत्तो धनंजयः ॥ ३२ ॥

प्राणादिवायूनां स्थाननिरूपणम्

सदा निवसति प्राणो नाभिचक्रे समीरणः ।
[1]आस्यनासिकयोर्मध्ये हृदि प्राणः प्रकाशते ॥ ३३ ॥
अपानो वसति प्रायो गुदमेढ्रोरुजानुषु ।
उदरे [2]वृषणे कट्यां जङ्घानाभ्योः प्रदीपवत् ॥ ३४ ॥
गुदाग्न्यगारयोस्तिष्ठन् मध्येऽपानः प्रकाशते ।
व्यानः श्रोत्राक्षिमध्ये च कृकाट्यां गुल्फयोरपि ॥३५॥
घ्राणे गले च स्फिग्देशे [3]वसत्यत्र न संशयः ।
उदानः सर्वसंधिस्थः पादयोर्हस्तयोरपि ॥ ३६ ॥
समानः सर्वगात्रेषु सर्वं व्याप्य व्यवस्थितः ।

प्राणादीनां वृत्तिनिरूपणम्

निश्वासोच्छ्वासकादीनि प्राणकर्म इतीष्यते ॥ ३७ ॥

[1] आस्यनाडिकयोः E.
[2] वङ्क्षणे B C.
[3] तिष्ठत्यत्र D.

हानोपादानकर्मैव व्यानकर्मेति चेष्यते ।
उदानकर्म तत् प्रोक्तं देहस्योन्नयनादिकम् ॥ ३८ ॥
पोषणादि समानस्य शरीरे कर्म कीर्तितम् ।
उद्गारादिगुणो यस्तु नागकर्मेति चेरितम् ॥ ३९ ॥
निमीलनादि कूर्मस्य क्षुतं कृकरकस्य च ।
देवदत्तस्य देवर्षे तन्द्रीकर्मेति चेरितम् ॥ ४० ॥
धनंजयस्य शोफादि सर्वकर्म प्रकीर्तितम् ।
एवं वायुगतिः सर्वा कर्म तेषां च कीर्तितम् ॥ ४१ ॥

नाडीशोधनविधिः

ततश्च सर्वनाडीनां कुर्याच्छोधनमात्मवान् ।

तच्छोधनप्रकारः

इडया वायुमापूर्य बाह्यं षोडशमात्रकैः ॥ ४२ ॥
[1]धारयन्नुदरे वायुं मात्रा द्वात्रिंशतं ततः ।
स्मरेत् स्वमण्डले वह्निं तत्र रेफं सबिन्दुकम् ॥ ४३ ॥
नासाग्रे शशिनो बिम्बं स्मरेत् पीयूषवर्षिणम् ।
स्मृत्वा चन्द्रे वकारं च सबिन्दुं रेचयेत् ततः ॥ ४४ ॥
पुनः पिङ्गलयापूर्य यथोक्तेनैव वर्त्मना ।
[2]धृत्वा च मातरिश्वानमिडया रेचयेत् पुनः ॥ ४५ ॥
एवं त्रिसंध्यां त्रिः कृत्वा कुर्यान्नित्यं समाहितः ।

[1] धारयेदुदरे D. [2] स्मृत्वा A B.

उत्क्रमेण शोधयतो मासत्रयेण नाडीशुद्धिसिद्धिः

एवं नियमयुक्तस्य [1]कुर्वतः सर्वनाड्यः ॥ ४६ ॥
मासत्रयेण [2]शुद्धाः स्युरिति योगविदो विदुः ।

ततो वायुजयः

ततश्च मरुतां कुर्याद्विजयं देहवर्तिनाम् ॥ ४७ ॥

वायुजयान्मनसः स्थैर्यम्

ततश्च वायवो देहे यत्र यत्र वसन्ति वै ।
तत्र तत्र मनःस्थैर्यं वह्निना सह नारद ॥ ४८ ॥

प्राणायामविधिः

प्राणायामं ततः कुर्यात् सर्वपापप्रणाशनम् ।

शिखादिस्थानेषु मनोः षडक्षरन्यासः

[3]शिखास्थाने नाभिचक्रे हृदयाम्बुरुहे ततः ॥ ४९ ॥
[4]कण्ठकूपे भ्रुवोर्मध्ये जिह्वामूले तथैव च ।
मनोः षडक्षराण्येषु क्रमेणैव विचिन्तयेत् ॥ ५० ॥

प्राणायामप्रकारः

वायुं षोडशमात्राभिरिडयापूर्य चिन्तयेत् ।
हृन्मध्ये परमात्मानं चक्ररूपिणमव्ययम् ॥ ५१ ॥

[1] सर्वतः D.
[2] सिद्धाः D.
[3] शिखि D.
[4] कर्णकूपे B C.

यावच्छक्ति जपेन्मन्त्रमिमं सौदर्शनं स्मरन् ।
पुनः षोडशमात्राभी रेचयेत् पिङ्गलाह्वया[1] ॥ ५२ ॥
अनया पुनरारोप्य धृत्वा चेतरया त्यजेत् ।
पूरणे कुम्भके चैव रेचने प्रणवं जपेत् ॥ ५३ ॥
दश [2]पञ्चाशतं चैव चतुर्दश शतं क्रमात् ।
गायत्रीं यदि वा जप्त्वा कुर्यादुक्तेन वर्त्मना ॥ ५४ ॥
एवं प्रतिदिनं कुर्यात् प्राणायामांस्तु षोडश ।
एते पुनन्ति मासेन महापातकिनं नरम् ॥ ५५ ॥

प्रत्याहारनिरूपणम्

प्रत्याहारं ततः कुर्यादङ्गैः पञ्चभिरन्वितम् ।
स्वभावेनेन्द्रियार्थेषु प्रवृत्तं मानसं बुधैः ॥ ५६ ॥
तद्दोषदर्शनात् तेभ्यः समाहृत्य बलेन तु ।
निवेशनं भगवति प्रत्याहार इति स्मृतः ॥ ५७ ॥

धारणानिरूपणम्

विषयेषु च वैराग्यादभ्यासाद् गुणदर्शनात् ।
परमात्मनि संरोधो मनसो धारणा स्मृता ॥ ५८ ॥

ध्याननिरूपणम्

तदेवं धृतचित्तस्तु चक्ररूपं जनार्दनम् ।
ध्यायीत नियतस्तस्मिन् युञ्जानः प्रथमं मनः ॥ ५९ ॥

[1] ख्यया D. [2] पञ्चशतं B C.

वर्णाश्रमधर्माणां ध्यानेतिकर्तव्यतात्वम्

रमणीये शुचौ देशे विविक्ते सजले वने ।
वर्णाश्रमोचिते धर्मे वर्तमानः प्रसन्नधीः ॥ ६० ॥
शान्तः सर्वगुणोपेतः सममासनमास्थितः ।
ऋजुकायः स्वनासाग्रन्यस्तदृग् भक्तिमान् हरौ ॥६१॥
प्राणायामोत्थितेनैव वायुना साग्निना मुखम् ।
कुण्डल्यास्तु विनिर्भिद्य सुषुम्नामध्यवर्तिना ॥ ६२ ॥
विकास्य हृदयाम्भोजे तदाकाशे [1]शिखास्पदे ।
स्फुरद्वह्निशिखामध्ये चिन्तयेदद्भुताकृतिम् ॥ ६३ ॥

ध्यानालम्बनभूतध्येयस्वरूपनिरूपणम्

पिङ्गाक्षं पिङ्गकेशाढ्यं ज्वलज्ज्वलनतेजसम् ।
दंष्ट्राकरालवदनं भ्रुकुटीभीमदर्शनम् ॥ ६४ ॥
[2]विद्युत्पुञ्जप्रतीकाशैरूर्ध्वकेशैर्विराजितम्[3] ।
विचित्रानन्दमाणिक्यमुक्ताढ्यमुकुटोज्ज्वलम्[4] ॥ ६५ ॥
[5]पूर्णचन्द्रप्रतीकाशमणिताटङ्कमण्डितम् ।
[6]भुजाभिरष्टभिर्युक्तं [7]रत्नाम्बरधरं विभुम् ॥ ६६ ॥
शङ्खचक्रगदाशार्ङ्गमुसलैः परमायुधैः ।

[1] अखिलास्पदे A B C E F.
[2] विद्युतिपङ्ग A E F.
[3] प्रतीकाशकेशपाशविराजितम् D.
[4] सुमुक्तामुकुटोज्ज्वलम् A B.
[5] C. Gap from here up to the end of verse 39 in the next chapter.
[6] भुजैरष्टभिरायुक्तं D.
[7] रक्ताम्बर E F.

पाशाङ्कुशाम्बुजैरन्यैरुपेतं परदारुणैः ॥ ६७ ॥
दिव्यमाल्याम्बरधरं दिव्यचन्दनचर्चितम् ।
हारकेयूरकटककाञ्चीमञ्जीरमण्डितम्[1] ॥ ६८ ॥
अन्यैश्च विविधैश्चित्रैर्भूषणैरुपशोभितम् ।
पद्मासनस्थं भक्तानां विश्वेषामभयप्रदम् ॥ ६९ ॥
एवं ध्यायन् विमुच्येत [2]मुक्तः सकलकिल्बिषैः ।

समाधिनिरूपणम्

[3]तदेवं स्मृतिसंतानजनितोत्कर्षणं[4] क्रमात् ॥ ७० ॥
[5]अर्थमात्रावभासं तु समाधिं योगिनो विदुः ।

समाधिनिष्ठस्य महिमानुवर्णनम्

ततः समाधिमास्थाय तन्मयत्वमुपागतः ॥ ७१ ॥
तस्य प्रभावमखिलमश्नुते शक्तिशालिनः ।
अणिमादिगुणाः सर्वे भवन्त्यस्य महात्मनः ॥ ७२ ॥
निःसहायः सपत्नानामनीकानि बहून्यपि ।
हिनस्त्येष यथा चक्रं चक्रं दैतेयरक्षसाम् ॥ ७३ ॥
मनीषितानि सर्वाणि स्वयमस्योपयान्ति वै ।
सिद्धा विद्याधरा यक्षाः कैंकर्यं तस्य कुर्वते ॥ ७४ ॥
[6]देवाश्च ऋषयः सर्वे गन्धर्वाप्सरसां गणाः[7] ।

1 काञ्चीगुणसमन्वितम् A B E.
2 युक्तः
3 तदेव D.
4 ज्वलितोत्कर्षणं D.
5 अत्र मन्त्रावभासं तु A B.
6 देवा महर्षयः E.
7 सर्वे चाप्सरसां गणाः A B.

तदाज्ञाकारिणः सर्वे पिशाचोरगराक्षसाः ॥ ७५ ॥

निखिलभुवनजन्मस्थेमभङ्गैकहेतु-
र्भवति सकलवेत्ता सर्वदृक् सर्वशक्तिः ।
अभिमतबहुरूपो दैत्यरक्षांसि निघ्नन्
परिहृतपरिवारो वर्तते पूर्णकामः ॥ ७६ ॥

इति श्रीपाञ्चरात्रे तन्त्ररहस्ये अहिर्बुध्न्यसंहितायां नाडीशुद्धिवायुजय-
योगाङ्गप्राणायामादिनिरूपणं नाम द्वात्रिंशोऽध्यायः

आदितः श्लोकाः १९४८

मणिशेखरोपाख्यानवर्णनं नाम त्रयस्त्रिंशोऽध्यायः

ध्यातं सकृद्भवानेककोट्यघौघं हरत्यरम्।
सुदर्शनस्य तद् दिव्यं भर्गो देवस्य धीमहि ॥

उक्तार्थानुवादः

**नारदः—**

भगवन् कथितं सर्वं स्वरूपं च गुणास्तथा।
परिवारास्तथा मन्त्राः शस्त्रैरस्त्रैश्च दैवतैः ॥ १ ॥
शक्तिभिर्मण्डलैश्चित्रैः पद्मैर्बहुविधैरपि।
एतैर्विशिष्टमाख्यातं यन्त्ररूपमनुत्तमम् ॥ २ ॥
सर्वेषामेव जन्तूनां वर्णानां परमेश्वर।
क्षत्रियस्य विशेषेण रक्षार्थं यन्त्रमीरितम् ॥ ३ ॥

सुदर्शनप्रभावविषयकस्त्रिधा प्रश्नः

एतस्य यन्त्रराजस्य महिमा कथितः पुरा।
प्रभावश्चक्ररूपस्य देवस्य किमयं स्मृतः ॥ ४ ॥
सुदर्शननृसिंहस्य किमु किं परिवारजः।
तमिमं संशयं छिन्धि सर्वज्ञोऽसि यतः प्रभो ॥ ५ ॥

विस्तरेण तदुत्तरकथनारम्भः

**अहिर्बुध्न्यः—**

**सुदर्शनप्रभावोऽयं संक्षेपात् कथितो मया ।**
**विस्तारमस्य देवर्षे कथ्यमानमिमं शृणु ॥ ६ ॥**
**सा भूमानं प्रति प्रायो महतां परिवारता ।**
**न चेद्भूमास्य नास्त्येव परिवार्यत्वसंभवः ॥ ७ ॥**

सर्वस्यापि सुदर्शनात्मकत्वम्

**ततश्चक्रमयं सर्वं जगत् स्थावरजङ्गमम् ।**

सुदर्शनस्यैव कालचक्रात्मकत्वम्

**चक्रात्मानमनाद्यन्तं कालं प्रथमतः शृणु ॥ ८ ॥**

कालचक्रस्वरूपनिरूपणम्

**त्रिनाभियुक्तं षण्णेमि पञ्चारं चक्रमव्ययम् ।**
**संवत्सरमयं यत् तत् कालचक्रमिति स्मृतम् ॥ ९ ॥**

सर्वस्यापि कालचक्रवशवर्तित्वम्

**तद्वशे वर्तते [1]विश्वं चेतनाचेतनात्मकम् ।**

परमात्मा कालचक्रप्रवर्तकः

**परिवर्तयते देवस्तदेतच्चक्ररूपधृत् ॥ १० ॥**

जगच्चक्रनिरूपणम्

**अव्यक्तादिविशेषान्ततत्त्वरूपैररैर्वृतम् ।**

[1] नित्यम् E.

चतुर्विंशतिसंख्याकैः[1] पुरुषात्मकनेमियुक् ॥ ११ ॥

परमात्मनस्तत्प्रेरकत्वम्

जगच्चक्रमिति ख्यातं तच्च प्रेरयति स्वयम् ।

परमात्मनो नाभिचक्रप्रेरकत्वम्

स्थीयते द्वादशारेण नाभिचक्रेण देहिनः ॥ १२ ॥
शरीरं तच्च तेनैव प्रेर्यते चक्ररूपिणा ।

परमात्मनः सर्वप्रेरकत्वनिगमनम्

अतः प्रेरयिता देवः समस्तस्य जनार्दनः ॥ १३ ॥
सुदर्शनवपुः श्रीमाननादिप्रभवाप्ययः ।

तस्यैव जगत्सर्गस्थितिसंहारहेतुत्वम्

ज्ञानस्वरूपो भगवान् पूर्णषाड्गुण्यविग्रहः ॥ १४ ॥
स [2]एव सर्वभूतानां स्रष्टा पालयितान्तकः ।

तस्यैव शिवरूपधरस्य शैवैराराध्यत्वम्

स एव शिवरूपेण शैवैराराध्यते प्रभुः ॥ १५ ॥

तस्यैव ब्रह्मरूपेण जगत्स्रष्टृत्वम्

स एव ब्रह्मरूपेण सृजत्येतच्चराचरम् ।

तस्यैव स्वांशरूपेण जगत्पालकत्वम्

स एव पालयत्येतद् विष्णुर्भूत्वा जनार्दनः ॥ १६ ॥

[1] संख्यातैः E F.

[2] एष B C E F.

तस्यैव रुद्ररूपेण संहर्तृत्वम्

**स एव रुद्ररूपेण संहरत्यखिलं जगत् ।**

तस्यैव बुद्धरूपत्वम्

**बुद्धात्मना च बौद्धानां स एव जगति स्थितः ॥ १७ ॥**

तस्यैव दिगम्बररूपत्वम्

**स एव [1]शाम्बराणां च निरावरणरूपधृत् ।**

तस्यैव जिनरूपत्वम्

**स एव चार्वाकमते जिनेश्वरवपुर्धरः ॥ १८ ॥**

तस्यैव यज्ञपुरुषरूपत्वम्

**[2]स एव याज्ञिकानां च यज्ञपूरुषसंज्ञकः ।**
**मीमांसकैः स एवायमुपास्यत्वेन चोद्यते ॥ १९ ॥**

कापिलमते तस्यैव पुरुषरूपत्वम्

**कापिलैः पुरुषत्वेन स एवाख्यायते विभुः ।**

सर्वस्वरूपत्वात् तस्यैव सर्वफलप्रदत्वम्

**उपास्यत्वेन ये प्राहुर्यं तत्तद्वपुर्धरः ॥ २० ॥**
**तेषां मनीषितं सर्वं स एवाशु प्रयच्छति ।**

[1] शम्बराणां D.

[2] A B E F omit four lines from here.

देवादिरूपधारणादपि चक्ररूपधारणं भगवतः प्रियतमम्

एतेषामेव देवानां स्वतनूनां जनार्दनः ॥ २१ ॥
परं प्रीणाति भगवांश्चक्ररूपधरो हरिः ।

तत्र हेतुनिरूपणम्

स्वसमाश्रितरक्षायां परेषां च निबर्हणे ॥ २२ ॥
इदमेव वपुर्धत्ते सुदर्शनमयं हरिः ।
रहस्यमेतत् कथितं भक्तोऽसीति तपोधन ॥ २३ ॥

तत्रेतिहासोदाहरणम्

पुरावृत्तं सुरमुने शृणुष्व गदतो मम ।
दुर्धर्षो नाम राजर्षिर्धार्मिको दृढविक्रमः ॥ २४ ॥
प्रमगन्दसुतः श्रीमान्नैचाशाखपुरे वसन् ।
धर्मतः पालयामास सप्तद्वीपवतीं महीम् ॥ २५ ॥
वत्सला नाम तस्याभून्महिषी वरवर्णिनी ।
सा तस्य जनयामास मणिशेखरमात्मजम् ॥ २६ ॥
सोऽप्यवस्थामतिक्रम्य प्रथमां मणिशेखरः ।
रमणीयाकृतिः शूरः प्राप्तविद्यः परंतपः ॥ २७ ॥
[1]संप्राप्तयौवनः श्रीमान् प्राचीं भार्यामविन्दत ।
सर्वलोकाधिपत्यार्हमेनं दुर्धर्षणः सुतम् ॥ २८ ॥
निधाय राज्ये तत्रैव जगाम तपसे वनम् ।

1 संप्राप्तविषयः E.

पितेव पालयामास स समुद्रवतीं महीम् ॥ २९ ॥
प्राच्यां पुत्राः समभवंस्तस्य सप्त महात्मनः ।
पालयत्यवनीं तस्मिन् निखिलां [1]मणिशेखरे ॥ ३० ॥
तस्मिन् काले समभवत् सर्वप्राणिभयंकरः ।
विकटाक्ष इति ख्यातो ब्रह्मदत्तवरो बली ॥ ३१ ॥
महासुरेण तेनैव पीडिता सकला मही ।
तत्पुत्रैस्तस्य पौत्रैश्च प्रपौत्रैः पूरिता मही ॥ ३२ ॥
तेऽसुराः सर्वभूतानि पीडयन्ति स्म [2]भीषणाः ।
विकटाक्षसमाज्ञप्ता भीमरूपाः सहस्रशः ॥ ३३ ॥
कांश्चिद्विद्रावयन्ति स्म कांश्चिज्जघ्नुस्तरस्विनः[3] ।
द्विजातीनां मुनिश्रेष्ठ [4]यज्ञव्यासेधमाचरन् ॥ ३४ ॥
सर्वेषामेव वर्णानां तत्तदाश्रमवासिनाम् ।
अबाधिषत कर्माणि विहितानि यथातथम् ॥ ३५ ॥
पृथिव्यां यानि रत्नानि [5]धनानि विपुलानि च ।
स्वस्मै प्रदापयामास विकटाक्षो महासुरः ॥ ३६ ॥
ततः संपीडिताः सर्वाः प्रजास्तेन दुरात्मना ।
व्यजिज्ञपंस्तद् वृत्तान्तं मणिशेखरभूभुजे ॥ ३७ ॥
क्रोधेन महताविष्टो राजा राजीवलोचनः ।

[1] मणिशेखरः A B E F.
[2] भीषणम् A B.
[3] तपस्विनः E F.
[4] यज्ञस्यासेध D.
[5] साधनानि बलानि च B C E F.

अभियोद्धुं मनश्चक्रे विकटाक्षं महासुरम् ॥ ३८ ॥
समानीय ततः सर्वान् सैनिकान् समनह्यत ।
तस्य संनाहमालोक्य मन्त्रिणस्तस्य संगताः ॥ ३९ ॥
इदमूचुरवध्यत्वं तस्य सेनाभियोगतः ।
पुरा दुरात्मावृणुत तपःसंतोषिताद्विधेः ॥ ४० ॥
ये [1]मामभिमुखायाताः शत्रवस्तैरवध्यताम्[2] ।
एवमस्त्विति तेनोक्ते विकटाक्षोऽतिदर्पितः ॥ ४१ ॥
ततः [3]प्रभृत्यजय्योऽभूच्छत्रुभिः संमुखागतैः ।
तस्मात् त्वमपि संनाहमुपसंहर तं प्रति ॥ ४२ ॥
ततः स शुश्रुवान् वाक्यं मन्त्रिभिः समुदीरितम् ।
ततः संग्रामसंनाहाद् विरराम महीपतिः ॥ ४३ ॥
ततः क्रतुं समाहूय पुरोधसमनागसम् ।
मन्त्रयामास नृपतिस्तेन मन्त्रविदा समम् ॥ ४४ ॥
विकटाक्षस्य वृत्तान्तं सर्वमाख्याय तत्त्वतः ।
परैरजय्यतां[4] चास्य युद्धे संमुखवर्तिभिः ॥ ४५ ॥
येनोपायेन भगवन् जेष्यामस्तं दुरासदम् ।
ब्रूहि तं सकलाः स्वस्था भवेयुर्मामिकाः प्रजाः ॥ ४६ ॥
एवमुक्तस्तदा तेन भूभुजा स पुरोहितः ।
चिन्तयित्वा चिरायैतदुवाच मणिशेखरम् ॥ ४७ ॥

[1] ममाभि D.
[2] तैरजेयताम् D.
[3] प्रभृत्यजय्योऽयं शत्रुभिः D.
[4] असह्यतां B C.

[1]सत्यं न शक्यते जेतुं [2]युद्धे स वरदर्पितः ।
भगवन्तमृते विष्णुं शङ्खचक्रगदाधरम् ॥ ४८ ॥
नीलजीमूतसंकाशं पुण्डरीकायतेक्षणम् ।
अप्रमेयं जगन्नाथमाश्रितार्तिविनाशनम् ॥ ४९ ॥
उत्तुङ्गमङ्गलगुणं दैत्यचक्रप्रमर्दनम् ।
नास्त्युपायान्तरं लोके तत्समं जगतीपते ॥ ५० ॥
अतस्तं शरणं गच्छ सर्वभावेन भूपते ।
चक्ररूपधरं देवं भक्तरक्षणदीक्षितम् ॥ ५१ ॥
तत्प्राप्त्युपायं जानाति दुर्वासा मुनिसत्तमः ।
[3]तत्प्रसादात् तमसुरं संहर्तुं सकलं क्षमम् ॥ ५२ ॥
तमृषिं सर्वभूतानां [4]भीषणं गच्छ सांप्रतम् ।
एवमेवेति निश्चित्य राजा परमधार्मिकः ॥ ५३ ॥
निर्जगाम पुरात् तस्मात् सार्धं तेन पुरोधसा ।
हिमवच्छिखरे रम्ये तपस्यन्तं महामुनिम् ॥ ५४ ॥
वसानं वल्कले शुभ्रे शुभ्रयज्ञोपवीतिनम् ।
जटाजिनधरं शान्तं ज्वलत्पावकसंनिभम् ॥ ५५ ॥
तं तथावस्थितं राजा जगाम सपुरोहितः ।
स मुनिस्तौ मुनिश्रेष्ठो दृष्ट्वा राजपुरोहितौ ॥ ५६ ॥
तौ समभ्यर्च्य विधिना स्वागतं व्याजहार ह ।

[1] सोऽयं A B C E F.
[2] युद्धेषु वर A B C E F.
[3] तत्प्रसादात् सुरमुने D.
[4] भूषणम् A B C.

इमं देशमनुप्राप्तौ किमर्थं वनगोचरम् ॥ ५७ ॥
भवन्तौ लक्षये साक्षाद् ब्रह्मक्षत्रे सविग्रहे ।
प्रमगन्दसुतं वीर जाने त्वां मणिशेखरम् ॥ ५८ ॥
[1]सप्तद्वीपवती पृथ्वी तव वश्येति शुश्रुम ।
सर्वेष्वङ्गादिधर्मेषु भवतः किमनामयम् ॥ ५९ ॥
प्रजाः पालयसे सर्वाः स्वधर्मस्था महीपते ।
क्रतुं पुरोहितं लब्ध्वा भवतः किं न [2]सेत्स्यति ॥ ६० ॥
अनूचानो मुनिः श्रेयान् सर्वेषां च [3]तपस्विनाम् ।
शान्तो दान्तः शुचिः श्रीमान् सत्यवादी दृढव्रतः ॥
धर्मज्ञः सर्वशास्त्रज्ञः सर्वकर्मसु कोविदः ।
[4]कर्मठः शीलसंपन्नो यायजूको निरामयः ॥ ६२ ॥
कृपानुरक्तः सर्वेषु समबुद्धिः समाधिमान् ।
दैष्टिकः परमोदारो धृतिमान् राजसत्कृतः ॥ ६३ ॥
सर्वैरनुमतः शश्वद् भक्तिमान् पुरुषोत्तमे ।
षण्णां समयधर्माणामभिज्ञो नयकोविदः ॥ ६४ ॥
दयालुरभिजातश्च साधकः सर्वमन्त्रवित् ।
अन्यैश्च सद्गुणैर्युक्तः पुरोहित इति स्मृतः ॥ ६५ ॥
ईदृशोऽयं क्रतुः साक्षाद् बृहस्पतिरिवापरः ।
अनेन सर्वकार्याणि कुरुष्व मणिशेखर ॥ ६६ ॥

[1] C omits six verses from here.
[2] भेत्स्यति A B D.
[3] मनस्विनाम् D.
[4] धर्मण्यः A B E F.

तथापि कैश्चिदरिभिः परिभूत इवागतः ।
आख्याहि सर्वं नृपते किमागमनकारणम् ॥ ६७ ॥
एवमुक्त्वा महातेजा विरराम तपोधनः ।
अथ क्रतुर्मुनिश्रेष्ठः प्राह दुर्वाससं प्रति ॥ ६८ ॥
राजकार्यमशेषेण समागमनकारणम् ।
स्वराज्यं विकटाक्षेण पीड्यमानं दुरात्मना ॥ ६९ ॥
बलं महासुरस्यास्य दुर्जयत्वमरातिभिः ।
प्रजापतेर्वरप्राप्तिं तत्संततिविजृम्भणम् ॥ ७० ॥
एवं बहुविधं तस्य चेष्टितं लोकगर्हितम् ।
व्याहृत्य प्रणिपत्यैनमुवाच विनयान्वितः ॥ ७१ ॥
ब्रूहि तस्य जयोपायं [1]त्वामयं शरणं गतः ।
त्वमापदः परित्राहि राजानं धर्मवत्सलम् ॥ ७२ ॥
परित्रातान्यनेनैव भुवनानि [2]तपोधन ।
एवमुक्त्वा मुनिवरं प्रणिपत्य पुरः स्थितौ ॥ ७३ ॥
कृपया परया वीक्ष्य षड्वर्णं मन्त्रमुत्तमम् ।
सौदर्शनं तयोः प्रादाच्चतुर्वर्गफलप्रदम् ॥ ७४ ॥
अनेन साधयाभीष्टमेतेनैव पुरोधसा ।
पुरोधा एव राज्ञां हि दृष्टादृष्टार्थसाधकः ॥ ७५ ॥
विशेषेणास्य देवस्य प्रतिष्ठाराधनादिषु ।

[1] त्वामहं D. [2] चतुर्दश B C.

वैगुण्यमस्य तत् सर्वमपराधात् पुरोधसः ॥ ७६ ॥
तथा साद्गुण्यमस्यैव राज्ञः कार्येषु भूपते ।
अन्यैः पौरोधसैः कार्यं कार्यमेतस्य तच्च वै ॥ ७७ ॥
इत्युक्त्वा तौ तदा प्राह पुरावृत्तं महामुनिः ।
वाराहं रूपमास्थाय भगवान् पुरुषोत्तमः ॥ ७८ ॥
उज्जहार भुवं कल्पे वाराहे सलिलात् ततः ।
तदाह परमप्रीता देवं देवी वसुंधरा ॥ ७९ ॥
प्रियार्थमनुरक्तानां सदा भूमण्डले त्वया ।
वर्तितव्यं जगन्नाथ प्रियां तनुमुपेयुषा ॥ ८० ॥
एवमुक्तस्तया देव्या तदा प्रभृति केशवः ।
सालग्रामाह्वये पुण्ये न्यवसन्मण्डले भुवः ॥ ८१ ॥
सुदर्शनवपुः श्रीमान् भगवान् भक्तवत्सलः ।
अद्यापि देशमाहात्म्याद् [1]भक्तानामनुकम्पया ॥ ८२ ॥
भुवः प्रार्थनया तत्र नित्यं संनिहितो हरिः ।
अत्र तप्तं तपो यत् तत् सहस्रगुणितं भवेत् ॥ ८३ ॥
मनुष्याः पशवस्तत्र क्रिमयश्च पतत्रिणः ।
ये मृताः शङ्खचक्राङ्कास्ते भवन्ति न संशयः ॥ ८४ ॥
भगवान् पुण्डरीकाक्षः सुदर्शनवपुर्धरः ।
संनिधत्ते सदा तत्र सन्मङ्गलगुणार्णवः ॥ ८५ ॥
तद्देशवासिनो मर्त्याः सुरास्तिर्यञ्च एव च ।

[1] भूताना A B C E F.

[1]तरवश्चाचलाः सर्वे चक्रमुद्राङ्कितास्तदा ॥ ८६ ॥
सरस्वत्यास्तटे पुण्ये सालग्रामे जनार्दनम् ।
चक्ररूपं समाराध्य पूर्वोक्तेनैव वर्त्मना ॥ ८७ ॥
तत्प्रसादात् [2]सपत्नांस्त्वं जहि दुष्टविचेष्टितान् ।
[3]ततो निष्कण्टकां भूमिं पालयैनां पुरा यथा ॥ ८८ ॥
एवमुक्त्वा मुनिश्रेष्ठो राजानं सपुरोहितम् ।
उपारराम भगवान् दुर्वासा यमिनां वरः ॥ ८९ ॥
ततः प्रणम्य तं राजा पुरोधाश्चापि जग्मतुः ।
जैत्रं विमानमारुह्य नैचाशाखपुरं प्रति ॥ ९० ॥
सालग्रामं ततो गत्वा भगवन्तं जनार्दनम् ।
संभृत्य सर्वसंभारांश्चक्ररूपं जगत्पतिम् ॥ ९१ ॥
पुरोधसैव नृपतिरर्चयामास मन्त्रतः ।
अर्चनेन जपेनैव ध्यानेन च महीपतिः ॥ ९२ ॥
तोषयामास मासेन भक्त्या परमया हरिम् ।
आविर्बभूव स तदा चक्ररूपी महीपतेः ॥ ९३ ॥
गदामुसलशङ्खारिधनुःपाशाङ्कुशाम्बुजान् ।
अष्टाभिर्बाहुभिर्दिव्यैर्बिभ्रत् पिङ्गललोचनः ॥ ९४ ॥
ऊर्ध्वपिङ्गलकेशाढ्यो रक्तवर्णो महाद्युतिः ।
दंष्ट्राकरालवदनः पङ्कजासनसंश्रितः ॥ ९५ ॥

[1] तरवश्च शिलाः सर्वे D. [2] सपत्नान् स्वान् B C.
[3] निष्कण्टकामिमां भूमिं पालयेथाः पुरा यथा A B C E F.

रक्ताम्बरधरो हृष्टः सर्वभूषणभूषितः ।
दिव्यमालाधरोरस्कः[1] सस्मितं समुदैक्षत ॥ ९६ ॥
समुदियाय ततो हरिवक्षसः
[2]प्रतिहताखिललोकविलोचनम् ।
वलयिताचिररोचिरिवाम्बरात्
परमचक्रमथैन्द्रमतिद्युति ॥ ९७ ॥
प्रथममेकमथो दश तच्छतं
[3]दशशतक्रमतो नियुतायुते ।
भवदथो बहुधा सकलं नभः
कलितचक्रमभूदतिभीषणम् ॥ ९८ ॥
युगपद् विकटाक्षदानवं विनिहत्याखिलबान्धवैः सह ।
तदिहाविषयं व्यतिष्ठत [4]क्षणमाप्लुत्य ययौ [5]सुदर्शनः ॥
शशास पृथ्वीं ससमुद्रकाननां
जिताखिलद्वीपवतीं सपत्तनाम् ।
यथा शचीशस्त्रिदिवं सदैवतं
पवित्रकीर्तिर्मणिशेखरस्तथा ॥ १०० ॥

इति श्रीपाञ्चरात्रे तन्त्ररहस्ये अहिर्बुध्न्यसंहितायां मणिशेखरोपाख्यान-
वर्णनं नाम त्रयस्त्रिंशोऽध्यायः

आदितः श्लोकाः २०४८

[1] धरः स्वोरः D.
[2] प्रमुदिता A B C E F.
[3] दशशतं तदथो D.
[4] क्षत A B C E F.
[5] सुदर्शनम् D.

ध्यातं सकृद्भवानेककोट्यघौघं हरत्यरम् ।
सुदर्शनस्य तद् दिव्यं भर्गो देवस्य धीमहि ॥

ब्रह्मास्त्रादिमन्त्रस्वरूपप्रश्नः

**नारदः—**

भगवन् सर्वधर्मज्ञ सर्वलोकनमस्कृत ।
उक्तं चक्राद्विनिष्क्रान्तमस्त्रजातमिह प्रभो ॥ १ ॥
तेषां [1]स्वरूपं मन्त्राणां सर्वेषां वक्तुमर्हसि ।
विना त्वां [2]न हि पश्यामि वेत्तारं कमपीश्वर ॥ २ ॥

तदुत्तरकथनाय तेषां गुह्यतमत्वाख्यानम्

**अहिर्बुध्न्यः—**

महर्षे यत् त्वया पृष्टमेतद् गुह्यतमं परम् ।
सुदुर्लभमनाख्येयं कस्मैचित् सर्वसाधकम् ॥ ३ ॥
तथापि तव वक्ष्यामि भक्तोऽसीति महामुने ।
त्वयाप्येतन्न दातव्यं सुरासुरसमर्चितम्[3] ॥ ४ ॥

[1] स्वरूपमस्त्राणां D. [2] नेह A B C E F.
[3] नमस्कृतम् A B C.

१. ब्रह्मास्त्रम्

[1]फान्तं वह्निसमायुक्तं [2]व्योम हालासमन्वितम् ।
मेषद्वयं [3]दन्तयुतं हालाहलमतः परम् ॥ ५ ॥
घनाद्यं वायुपूर्वं च दन्तयुक्तमथान्तिमम् ।
सरसं चर्क्षपर्यायं [4]भान्तं भृगुमतः परम् ॥ ६ ॥
अम्बरं वायुसंयुक्तमरिमर्दनमप्यतः ।
प्रदीप्तमथ वक्तव्यं परमं च पदं ततः ॥ ७ ॥
तत्ते पदे प्रयोक्तव्ये गायत्र्या मध्यमं ततः ।
पदत्रयं प्रयोक्तव्यमेतद् ब्रह्मास्त्रमीरितम् ॥ ८ ॥

२. दण्डचक्रम्

जीवः [5]पञ्चमवर्गादिश्चतुर्थाद्योऽन्तिमान्वितः ।
भृगुः सदीर्घो [6]दण्डाद्यो मेषो यष्टयपराह्वयः ॥ ९ ॥
आत्मने च पदं तत्र चक्रायेति पदं ततः ।
वर्मान्त एष मन्त्रस्तु दण्डचक्रमितीष्यते[7] ॥ १० ॥

३. कालचक्रम्

[8]वारुणं मायया युक्तं वान्तं वारुणसंयुतम् ।

[1] वान्तं D.
[2] व्योम्ना कालसमन्वितम् D.
[3] द्वन्द्वयुतं A B C; दन्तयुगं E.
[4] भ्रान्तं A B C.
[5] पञ्चमवर्गाद्यं D.
[6] दन्ताद्याः D.
[7] चक्र इतीष्यते A B C E F.
[8] वरुणम् D.

यूपान्तं वह्निना युक्तं मोऽथ साग्निरथात्रियुक्[1] ॥
[2]धान्तं कालात्मनेत्येतच्चक्रायेति[3] पदं ततः ।
फडन्त एष मन्त्रस्तु [4]कालचक्रः [5]प्रकीर्तितः ॥ १२ ॥

४. धर्मचक्रम्

मोन यक्राच नेत्मर्मा तथा ध नमयेति च ।
निलखीत्यपिचाकारो व्युत्क्रमेण [6]प्रदृश्यते ॥ १३ ॥
धर्मचक्रमिमं मन्त्रं विदुः पूर्वं महर्षयः ।

५. विष्णुचक्रम्

तारपूर्वं च हृदयं भगाद्यन्तौ वनादिमः ॥ १४ ॥
चण्डीशयुक्त आषाढस्तीव्रतेजस इत्यपि ।
पर्यायं लक्षसंख्याया आरेति च पदं ततः ॥ १५ ॥
परमत्र प्रयोक्तव्यं भिन्धीति च पदं ततः ।
भीषयेत्यपि वक्तव्यं विष्णुचक्रमिदं विदुः ॥ १६ ॥

६. इन्द्रचक्रम्

यषशो कं तथा नीवानदा वज्रपिरूमहि ।
मिन्नेलज्वेति तारं च इन्द्रचक्रमिदं[7] स्मृतम् ॥ १७ ॥

७. वज्रास्त्रम्

तारं चतुर्मुखः [8]स्वङ्गनाथवान् दीर्घसंयुतः[9] ।

[1] रथाग्नियुक् A B C. [2] सान्तं D.
[3] एकचक्रायेति B C. [4] कालचक्रं B C E F.
[5] प्रकीर्तितम् B C E F; प्रवर्तितः D. [6] प्रदर्श्यते D E.
[7] चक्रमिति D. [8] स्वङ्गं D. [9] संयुतम् D.

पिनाकी दीर्घसंयुक्तो जलाद्यं मायि सोमराट् ॥ १८ ॥
फलान्तं भीषणपदं दम्भोले इत्यपि क्रमात् ।
[1]वर्मास्त्रयुक्तं विज्ञेयं वज्रास्त्रमिदमुत्तमम्[2] ॥ १९ ॥

८. त्रिशूलम्

हृत्पूर्वं वह्निमायायुगाषाढो मायया बकः ।
वह्निर्भृगुः सचण्डीशः प्रयोक्तव्यस्ततः परम् ॥ २० ॥
अथ शूलवरायेति भीमरूपपदं तथा ।
दारयेति पदं तत्र मारयेति पदं ततः ॥ २१ ॥
भीषयेति शिरोऽन्तं च त्रिशूलमिदमीरितम् ।

९. ब्रह्मशिरोऽस्त्रम्

क्रोधी दण्डी च चण्डीशवीरान्तं वृश्चिकादिमम् ॥२२॥
आषाढयुक् [3]सचण्डीशो हुं फट् ब्रह्मशिरः स्मृतम् ।

१०. ऐषीकास्त्रम्

हास्वा पक्षि यवद्रावि न्यंसैरप मरेति च ॥ २३ ॥
[4]पकारं [5]व्युत्क्रमेणेदमैषीकं परमं स्मृतम् ।

११. मोदकी

भृगुः क्रोधी पिनाकी च सानन्तो मित्र इत्यपि ॥ २४ ॥

[1] वर्णास्त्र D. [2] मीरितम् A B C.
[3] सझण्टीशो D. [4] पकारात् A B; वकारम् B C; सतारम् D.
[5] व्युत्क्रमेणैवमैषीकं A B C.

संतापनान्ते माया स्यान्मोदकान्ते च तां न्यसेत्।
कवचास्त्रयुतो मन्त्रो मोदकी स्याद् गदाह्वया[1] ॥ २५ ॥

१२. शिखरी

लोहितश्च भुजंगेशो भृगुर्भौतिकसंयुतः।
मुण्डः सवाली खड्गीशो दीर्घयुक्तश्च पावकः ॥ २६ ॥
उमेशो मायया युक्तः शिखरीति पदं ततः।
ततो भेदिनि फट् [2]चैव शिखरी स्याद् गदाह्वया[3] ॥२७॥

१३. धर्मपाशास्त्रम्

वप्रान्तमाद्यं [4]चण्डस्य मण्डपे मध्यमं ततः।
दुर्वृत्तेति पदं तत्र [5]गजपर्यायमप्युत ॥ २८ ॥
द्विरावृत्तं बन्धयेति धर्मपाशमिदं विदुः।

१४. कालपाशास्त्रम्

अत्रिर्मायान्वितः श्वेतः ससोमेशोऽथ पावकः ॥ २९ ॥
षष्ठस्वरसमायुक्तो लोहितश्च ततः क्रमात्।
विष्टम्भयेति च पदं द्विरावृत्तमतः परम् ॥ ३० ॥
वर्मान्त एष मन्त्रस्तु कालपाश इतीरितः।

१५. वरुणपाशास्त्रम्

तुन्दिलेति पदं पूर्वं सर्वेति च पदं ततः ॥ ३१ ॥

[1] गदाह्वये A B C; गदान्वये D.
[2] चैष A B C.
[3] ह्वये A B C; यये D.
[4] चन्द्रस्य B C E F.
[5] जगपर्यायमप्युत D.

वारणेति ततो घोररूपेति च पदं क्रमात् ।
वर्म फट् चेति मन्त्रोऽयं वारुणं पाशमुत्तमम् ॥ ३२ ॥

१६. आद्योऽशनिः

लोहितश्चैव वह्निश्च कूर्मः साषाढकं विषम् ।
भारभूतियुतः क्रोधी ततश्च मतिपश्चिमः ॥ ३३ ॥
अथ हस्तापरं नाम शोषयेति द्विरुच्चरेत् ।
अशनिद्वितयादाद्यमिमं मन्त्रं विदुर्बुधाः ॥ ३४ ॥

१७. अन्योऽशनिः

यषभी [1]णरदानोमरप इत्यपरोऽशनिः ।

१८. पैनाकास्त्रम्

अमरेशोऽथ [2]खान्तोऽग्निसंयुक्तो दण्ड इत्यपि ॥ ३५ ॥
अङ्कुशो भिन्धि भिन्धीति पैनाकममितद्युति ।

१९. नारायणास्त्रम्

विष्णुर्दण्डी पुनश्चाद्यो भुजङ्गो दीर्घसंयुतः ॥ ३६ ॥
आषाढो मायया युक्तः सुदर्शनपराह्वयः ।
दारणेति पदं तत्र विश्वमूर्ते इति क्रमात् ॥ ३७ ॥
वर्मास्त्रे च तथा ज्ञेये नारायणमिदं स्मृतम् ।

२०. पाशुपतास्त्रम्

सपिनाकी बको बिन्दुर्महामायासमन्वितः ॥ ३८ ॥

[1] यरदा E F.
[2] कान्तो D.

लोहितोऽथ बकश्चायं पञ्चमस्वरसंयुतः ।
कवचास्त्रे प्रयोक्तव्ये एतत् पाशुपतं स्मृतम् ॥ ३९ ॥

२१. आग्नेयास्त्रम्

तारं ततश्च हृदयं बहुवर्णाय चेत्यथ ।
वृत्तपिङ्गलशब्दं च लोचनेति ततः क्रमात् ॥ ४० ॥
विश्वामित्रपदं चापि तथा प्रशमनेति च ।
दहेति शोषयेत्येवं प्रयुञ्ज्याद् भीषयेति च ॥ ४१ ॥
एतदाग्नेयमत्युग्रं सुरासुरसुपूजितम् ।

२२. दयितास्त्रम्

बकश्च सूक्ष्मश्चण्डश्च भुजङ्गो दीर्घदण्डवान् ॥ ४२ ॥
व्योम खड्गीशसंयुक्तं वाली प्रक्षेपणेति च ।
वर्मान्तमेतं मन्त्रं तु दयितं परिचक्षते ॥ ४३ ॥

२३. वायव्यास्त्रम्

वालिनं दण्डसहितं त्रिरावृत्तं विनिर्दिशेत् ।
यक्षरक्षःपदे चैव पिशाचादीनिति क्रमात् ॥ ४४ ॥
अमित्रांश्चेति च पदं ब्रूयाद् दूरमतः परम् ।
द्विरावृत्तं ततः कुर्यादुत्सारयपदं क्रमात् ॥ ४५ ॥
वायव्यमेतद् विख्यातं त्रैलोक्ये सर्ववन्दितम् ।

२४. हयशिरोऽस्त्रम्

व्योम दण्डयुतं व्योम वाली शीताद्यमक्षरम् ॥ ४६ ॥

श्वेतो वह्नियुतो दीर्घो भुजंगो दीर्घसंयुतः ।
आषाढोऽथ महामायासंयुतो मुण्डमण्डितः[1] ॥ ४७ ॥
कवलीकुर्विति ब्रूयादयं [2]हयशिरोमनुः ।

२५. क्रौञ्चास्त्रम्

नपन्तासरपेत्येष फडन्तः क्रौञ्च ईरितः ॥ ४८ ॥

२६. प्रथमा शक्तिः

णिरदाविरप तैंमूप्रदी व्युत्क्रमतो मनुः ।
वर्मान्त एष शक्तिभ्यामाद्यः सर्वारिभीषणः ॥ ४९ ॥

२७. द्वितीया शक्तिः

नेसेतप्रो णिंककुशं तैंमूज्रव इतीरितः।
व्युत्क्रमेण हुमन्तोऽयं शक्तिभ्यामपरो मनुः ॥ ५० ॥

२८. कङ्कालास्त्रम्

शिवोत्तमः सबिन्दुश्च क्रोधी [3]दीर्घान्वितोऽनलः ।
भान्तो दीर्घसमायुक्तो वाली फडिति [4]चान्ततः ॥५१॥
कङ्काल एष कथितो मन्त्रः सर्वभयंकरः ।

२९. मुसलास्त्रम्

चण्डाद्यन्तौ क्रमान्न्यस्य रूपाद्यन्तौ ततः परम् ॥५२॥

[1] मुण्डितः A B; पण्डितः B C; पिण्डितः D. [2] हयशिरा मनुः D.
[3] दीर्घादिकोऽपरः D. [4] वान्ततः D.

आवर्तयेद् घातयेति तदेतन्मुसलं स्मृतम् ।

३०. कापालास्त्रम्

चण्डो भुजङ्गश्चात्रिश्च बको वह्निसमायुतः ॥ ५३ ॥
मुण्डो द्विगण्डो मायी मा मेषद्वयमतः परम् ।
खड्गीशो भौतिकयुतो वह्निश्चण्डीशसंयुतः ॥ ५४ ॥
अस्त्रान्त एष मन्त्रः स्यात् कापालमतिभीषणम् ।

३१. कङ्कणी

अत्रिः सदीर्घो वह्निश्च मायया तु समन्वितः ॥ ५५ ॥
आषाढोऽनन्तसहितो वह्निर्दीर्घसमन्वितः ।
आद्यश्चतुर्थवर्गस्य चण्डीशेन समन्वितः ॥ ५६ ॥
[1]दमयेति द्विरावृत्त्या मनुरेष तु [2]कङ्कणी ।

३२. वैद्याधरास्त्रम्

हृदयं प्रथमं न्यस्य भगेति च पदं ततः ॥ ५७ ॥
वतीत्येतदपि ब्रूयान्महामाये इति क्रमात् ।
कवचास्त्रे प्रयोक्तव्ये एतद्वैद्याधरं परम् ॥ ५८ ॥

३३. असिरक्तास्त्रम्

[3]खण्डिताद्यरिपर्यायं पदं शक्ते इति क्रमात् ।
[4]वर्मान्तमसिरक्ताख्यमस्त्रमेतदुदाहृतम् ॥ ५९ ॥

1 गमयेति D.
2 कङ्कणिः D.
3 खण्डितेत्यरिपर्यायं A B C.
4 वर्मान्तमसिरक्तारव्यं मन्त्रमे A B C.

३४. गान्धर्वास्त्रम्

क्रोधी पिनाकिसंयुक्तो दण्डभौतिकसंयुतः ।
मोहयेति द्विरभ्यस्य मनुर्गान्धर्व इष्यते ॥ ६० ॥

३५. प्रस्थापनास्त्रम्

पश्चान्तकः सदण्डः स्यादथो गणपते अपि ।
लोकेत्यनन्तरं ब्रूयादमित्रानित्यनन्तरम् ॥ ६१ ॥
प्रस्थापयेत्यथाभ्यस्य [1]प्रस्थापनमुदाहृतम् ।

३६. प्रशमनास्त्रम्

लोहितः सानलो जीवो महामायासमन्वितः ॥ ६२ ॥
अत्रिर्द्विरण्डः[2] पश्चारिर्लान्तो मायी तलादिमः ।
मायारूपिणि चेत्येतत् पदमन्ते प्रयोजयेत् ॥ ६३ ॥
एतत् प्रशमनं नाम सर्वशत्रुनिवारणम् ।

३७. सौर्यास्त्रम्

तारं ततश्च हृदयं परायेति पदं ततः ॥ ६४ ॥
परेति पदमुच्चार्य तेजःपदमनन्तरम् ।
निबर्हणाय चेत्येतत् फडन्तं [3]सौर्यमुच्यते ॥ ६५ ॥

३८. दर्पणास्त्रम्

अत्रिर्दण्डी च खड्गीशो मायया च समन्वितः ।

[1] प्रस्वापनम् A B C E.
[2] द्विरण्डा पण्डारी D.
[3] सौरमुच्यते A F.

४३. कंदर्पदयितास्त्रम्

चलगण्डमथो व्योम सामराधीश्वरं ततः ।
महाकालः सदन्तः स्याद् व्योम मेषस्ततः परम् ॥७४॥
मायाविन्निति च ब्रूयादस्त्रायेति पदं ततः ।
फडन्त एष मन्त्रस्तु कंदर्पदयितं स्मृतम् ॥ ७५ ॥

४४. पैशाचास्त्रम्

निह्मोरप इत्येष व्युत्क्रान्तः सशिरोमनुः ।
पैशाचमिदमाख्यातमखिलारिविमर्दनम् ॥ ७६ ॥

४५. तामसास्त्रम्

अजेश्वरं त्रिरावृत्तं सदण्डं प्रथमं पठेत् ।
तिमिरेति पदं ब्रूयाद्धस्तपर्यायमेव च ॥ ७७ ॥
प्रतिसैन्यं पदं पश्चात् संवृणिवति समभ्यसेत् ।
एतत् तामसमित्युक्तमस्त्रं सर्वारिमोहनम् ॥ ७८ ॥

४६. सौमनास्त्रम्

विष्णुर्दन्ती महाकालः शिवोत्तममतः परम् ।
शक्ते इति पदं पश्चात् परस्तम्भन इत्यतः ॥ ७९ ॥
वर्मास्त्रे च ततो ब्रूयादेतत् सौमनमुच्यते ।

४७. संवर्तास्त्रम्

भुजङ्गो दण्डवान् पश्चाद्रिपूनिति पदं वदेत् ॥ ८० ॥

क्षिपेति द्विः शिरोऽन्तं स्यात् संवर्तमिदमुत्तमम् ।

४८. मौसलास्त्रम्

तिग्मेति वृत्ते इति च पदे पूर्वं पठेत् क्रमात् ॥ ८१ ॥
भिन्धीति च द्विरभ्यस्तं शिरोऽन्तं मौसलं स्मृतम् ।

४९. सत्यास्त्रम्

तारं प्रणामपर्यायं परमार्थाय इत्यथ ॥ ८२ ॥
रिपूनिति पदं ब्रूयाज्जहीत्येतद् द्विरभ्यसेत् ।
सत्यमस्त्रमिदं प्रोक्तं सर्वशत्रुनिबर्हणम् ॥ ८३ ॥

५०. मायाधरास्त्रम्

तारं ततश्च हृदयं देवायेति पदं वदेत् ।
मायात्मने इति पदं पठित्वा तदनन्तरम् ॥ ८४ ॥
फडन्त एष मन्त्रस्तु मायाधरमुदीरितम् ।

५१. घोरास्त्रम्

शिवोत्तमः सदण्डश्च पुनश्चायं सदन्तकः ॥ ८५ ॥
वह्निस्ततो भुजङ्गः स्यादङ्घ्रीशेन च संयुतः ।
लोहितो दीर्घयुग्वाली चण्डायेति पदं वदेत् ॥ ८६ ॥
शिरोऽन्त एष मन्त्रस्तु घोरमस्त्रमुदीरितम् ।

५२. रत्यस्त्रम्

[1]भृगुरौद्रद्विकं रेफं द्विः कृत्वा प्रादिकान् पुनः ॥ ८७ ॥

[1] D omits ten lines from here.

शिवोत्तमं ससत्यं च भुजङ्गेशस्ततः परम् ।
आषाढोऽमरयुङ्मेषं रत्यस्त्रं च पवित्रकम् ॥ ८८ ॥

९३. अघोरास्त्रम्

चटं वीप्स्य पुनः प्रादिं क्रोधीशं व्योम चाभ्यसेत् ।
वारुणं च तथा कालं द्विर्वामनसबिन्दुकम् ॥ ८९ ॥
मीनमावृत्य [1]मेषं च आषाढं लोहितं पुनः ।
शक्त्याधिकमघोरास्त्रं वर्मास्त्रान्तमुदीरितम् ॥ ९० ॥

९४. सौमास्त्रम्

भृगुं सानुग्रहाधीशं दण्डिनं प्रथमं पठेत् ।
द्विषन्तं पदमुच्चार्य तत उद्वेजयेति च ॥ ९१ ॥
अन्त्यं द्विरभ्यसेदेतत् सौमास्त्रमिदमीरितम् ।

९५. त्वाष्ट्रास्त्रम्

प्रणवं हृदयं पूर्वं भृगुस्तेनैव संयुतः ॥ ९२ ॥
क्रोधी पिनाकी मेषश्च मायया च समन्वितः ।
महाकालद्वयं साग्निदीर्घयुक्तं ततः परम् ॥ ९३ ॥
भारभूतियुगाषाढो मीनो दीर्घसमन्वितः ।
धाम्ने इति पदं ब्रूयात् परायेति पदं ततः ॥ ९४ ॥
एतत् त्वाष्ट्रं समाख्यातं सर्वलोकनमस्कृतम् ।

९६. दारुणास्त्रम्

विष्णुर्दण्डी पुनश्चाद्यो भुजंगो दीर्घसंयुतः ॥ ९५ ॥

[1] मेधां च B C E F.

आषाढो मायया युक्तो ज्वलनो बिन्दुसंयुतः ।
चतुर्मुखश्च क्रोधीशः फडन्तः [1]स्यात्तु दारुणम् ॥ ९६ ॥

९७. भगास्त्रम्

विपक्षादिममध्यान्तान्[2] पठेद् विभजनेति च ।
प्रवृत्तायेति च पदं भगेति तदनन्तरम् ॥ ९७ ॥
आत्मने इति निर्दिश्य भगास्त्रं तत् फडन्तिमम् ।

९८. शीतेष्वस्त्रम्

बकस्त्रिमूर्तिसहित आषाढश्च शिखी ततः ॥ ९८ ॥
पिनाकी खड्गिको मायी लोहितश्च तथोपरि ।
संवर्तकः सदण्डश्च क्षिपेति द्विः पठेत् ततः ॥ ९९ ॥
शिरोऽन्त एष मन्त्रस्तु शीतेषुरभिधीयते ।

९९. मानवास्त्रम्

लोहितश्च भुजंगश्च दीर्घो वाल्यथ लोहितः ॥ १०० ॥
[3]अग्निर्भान्तश्च वाली च सवह्निर्दीर्घसंयुतः ।
अत्रिर्दीर्घसमायुक्तो भेदिने इति च क्रमात् ।
भीमरूपाय चेत्युक्त्वा नमोऽन्तं मानवं स्मृतम् ॥

६०. रौद्रास्त्रम्

दहेति द्विरभ्यस्य पूर्वं प्रचण्ड-
प्रयोगं विधायाथ रूपेति पश्चात् ।

[1] स्यात्तदारुणम् D. [2] मध्यान्तात् B C.
[3] अग्निश्चान्तश्च A B C D F.

ततो रुद्रधाम्ने इति न्यस्य पश्चा-
च्छिरोवृत्तमेतत् परं रौद्रमाहुः ॥ १०२ ॥

६१. प्रस्वापनास्त्रम्

अत्रिस्त्रिमूर्तिसहितोऽथ शिवोत्तमश्च
साग्निर्भृगुस्त्वमरनायकसप्रयुक्तः ।
सुप्त्यन्तिमः करिपदं च ततः प्रयोज्यं
मायात्मिके इति फडन्तमसौ मनुः स्यात् ॥ १०३ ॥
प्रस्वापनं तदिदमाहुरशेषवैरि-
सेनासमस्तपरिमोहनकारि मुख्यम् ।
इत्थं समस्तपरमास्त्रसमुद्धृतिस्तु
तत्त्वान्मया विरचिता परमेष्ठिसूनो ॥ १०४ ॥
तारं सद्योजातमाषाढमन्ते
खड्गेशानं भौतिकेनैव युक्तम् ।
वह्निं मायासंवृतं तत्र चोक्त्वा
हृत्पर्यायं वर्म फट् चान्ततः स्यात् ॥ १०५ ॥

इति श्रीपाञ्चरात्रे तन्त्ररहस्ये अहिर्बुध्न्यसंहितायां ब्रह्मास्त्रादिमन्त्रस्वरूप-
निरूपणं नाम चतुस्त्रिंशोऽध्यायः

आदितः श्लोकाः २१५३

## संहारास्त्रस्वरूपनिरूपणं नाम पञ्चत्रिंशोऽध्यायः

ध्यातं सकृद्भवानेककोट्यघौघं हरत्यरम् ।
सुदर्शनस्य तद् दिव्यं भर्गो देवस्य धीमहि ॥

संहारास्त्रस्वरूपप्रश्नः

**नारदः—**

भगवन् [1]पूर्वमाख्यातं संहारास्त्राण्यशेषतः ।
सुदर्शनस्यापराङ्गान्निर्जग्मुरिति चेश्वर ॥ १ ॥
तेषां स्वरूपविज्ञाने वर्तते मे कुतूहलम् ।
वक्तुमर्हस्यशेषेण [2]यदि सानुग्रहो मयि ॥ २ ॥

तदुत्तरकथनारम्भः

**अहिर्बुध्न्यः—**

तदेतत् परमं गुह्यं पुरा [3]नारायणेरितम् ।
भक्तोऽसीति तव स्नेहाद् वक्ष्यामि शृणु नारद ॥ ३ ॥

१. सत्यवदस्त्रम्

लोहितोऽग्निसमायुक्तः खड्गीशो भारभूतिमान् ।
आषाढयुग्मं मुण्डश्च मायी स्यात् खड्गनायकः ॥ ४ ॥

[1] सम्यगाख्यातम् B C ; सर्वमाख्यातम् E F. [2] तानि D.
[3] नारायणोदितम् E.

साग्न्याषाढयुगं पश्चात् [1]क्रोधीशं निर्दिशेत् ततः।
परमेष्ठिन्निति ब्रूयादथो ऋतमिति क्रमात् ॥ ५ ॥
पिबेति सशिरोमन्त्रः [2]सत्यवानिति विश्रुतः।

२. सत्यकीर्त्यस्त्रम्

तारं ततश्च हृदयं सत्यधाम्न इति क्रमात् ॥ ६ ॥
शमयेति द्विरावृत्तं सत्यकीर्तिरिति स्मृतम्।

३. धृष्टास्त्रम्

अत्रिः सामरनाथश्च साग्निः पश्चान्तकः [3]स्मृतः ॥ ७ ॥
महाकालश्च मज्जा च साग्निश्चोमापतिस्तथा।
प्रसादयेत्यथाभ्यस्तं धृष्टमस्त्रमिदं विदुः ॥ ८ ॥

४. रभसास्त्रम्

क्रोधी पिनाकी मायी स्यात् खड्गी मायासमन्वितः।
अत्रिः पिनाकी मुण्डश्च दीर्घयुक्तो रसस्तथा ॥ ९ ॥
[4]अग्निर्द्विरण्डश्च भृगुर्दीर्घो वाली ततः परम्।
नमोऽन्त एष मन्त्रस्तु रभसः परिकीर्तितः ॥ १० ॥

५. प्रतीहारतरास्त्रम्

तारं [5]शिरोयुतं मन्त्रं प्रतीहारतरं विदुः।

[1] क्रोधिनं D.
[2] सत्यवादीति D.
[3] तथा E F.
[4] अत्रिः D.
[5] शिरोमयं D.

६. पराङ्मुखास्त्रम्

लोहितो [1]वह्निसंयुक्तः स्तुतेति च पदं ततः ॥ ११ ॥
स्तोभात्मने इति ब्रूयात् पराङ्मुख इति क्रमात् ।
आयेति च हृदन्तं तु पराङ्मुखमुदाहृतम् ॥ १२ ॥

७. अवाङ्मुखास्त्रम्

अमरेशस्तथात्रिश्च सवाल्याषाढनायकः ।
विद्रावणायेति [2]पदमवेति तदनन्तरम् ॥ १३ ॥
नतेति च प्रयोक्तव्यं [3]फलाय तदनन्तरम् ।
शिरोयुक्तमिमं मन्त्रं मन्त्रिणोऽवाङ्मुखं विदुः ॥ १४ ॥

८. लक्षाक्षास्त्रम्

नियुतापरपर्यायं [4]भेदिने इत्यनन्तरम् ।
निरासकेति चावृत्तं पदमायेति चेत्यथ ॥ १५ ॥
हृदयान्तमिमं मन्त्रं लक्षाक्षं परिचक्षते ।

९. विषमास्त्रम्

खड्गीशो मायया युक्तः कूर्मो मायासमन्वितः ॥
आषाढो वह्निसहितो [5]लोहितश्चाग्निसंयुतः ।
भृगुः सदीर्घो वह्निश्च मर्षयेति द्विरभ्यसेत् ॥ १७ ॥
एतद्विषममित्युक्तमस्त्रं परमदुर्जयम् ।

[1] बिन्दुसंयुक्तः D. [2] पदं द्रवेति B C.
[3] फलायेत्यप्यनन्तरम् D. [4] भेदिते इत्यनन्तरम् B C; भेदिने तदनन्तरम् D.
[5] लोहितश्चात्रि D.

१०. दृढनाभास्त्रम्

शान्तिं पदं न्यसेत् पूर्वं कुर्वित्येतदतः परम् ॥ १८ ॥
निबिडेति ततो न्यस्य गात्रशब्दं ततः परम् ।
विष्कम्भेति [1]शिरोऽन्तं च दृढनाभमुदाहृतम् ॥ १९ ॥

११. संहारकास्त्रम्

ह्रास्वा यक्राचतसृवि मोन ओं व्युत्क्रमो मनुः ।
संहारकमिदं चास्त्रं विदुः पूर्वे महर्षयः ॥ २० ॥

१२. दशाक्षास्त्रम्

खड्गीशो मायया युक्तस्तेन युक्तो बकस्तथा ।
[2]वान्तो दीर्घसमायुक्त आषाढो मुण्ड एव च ॥
[3]दीर्घी खड्गेश्वरो वह्निरुमेशो दीर्घसंयुतः ।
वाली हृदन्तो मन्त्रोऽयं दशाक्षः परिपठ्यते ॥ २२ ॥

१३. दशशीर्षास्त्रम्

तारपूर्वं च हृदयं चलगण्डं ततो न्यसेत् ।
अम्बरं सामराधीशं वक्त्रायेति पदं ततः ॥ २३ ॥
वज्रवारणशब्दौ च [4]आयान्तं शतवक्त्रकम् ।
शिवोत्तमः [5]सदन्तः स्यादग्निर्दीर्घसमन्वितः ॥ २४ ॥
भृगुराषाढवान् साग्निः कर्तनायेति विन्यसेत् ।

[1] शिरोऽन्तश्च B C E F.
[2] लान्तो B C E F.
[3] दीर्घः D.
[4] आयातं D.
[5] सदन्तिः D.

दशेति च पदं पश्चाच्छीर्षायेति पदं ततः ॥ २५ ॥
शिरोऽन्त एष मन्त्रस्तु दशशीर्षमुदाहृतम् ।

१४. शतोदरास्त्रम्

तारं प्रणामपर्यायं लुप्तास्त्रेति पदं ततः ॥ २६ ॥
जालायेति प्रयोक्तव्यं बहूदरपदं ततः ।
आयेत्यन्ते प्रयोक्तव्यं शतोदरमिदं विदुः ॥ २७ ॥

१५. पद्मनाभास्त्रम्

लोहितः पावकश्चैव नकुलीशस्ततः परम् ।
आषाढो मायया युक्तः प्रवृत्त इति च क्रमात् ॥ २८ ॥
नाशनायेत्यथाभ्यस्तं स्वस्त्यन्तं पद्मनाभकम् ।

१६. महानाभास्त्रम्

महाकालोऽम्बरं दीर्घं लोहितो दीर्घसंयुतः ॥ २९ ॥
बकः खड्गीश्वरो मायी नाशनायेति च न्यसेत् ।
चक्रात्मन इति ब्रूयात् स्वस्त्यन्तो मन्त्रनायकः ॥ ३० ॥
महानाभमिदं प्राज्ञा वदन्त्यखिलसाधकम् ।

१७. दुन्दुनाभास्त्रम्

बकश्चैव महाकालो मायी चाषाढनायकः ॥ ३१ ॥
शूलायेति प्रयोक्तव्यं चण्डनाभाय [1]चेत्यतः ।
स्वस्ति चैव द्विरभ्यस्तं दुन्दुनाभमिदं विदुः ॥ ३२ ॥

[1] चेत्यथ B.

१८. धृतिमाल्यस्त्रम्

मेषो मायी च साङ्घ्रीशो भृगुश्चैवात्रिरेव च।
मायायुक्तस्तथाषाढो दीर्घदण्डसमन्वितः ॥ ३३ ॥
क्रोधी च [1]सामरेशः स्याद् बको दीर्घसमन्वितः।
वाली दीर्घसमायुक्तो निवारितपदं ततः ॥ ३४ ॥
तेजसे इति च ब्रूयात् स्वस्त्यन्तोऽयं [2]महामनुः।
[3]धृतिमालीति विख्यातः सर्वलोकेषु पूजितः ॥ ३५ ॥

१९. रुचिरास्त्रम्

संवर्तकः सामरेशो मीनो [4]बिन्दुसमन्वितः।
मायी च क्षामयेत्येतदावृत्तं [5]वृत्तिमान् मनुः ॥ ३६ ॥
[6]द्विरावृत्तः प्रहरणं शं तनोतु पदं ततः।
शिरोऽन्त एष मन्त्रस्तु रुचिरः परिकीर्तितः ॥ ३७ ॥

२०. पितृसौमनसास्त्रम्

लोहितो मायया युक्त आषाढो भारभूतिमान्।
देवसारेत्यतः पाव्यं सर्वाभयपदं ततः ॥ ३८ ॥
प्रदेत्येतत् प्रयोक्तव्यं सर्वशान्तिकराय च।
शिरोऽन्त एष मन्त्रस्तु पितृसौमनसं स्मृतम् ॥ ३९ ॥

[1] साम खड्गी D.
[2] महामुने B C.
[3] धृतिमायी इति ख्यातः D.
[4] मेषसमन्वितः D.
[5] वृत्तिमात्मनः D.
[6] द्विरावृत्तं B C E F.

२१. विधूतास्त्रम्

तारं तथा च हृदयं खड्गीशो मायया युतः ।
मीनश्चाङ्घ्रीशसंयुक्त आषाढो दीर्घसंयुतः ॥ ४० ॥
चण्डो मायी पिनाकी चाप्याषाढो दीर्घसंयुतः ।
लोहितश्च करायेति पदं तत उदीर्य च ॥ ४१ ॥
परमेत्यथ धाम्ने च विधूतमिदमुत्तमम् ।

२२. मकरास्त्रम्

नमस्त्रुटितशब्दौ च पठित्वा प्रथमं ततः ॥ ४२ ॥
शस्त्रास्त्रशब्दौ चोच्चार्य शक्तये इत्यनन्तरम् ।
शक्तिशालिन इत्युक्त्वा मकरायेति च क्रमात् ॥ ४३ ॥
प्रवृत्तास्त्रपदे चैव महार्णवपदं ततः ।
विभेदिन इति ब्रूयादेतन्मकरमुत्तमम् ॥ ४४ ॥

२३. करवीरसमास्त्रम्

तारपूर्वं नमश्चोक्त्वा तिरस्कृतपदं ततः ।
गदाशब्दं समुच्चार्य [1]वीर्यायेति ततः पठेत् ॥ ४५ ॥
शिरोऽन्त एष मन्त्रस्तु [2]करवीरसमं स्मृतम् ।

२४. घनास्त्रम्

तारं प्रणामपर्यायं लोहितं वह्निसंयुतम् ॥ ४६ ॥
आषाढोऽनन्तसंयुक्तो लोहितो मीन एव च ।

[1] वीरायेति D.
[2] करवीरकरं D.

मुण्डः शिवं कुरुपदं द्विरावृत्तं धनं स्मृतम् ॥ ४७ ॥

२५. धान्यास्त्रम्

वेतवाजीर्तरापेति व्युत्क्रमेण समीरितम् ।
शिरोऽन्त एष मन्त्रस्तु धान्यमित्युच्यते बुधैः ॥ ४८ ॥

२६. ज्यौतिषास्त्रम्

लोहितो वह्निसंयुक्तश्चण्डाद्यन्तौ[1] ततः क्रमात् ।
बको मुण्डः समायी स्यात् सवह्निर्लोहितस्तथा ॥ ४९ ॥
बको विषं ततो मुण्डो मायी प्रकटितेति च ।
अथ विश्वं पदं चोक्त्वा ततः प्रशमयेति च ॥ ५० ॥
द्विरभ्यस्तमिमं मन्त्रं ज्यौतिषं परिचक्षते ।

२७. कृशनास्त्रम्

क्रोधी पिनाकी मायी स्यादाषाढं च ततः परम् ॥ ५१ ॥
क्रोधी [2]चानन्तसहितो बकयुग् दीर्घमग्निमत्[3] ।
मुण्डो वाली शिरोऽन्तश्च कृशनं समुदाहृतम् ॥ ५२ ।

२८. नैराश्यास्त्रम्

मायी खड्गी शिखी चैव महामायी पिनाकवान् ।
कृतचक्रेति शब्दौ च चक्रायेति च निर्दिशेत् ॥ ५३ ॥
वषडन्तमिमं मन्त्रं नैराश्यं परिचक्षते ।

[1] चण्डाद्यन्तः D.
[2] चानन्द F.
[3] दीर्घवह्निमान् E F.

२९. विमलास्त्रम्

[1]खड्गेशः प्रथमं मायी चाषाढो दीर्घवह्निमान् ॥ ५४ ॥
भृगुश्च मायासंयुक्त आषाढो दीर्घसंयुतः ।
मायी चण्डः पिनाकी च सानन्तोऽतः परं क्रमात् ॥
भृगुः साषाढदीर्घाग्निर्वाली च तदनन्तरम् ।
विमलायेति चोच्चार्य शिरोऽन्तं विमलं स्मृतम् ॥ ५६ ॥

३०. योगंधरास्त्रम्

भृगुर्लान्तः सवह्निश्च मायाशब्दं पठेत् ततः ।
मयास्त्रायेति च पदं तमोबर्हेण इत्यपि ॥ ५७ ॥
मूर्तये इति निर्दिश्य योगं चेति ततः पठेत् ।
धरायेति पदं चापि महते इत्यनन्तरम् ॥ ५८ ॥
भीषणायेति च ब्रूयादभ्यस्तं हृदयं ततः ।
योगंधरमिदं प्रोक्तमस्त्रं निखिलवन्दितम् ॥ ५९ ॥

३१. विनिद्रास्त्रम्

मुण्डो मायी तथाकाश आषाढश्च ततः परम् ।
मेषो मायायुतोऽत्रिश्च सदीर्घाग्निस्ततः परम् ॥ ६० ॥
मुद्रायेति शिरोऽन्तोऽयं [2]विनिद्रमभिधीयते ।

३२. नैद्रास्त्रम्

विषमग्न्यनिलोपेतं सषष्ठस्वरबिन्दुकम् ॥ ६१ ॥

[1] खड्गी च B ; खड्गीशः E F.   [2] भद्रमित्यभिधीयते D.

पिण्डमेतच्छिरोऽन्तं च नैद्रमस्त्रविदो विदुः[1] ।

३३. प्रमथनास्त्रम्

प्रथमं तारमुच्चार्य हृदयं च ततः परम् ॥ ६२ ॥
विषं ततश्च दण्डीशं मायया च समन्वितम् ।
आषाढं च बकं चैव पठित्वा तदनन्तरम् ॥ ६३ ॥
ततः क्रोधी च साषाढश्चण्डीशेन समन्वितः ।
प्रसादयेत्यथावृत्तमस्त्रं प्रमथनं स्मृतम् ॥ ६४ ॥

३४. सार्चिर्माल्यस्त्रम्

वरुणेन समायुक्तो दीर्घयुक्तश्चतुर्मुखः ।
ततः पिनाकी सानन्तो लान्तो मायी ततः परम् ॥
ज्वालान्तो मायया युक्तः पिनाकी च ततः परम् ।
आद्यं चतुर्थवर्गस्य महासीति पठेत् ततः ॥ ६६ ॥
शक्त इत्यपि वक्तव्यं महामहस इत्यपि ।
मर्षयेति द्विरभ्यस्तं सार्चिर्मालिरयं मनुः ॥ ६७ ॥

३५. कामरूपास्त्रम्

ह्रास्वा नञ्भरश्वासरपत्तवृप्र इत्यपि ।
रस्वा इति व्युत्क्रमेण कामरूपमिदं स्मृतम् ॥ ६८ ॥

३६. कामरुच्यस्त्रम्

ओं नमो इत्युपक्रम्य मुण्डो मायासमन्वितः ।

[1] मन्त्रविदो विदुः E F.

तृतीयस्वरसंयुक्तश्चण्डो रान्तस्ततः परम् ॥ ६९ ॥
कबन्धेति पदं ब्रूयात् संधानायेति चान्ततः ।
शिखान्तोऽयं कामरुचिर्मन्त्रः पूर्वैः समीरितः ॥ ७० ॥

३७. मोहनास्त्रम्

भौतिकं दण्डसंयुक्तमङ्कुशं च ततो वदेत् ।
[1]मोहवारिणिशब्दं च शिरोऽन्तं मोह उच्यते ॥ ७१ ॥

३८. आवरणास्त्रम

खड्गीशो दीर्घसंयुक्तो वह्निर्मायासमन्वितः ।
आषाढश्च महाकालो व्योम दीर्घान्वितं ततः ॥ ७२ ॥
महाकालश्च सानन्तो वाली चण्डीशसंयुतः ।
शिरोऽन्तोऽयं महामन्त्रः प्रोक्तमावरणं बुधैः ॥ ७३ ॥

३९. जृम्भकास्त्रम्

द्विरण्डौ द्वौ क्रमान्न्यस्य सदण्डौ चतुराननम् ।
मुण्डमुच्चार्य परतः स्वस्तीति पदमुद्धरेत् ॥ ७४ ॥
शिरोऽन्तोऽयं महामन्त्रो जृम्भकः परिकीर्तितः ।

४०. सर्वनाभकास्त्रम्

चण्डोऽनन्तसमायुक्तो मायी चात्रिस्ततः परम् ॥ ७५ ॥
आद्यश्चतुर्थवर्गस्य सेनापदमनन्तरम् ।

[1] मोहवारीणि B; मोहवारुणि D.

जीवातव इति ब्रूयाच्छिरोऽन्तं सर्वनाभकम् ॥ ७६ ॥

४१. भृशाश्वतनयास्त्रम्

वेगाद्यन्तौ क्रमादुक्त्वा विश्वाद्यं च ततः परम् ।
जितशब्दमथोच्चार्य वैनतेयाय इत्यपि ॥ ७७ ॥
शिरोऽन्तोऽयं मनुः प्रोक्तो भृशाश्वतनया [1]इति ।

४२. संधानास्त्रम्

भृगुश्च वरुणः साग्निर्मुण्डो मायी ततः क्रमात् ॥ ७८ ॥
खड्गीशः साग्निदीर्घश्च [2]लोहितोऽथ उमापतिः ।
यं कुर्विति द्विरभ्यस्तो मन्त्रः संधानमुच्यते ॥

४३. वारुणास्त्रम्

भृगुर्लान्तोऽग्निसहितो दण्डेन च समन्वितः ।
भृगुर्व्योमाथ जीवश्च वरुणेन समन्वितः ॥ ८० ॥
शिरोऽन्त एष मन्त्रस्तु वारुणं परिकीर्तितम् ।

अस्त्राणां मूर्तत्वामूर्तत्वजिज्ञासया नारदेनाहिर्बुध्न्यस्तुतिः

नारदः—

भगवन् देवदेवेश सर्वलोकनमस्कृत ॥ ८१ ॥
सर्वाध्यक्षाप्रमेयात्मन्नचिन्त्यज्ञानगोचर ।
त्वामाश्रित्य सुराः सर्वे लभन्ते काङ्क्षितं फलम् ॥

[1] इमे D.

[2] लोहितो य उमापतिः D.

त्वत्तः सर्वं समुद्भूतं जगत् स्थावरजङ्गमम् ।
त्वयैव [1]पालितं सर्वं संहृतं च महेश्वर ॥ ८३ ॥
त्वमादिः सर्वजगतामनादिस्त्वं जगन्मय ।
पुरुषस्त्वं त्वमव्यक्तो व्यक्तस्त्वं विश्वभावन ॥ ८४ ॥
यज्ञस्त्वमिज्यो यष्टा त्वमग्नयस्त्वं त्वमाहुतिः ।
वषट्कारस्त्वमोंकारो [2]वेदवेद्यस्तथा भवान् ॥ ८५ ॥
त्वत्त एव च भूतानि प्रवर्तन्ते महेश्वर ।
करणं कारणं कर्ता कार्यं कर्म फलं विभो ॥ ८६ ॥
त्वमेव भूतं भव्यं च भवच्च परमेश्वर ।
निर्गुणस्त्वं जगत्सृष्टौ जुषमाणो [3]गुणानसि ॥ ८७ ॥
अणीयसामणीयांस्त्वं महांश्च त्वं महीयसाम् ।
अनुरक्तस्त्वयीशान प्रयाति परमां गतिम् ॥ ८८ ॥
अपरक्तो व्रजत्येव निरयं [4]विकृतिर्न ते ।
कलाकाष्ठामुहूर्तादिकालश्च[5] त्वं कलात्मकः ॥ ८९ ॥
सर्वदा सर्वभूतेषु निवसन्नपि शंकर ।
न लिप्यसे तद्विकारैः पद्मपत्रमिवाम्भसा ॥ ९० ॥
करामलकवत् सर्वं सर्वदा कलयस्यतः ।
प्रोक्तवानसि सर्वास्त्रस्वरूपं पृच्छतो मम ॥ ९१ ॥

[1] साधितं D.
[2] वेदावेद्यं D; वेदो वेद्यः E. F.
[3] गुणानपि D.
[4] प्रकृतिर्न D.
[5] कालस्तत्त्वं D.

अस्त्राणां मूर्तत्वामूर्तत्वप्रश्नः

किमेषां मूर्तयः सन्ति किं वामूर्तान्यमूनि वै ।
छेत्तुमर्हसि देवेश तमिमं संशयं विभो ॥ ९२ ॥

तेषां मूर्तत्वप्रतिपादनम्

अहिर्बुध्न्यः—

तेषां भवन्ति गात्राणि भीमरूपाणि नारद ।
[1]वक्रभीषणदंष्ट्रोग्रमुखत्रस्तजनानि वै ॥ ९३ ॥
भीषिताघूर्णितारक्तवृत्तनेत्रयुतानि वै ।
विद्युत्पुञ्जप्रतीकाशकेशभीमानि नारद ॥ ९४ ॥
कानिचिद्धूम्रवर्णानि भास्कराभानि कानिचित् ।
कानिचिच्छुक्लवर्णानि वह्निकल्पानि कानिचित् ॥ ९५ ॥
महापरिघसंकाशभीमरूपैः करैः परैः ।
यथास्वं धृतशस्त्राणि महान्ति बलवन्ति च ॥ ९६ ॥
वेगवन्ति प्रमाथीनि वैरिदर्पद्रुहाणि च ।
उपासितानि सततं सुरासुरवरैरपि ॥ ९७ ॥
एवंभूतान्यधिष्ठाय गात्राण्यस्त्राणि नारद ।
विचरन्ति यथाकाममकुतोभीतिमन्ति च ॥ ९८ ॥

[1] चक्र A B C E F.

अकलितमहिमानि भीषणानि
ज्वलितवपूंषि समुद्यतायुधानि ।
अविहतगमनानि चास्त्रमुख्या-
न्यनवरतं भुवनेषु संचरन्ति ॥ ९९ ॥

इति श्रीपाञ्चरात्रे तन्त्ररहस्ये अहिर्बुध्न्यसंहितायां संहारास्त्र-
स्वरूपनिरूपणं नाम पञ्चत्रिंशोऽध्यायः

आदितः श्लोकाः २२५२

राज्ञां सुदर्शनयन्त्राराधनविधानकेशवादिगुणप्रधानभाव-
व्यवस्थापनं नाम षट्त्रिंशोऽध्यायः

ध्यातं सकृद्भवानेककोट्यघौघं हरत्यरम् ।
सुदर्शनस्य तद्दिव्यं भर्गो देवस्य धीमहि ॥

सौदर्शनयन्त्रस्य पूर्वापराङ्गध्यानार्चनप्रकारप्रश्नः

**नारदः—**

भगवन् कथिताः सर्वे सर्वास्त्राणां महौजसाम् ।
प्रवर्तकास्तथा मन्त्रास्तथैव[1] च निवर्तकाः ॥ १ ॥
एतच्च कथितं सर्वं सर्वज्ञेन त्वया पुरा ।
सौदर्शनं [2]महायन्त्रमर्चनीयं महात्मभिः ॥ २ ॥
उक्तेनैव प्रकारेण चतुर्वर्गफलार्थिभिः ।
राजा चेदर्चयेदेतत् सौदर्शनमुखं परम् ॥ ३ ॥
उभयं चास्य यन्त्रस्य [3]मुखमाराधयेदिति ।
कथमस्यापराङ्गं[4] च ध्यायेत् कुर्याच्च वा कथम् ॥ ४ ॥
छेत्तुमर्हसि संदेहमिमं मम महेश्वर ।

[1] तथैवैतन्निवर्तकाः D.
[2] महामन्त्रम् D.
[3] मुखं नाराधयेदिति D.
[4] अपराङ्गस्य A B C E F.

तदुत्तरकथनम्

**अहिर्बुध्न्यः—**

एवं ध्यात्वार्चयेद्राजा यन्त्रमेतन्महाद्युति ॥ ५ ॥

तत्र पूर्वाङ्गे यन्त्रमध्ये सुदर्शनध्यानम्

यन्त्रमध्ये महात्मानं पुरुषं भीमलोचनम् ।
ऊर्ध्वपिङ्गलकेशाढ्यं ज्वलद्दंष्ट्रोज्ज्वलाननम् ॥ ६ ॥
तिष्ठन्तमष्टभिर्युक्तं भुजैः परमशोभनैः ।
चक्राब्जमध्ये तिष्ठन्तमवष्टभ्य महद्धनुः ॥ ७ ॥
समभङ्गमुदाराङ्गं रक्ताम्बरधरं विभुम् ।
शङ्खचक्राब्जमुसलपाशाङ्कुशगदाधरम् ॥ ८ ॥
सर्वाभरणसंयुक्तं पुष्पमालाविभूषितम् ।

परितः केशवादिद्वादशमूर्तिध्यानम्

[1]सुदर्शनमिमं ध्यात्वा परितश्चिन्तयेत् ततः ॥ ९ ॥
तिष्ठतो यदि वासीनान् केशवादीन् सविग्रहान् ।
उक्तेनैव प्रकारेण भूषणैरायुधैर्युतान् ॥ १० ॥
प्रधानभूतान् परमान् यथाकामनिवेशितान् ।

ततो विष्ण्वादिषोडशमूर्तिध्यानम्

ततः षोडशभिर्देवैर्विष्णवाद्यैरायुधान्वितैः ॥ ११ ॥
मूर्तिमद्भिश्च सोद्योगैः सर्वाभरणसंयुतैः ।

[1] सुदर्शनमिदं A B C.

एतैः पञ्जरितं ध्यायेद्यन्त्रराजमनुत्तमम् ॥ १२ ॥

परितो मूर्तिमत्संहारास्त्रध्यानम्

परितस्तान्यपि ध्यायेन्मूर्तिमन्ति महान्ति च ।
संहारास्त्राणि सर्वाणि साञ्जलीन्यद्भुतानि च ॥ १३ ॥
अकुतोभयशालीनि शक्तिमन्ति समन्ततः ।

ततो मूर्तिमत्प्रवर्तकास्त्रध्यानम्

ततः प्रवर्तकान्येवं ध्यायीतास्त्राणि नारद ॥ १४ ॥
मूर्तान्यत्तुमिवाशेषभुवनान्युज्ज्वलानि च ।

ततो नारसिंहध्यानम्

एवं चक्रक्रमेणैतदभिध्यायोपरि स्मरेत् ॥ १५ ॥
[1]दधानं नारसिंहस्य वपुर्नारायणं परम् ।
मूलकोशं परं देवमधोभागेऽथ चिन्तयेत् ॥ १६ ॥
यन्त्रं चक्राकृति श्रीमद् दीप्तनेमिसमन्वितम् ।
नेमेरस्य चतुर्दिक्षु महाज्वालां विचिन्तयेत् ॥ १७ ॥
चक्रकौमोदकीशार्ङ्गखड्गहस्तान् स्मरेत् क्रमात् ।
[2]एवमेकमुखं ध्यायेद्यन्त्रस्यास्य महाद्युतेः ॥ १८ ॥

अपराङ्गध्यानम्

अपराङ्गं महामन्त्रैः सर्वतः समलंकृतम् ।

[1] C. Gap from here up to the end of chap. 50.
[2] एवमेव मुखं A B E F.

अन्तस्तारं समारभ्य यदि वा विष्णुपञ्जरम् ॥ १९ ॥
पूर्वोक्तं तद्विना [1]मूर्तैस्तत्तन्मन्त्रसमुच्चयम् ।

अपराङ्गे सर्वास्त्राणां मन्त्रमात्रध्यानम्

यथास्थानं स्मरेत् तस्य पर्यन्ते चिन्तयेत् ततः ॥ २० ॥
[2]सर्वसंहरणास्त्राणां मन्त्रानेव च केवलम् ।
तदनन्तरमन्येषामस्त्राणां च प्रवर्तकम् ॥ २१ ॥
[3]मन्त्रजालमभिध्याय सुनेमि सुरपूजितम् ।
महायन्त्रं महाशक्ति चक्ररूपमनुत्तमम् ॥ २२ ॥
उक्तैर्विशेषणैर्जुष्टं सर्वकामैकसाधनम् ।
अस्य चक्रस्य मध्ये [4]यद्वर्तते पुरुषः परः ॥ २३ ॥
तस्मान्निगद्यते लोके चक्रवर्तीति सूरिभिः ।

एतद्यन्त्राभ्यर्चनाद्राज्ञां चक्रवर्तित्वलाभः

तस्मादभ्यर्चयेदेतद्यो राजा भक्तिसंयुतः ॥ २४ ॥
सोऽचिरेणैव कालेन चक्रवर्तित्वमाप्नुयात् ।

अन्यैरपि राजहितैषिभिरेतदर्चनं कार्यम्

राजा वा राजभृत्या वा मन्त्रिणो वाथवा परे ॥ २५ ॥
राज्ञां हितैषिणः सर्वे पूजयेयुरिदं परम् ।

अन्येषामपि श्रीकामानामेतदभ्यर्चनम्

अन्ये च ये [5]तु विपुलां श्रियमिच्छन्ति मानवाः ॥२६॥

[1] मूर्तैः A B E F.
[2] सर्वसंहारणास्त्राणां A B E F.
[3] मन्त्रराज D.
[4] यो वर्तते E.
[5] च D.

तैर्नित्यमर्चनीयं स्यादिदं सर्वार्थसाधकम् ।
राज्ञामेव विशेषेण यदेतत् समुदीरितम् ॥ २७ ॥
तद्राजव्यतिरेकेण ये निर्दिष्टास्तु मानवाः ।
तेषां विभूतिर्महती राज्ञा संपत्स्यते ध्रुवम् ॥ २८ ॥
लोहैर्वा शिलया वापि यो हि निर्माय पूजयेत् ।
विपुलां श्रियमाप्नोति दीर्घमायुश्च विन्दति ॥ २९ ॥
आरोग्यं चाश्नुते सर्वे तद्दृश्या दीर्घजीविनः[1] ।

द्विमुखयन्त्रार्चने मन्त्रोपदेष्टुर्ब्राह्मणस्यैवाधिकारः

परं मन्त्रोपदेष्टैव ब्राह्मणो [2]द्विमुखं यजेत् ॥ ३० ॥
ज्ञानेन तपसा शक्त्या सोढुं तस्योभयात्मनः ।
स एव शक्नुयात् तस्य प्रभावं परमं मुने ॥ ३१ ॥

आदित्यमण्डलाक्ष्यादिस्थानां पुरुषाणामभिन्नत्वम्

योऽसावादित्यबिम्बस्थः पुरुषो दृश्यते परः ।
हिरण्मयो [3]य एवान्तरक्षिण्यपि च दृश्यते ॥ ३२ ॥
सोऽप्ययं नाभिचक्रस्य मध्ये यो वर्तते पुमान् ।

तस्यैव कालचक्रादिप्रवर्तकत्वम्

[4]योऽयं [5]कालाख्यचक्रस्य प्रेरकः पुरुषोऽव्ययः ॥ ३३ ॥

[1] दर्शिनः A B E F.
[2] विमुखं D.
[3] यमेवान्त E F.
[4] सोऽयं A E F; सोऽथ B.
[5] कालस्य चक्रस्य A E F.

युगचक्रस्य नेतारमेनमेव विदुर्बुधाः ।
एनं महर्षयोऽप्याहुर्जगच्चक्रप्रवर्तकम् ॥ ३४ ॥

विमाने संस्थाप्य तस्यैव समभ्यर्चनमैहिकामुष्मिकफलसाधकम्

सर्वलोकैककर्तारं[1] सर्वलोकैकसाक्षिणम् ।
[2]एनं विमाने संस्थाप्य चक्रवर्तिनमव्ययम् ॥ ३५ ॥
यः पूजयति तस्यायं लोकश्चामुष्मिको भवेत् ।

विमानकरणारम्भस्यापि महाफलकत्वम्

सुदर्शनविमानं यः प्रारभेत महामुने ॥ ३६ ॥
इह सर्वानवाप्यार्थान् विष्णुलोकं स यास्यति ।

विमानकरणार्थस्य कर्षणस्यापि सर्वसंपत्साधनत्वम्

सुदर्शनविमानस्य कर्षणं यः करोति वै ॥ ३७ ॥
तस्यामित्रा विनश्यन्ति सन्ति सर्वाश्च संपदः ।

आरब्धापरिसमाप्तस्यापि विमानकरणस्यान्ततो मुक्तिसाधनता

आरभ्यायतनं मध्ये [3]विच्छित्त्या विघ्नितो यदि ॥३८॥
स सार्वभौमः सकलान् भुक्त्वा भोगान् महीतले ।
पुनश्च भक्तश्चक्रस्य शेषं निर्वर्तयिष्यति ॥ ३९ ॥
अन्ते वैकुण्ठमासाद्य विष्णुसायुज्यमाप्नुयात् ।

[1] भर्तारं D. [2] एवं A B E F.
[3] विभूत्या D; विभूत्या E.

साङ्गप्रतिष्ठादिकर्तुः फलपरंपरानिरूपणम्

विमानं परमं कृत्वा प्रतिष्ठाप्य सुदर्शनम् ॥ ४० ॥
ब्राह्मणान् वेदविदुषो वैष्णवान् द्वादशावरान् ।
तच्छेषभूतांस्तत्रैव प्रतिष्ठाप्य च शक्तितः ॥ ४१ ॥
पर्याप्तजीवनान् कृत्वा दत्त्वा भूमिमठादिकान् ।
नित्यं [1]योऽभ्यर्चयत्येनं देवं भूतिसमन्वितम् ॥ ४२ ॥
तस्य प्रतिदिनं भूतिरमर्यादा विवर्धते ।
नीरोगता दीर्घमायुर्लभ्यते नात्र संशयः ॥ ४३ ॥
जन्मान्तरे सार्वभौमो जनित्वा सकलां भुवम् ।
भुक्त्वा कालेन महता तदनन्तरजन्मनि ॥ ४४ ॥
त्रिविष्टपपतिर्भूत्वा भुङ्क्ते चैन्द्रपदं चिरम् ।
ततः क्रमेण लब्ध्वायं तत्तल्लोकेशतां गतः ॥ ४५ ॥
तदन्ते परमं धाम वैष्णवं प्रतिपद्यते ।

सुदर्शनपुरुषमनाराधयतो नृपत्वं दुर्लभम्

देवमेनमनाराध्य न कश्चिज्जायते नृपः ॥ ४६ ॥

एतदाराधनतारतम्यात् फलतारतम्यम्

एतदाराधनस्यैव तारतम्येन नारद ।
भोगायुषोस्तारतम्यमश्नुते नृपतिर्ध्रुवम् ॥ ४७ ॥

तस्माद्राज्ञामन्येषां चैतदाराधनावश्यकता

तस्मात् सर्वप्रयत्नेन राजैवैनं समर्चयेत् ।

[1] योग्यश्च सत्येन D.

जात्यायुर्भोगकामाश्च ये चान्ये भुवि मानवाः ॥ ४८ ॥
तेऽप्येतत्पूजया सर्वं काङ्क्षितं प्राप्नुवन्ति च ।

शेषिणः केशवादेः शेषभूतं सुदर्शनं प्रति परिवारतादिकथंताप्रश्नः

नारदः—

सिद्धं सुदर्शनं विष्णोः शेषमायुधसंज्ञितम् ॥ ४९ ॥
कथमस्य परीवाराः केशवाद्याः समीरिताः ।
विष्णवाद्या मूर्तिभेदाश्च कथं वा पञ्जरीकृताः ॥ ५० ॥
कथं वा भगवन्मन्त्राः परिवारत्वमागताः ।
इमं च संशयं देव च्छेत्तुमर्हसि सांप्रतम् ॥ ५१ ॥

तदुत्तरकथनारम्भः

अहिर्बुध्न्यः—

शृणु [1]तात महाप्राज्ञ रहस्यमिदमुत्तमम् ।
त्वदृते शक्नुयात् प्रष्टुमिममर्थं[2] न कश्चन ॥ ५२ ॥

भगवत इव तत्संकल्परूपस्य सुदर्शनस्याप्यनादित्वापरिच्छेद्यत्वे

यथा नारायणो देवः पुरुषः पुष्करेक्षणः ।
अनादिरपरिच्छेद्यस्तथायमपि नारद ॥ ५३ ॥

तदुपपादनाय परमात्मशक्तेर्द्वैधा विभागः

द्वे शक्ती तस्य विद्येते विष्णोः सर्वार्थसाधने ।
प्रधानभूते याभ्यां तु वहत्येष जगद्धुरम् ॥ ५४ ॥

1 तत्त्वं A B E F. 2 अल्पं D.

**एका त्विच्छात्मिका तस्य तथान्या तु क्रियात्मिका ।**

तत्रेच्छारूपिण्याः शक्तेर्लक्ष्मीरूपत्वम्

**प्रथमा परमा लक्ष्मीर्जगत्त्रातुः कुटुम्बिनी ॥ ५५ ॥**

क्रियारूपायाः शक्तेः सुदर्शनरूपत्वम्

**तत्त्वविद्भिरिदं प्रोक्तं द्वितीयेह सुदर्शनम् ।**

ताभ्यां शक्तिभ्यां विना भगवतोऽप्यकिंचित्करत्वम्

**तस्माल्लक्ष्म्या विना देवः संकल्पे न प्रभुर्हरिः ॥ ५६ ॥**
**अनेनापि विना कर्तुं किंचिन्नार्हति केशवः ।**

तस्य शक्तिद्वयस्य सृष्टिस्थितिसंहाराद्युपकरणत्वम्

**अनेन सर्वं सृजति देवोऽनेनैव पाति च ॥ ५७ ॥**
**अनेन संहृतिं देवो विश्वस्यान्ते करोति च ।**
**अनेन दानवान् दैत्यान्निहन्ति मधुसूदनः ॥ ५८ ॥**
**क्रियतेऽनेन तत्कर्म सर्वं सर्वगतेन वै ।**

रक्षकं परमात्मानं प्रति शक्तिद्वयस्यापि रक्ष्यकोट्यन्तर्भावः

**तस्मात् सर्वात्मना चैनं [1]स्वबुद्ध्या परिरक्षति ॥ ५९ ॥**

विशिष्य लक्ष्म्या अपि रक्ष्यकोट्यन्तर्भावप्रतिपादनम्

**यथा स्वं स्वामिना रक्ष्यं रक्ष्यते स्वयमेव हि ।**
**एवं सर्वस्य जननीं लक्ष्मीं लक्ष्मीधरः स्वयम् ॥ ६० ॥**
**चतुर्धा व्यूह्य चात्मानं स्वभूतां परिरक्षति ।**

[1] स्वं बुद्ध्वा A B E F.

अतः केशवादीनां परिवारत्वादिकल्पनाया युक्तत्वम्

**तत् केशवादिमूर्तीनां परिवारत्वकल्पना ॥ ६१ ॥**
**विष्णवादीनां च मूर्तीनां पञ्जरत्वं च युज्यते ।**
**सर्वेषामपि मन्त्राणां रक्षकत्वं च सांप्रतम् ॥ ६२ ॥**

प्रकारान्तरेणापि गुणप्रधानभावोपपादनम्

**अथवा भगवानेव स्वयं चक्रस्वरूपधृत् ।**
**अवस्थित इति प्राज्ञैः कथ्यते पुरुषोत्तमः ॥ ६३ ॥**
**प्रतित्रेतायुगं देवः साधुत्राणकृते हरिः ।**
**रामलक्ष्मणशत्रुघ्नभरताद्यात्मना स्वयम् ॥ ६४ ॥**
**चतुर्धावस्थितस्तद्वच्चक्रात्मा हरिरेव हि ।**
**गुणप्रधानभावस्तु रामादेरिव युज्यते ॥ ६५ ॥**
**तदात्मनैव चात्मानं रक्षत्येव जनार्दनः ।**
**स्वमूर्तिरक्षणे स्वेन विनान्यन्न भवेद्यतः ॥ ६६ ॥**

एतद्रहस्यश्रवणादेरपि क्रमशः परमपुरुषार्थसाधनत्वम्

**य इदं शृणुते परिपृच्छति वा**
**पठति स्मरतीह नरः सततम् ।**
**विपुलामिह भूतिमवाप्य परा-**
**मथ याति पदं परमं [1]स हरेः ॥ ६७ ॥**

इति श्रीपाञ्चरात्रे तन्त्ररहस्ये अहिर्बुध्न्यसंहितायां राज्ञां सुदर्शनयन्त्राराधनविधानकेशवादिगुणप्रधानभावव्यवस्थापनं नाम षट्त्रिंशोऽध्यायः

आदितः श्लोकाः २३१९

[1] हि A B.



# AHIRBUDHNYA SAMHITĀ

OF THE

# PĀNCARĀTRA ĀGAMA

EDITED FOR THE ADYAR LIBRARY BY

M. D. RĀMĀNUJĀCĀRYA

HEAD PAṆḌIT, ADYAR LIBRARY

UNDER THE SUPERVISION OF

F. OTTO SCHRADER, PH.D.

DIRECTOR, ADYAR LIBRARY

VOLUME II

ADYAR LIBRARY

ADYAR, MADRAS, S.

1916

श्रीपाञ्चरात्रागमान्तर्गता

# अहिर्बुध्न्यसंहिता

( उत्तरार्धम् )

अडैयार्पुस्तकालयप्रधानपण्डितपदवीमधितस्थुषा

श्रीमद्वालधन्विकुलावतंसेन

**देवशिखामणिना रामानुजार्येण**

संशोधिता

तेनैव विरचितया

काचित्कया विषमस्थलटिप्पण्या च

सनाथीकृता

अडैयार्पुस्तकालयाध्यक्षेण

वसन्तमुद्राक्षरशालायां

मुद्रापिता ।

ओम् ।

## अथ योगाङ्गयमनियमासननिरूपणं नाम एकत्रिंशोऽध्यायः ।

ध्यातं सकृद्भवानेककोट्यघौघं हरत्यरम् ।
सुदर्शनस्य तद्दिव्यं भर्गो देवस्य धीमहि ॥

(तत्र प्रथमं हृद्यागस्वरूपप्रश्नः)

श्रीनारदः ।

प्रथमं बाह्ययागस्थं हृदयाराधनं परम् ।
उक्तं त्वया तत्स्वरूपं यथावद्वक्तुमर्हसि ॥१॥

(तदुत्तरकथनारम्भः)

अहिर्बुध्न्यः ।

साधु पृष्टं त्वया तस्य स्वरूपं शृणु नारद ।
येन प्रीणाति भगवान्सर्वलोकनमस्कृतः ॥२॥

(हृद्यागलक्षणम्)

यैर्बाह्ययागः क्रियते साधनैस्त्रिविधैरिह ।
संकल्पसिद्धैस्तैरेव देवं प्रति समर्चनम् ॥३॥

---

1. व्योगः A B C.

हृदयाराधनं प्रोक्तमेतत्सर्वार्थसाधनम् ।

(आत्मसमर्पणस्य हृद्यागतुल्यत्वम्)

यद्वा भगवते तस्मै स्वकीयात्मसमर्पणम् ॥४॥
वियुक्तं प्रकृतेः शुद्धं दद्यादात्महविः स्वयम् ।
[1]विशिष्टदैवतायास्मै चक्ररूपाय मन्त्रतः[2] ॥५॥

(प्रकृतिवियुक्तात्मस्वरूपविषयकः प्रश्नः)

श्रीनारदः ।

वियुक्तं प्रकृते रूपमात्मनो वक्तुमर्हसि ।
केनोपायेन तत्प्राप्तिस्[3]तन्मे ब्रूहि सुनिश्चितम् ॥६॥

(तदुत्तरकथनारम्भः)

अहिर्बुध्न्यः ।

शृणु [4]तत्परमं सूक्ष्मं सर्वगं सर्वभृ[5]त्तथा ।
ज्ञानरूपमनाद्यन्तमविकारि निरामयम् ॥७॥
अचक्षुःश्रोत्रमस्पर्शमपाणिचरणं ध्रुवम् ।
नामजात्यादिरहितमवर्णम[6]गुणं त्वपि ॥८॥
[7]विश्वश्रवो विश्वचक्षुर्विश्वपाणिपदं परम् ।

---

1. विशिष्टं दै° D.
2. तन्त्रतः D.
3. तत्स्यादिति विनिश्चितम् A B C E F.
4. तं परमं D.
5. °हृत्तथा A B C E F.
6. °मगुणच्छवि D.
7. त्रिश्वश्रवा° B C.

असक्तमचरं शान्तं स्वयंज्योतिरनौपमम् ॥९॥
दूरस्थमन्तिकचरं ज्ञानगम्यं निरञ्जनम् ।
भूतभर्तृ समज्योतिर्ज्योतिषां तमसः परम् ॥१०॥
अक्षरं सर्वभूतस्थं तद्विष्णोः परमं पदम् ।

(योगकर्मणोर्विविक्तात्मस्वरूपप्राप्तिसाधनता)

तत्प्राप्तिसाधनं योगः कर्म च श्रुतिचोदितम् ॥

(तद्विषयकः प्रश्नः)

श्रीनारदः ।

कीदृशं कर्म विज्ञेयं योगः कीदृश उच्यते ।
याभ्यां संप्राप्यते चात्मा [2]केवलं प्रकृतेः परः ॥

(तदुत्तरकथनारम्भः)

अहिर्बुध्न्यः ।

शृणुष्व प्रथमं कर्म द्विविधं तदिहोच्यते ।

(कर्मणां द्वैविध्यम्)

एकं प्रवर्तकं प्रोक्तं निवर्तकमथापरम् ॥१३॥

(प्रवर्तकनिवर्तककर्मणोः क्रमादभ्युदयनिःश्रेयससाधनत्वम्)

प्रवर्तकं च स्वर्गादिफलसाधनमुच्यते ।
निवर्तकाख्यं देवर्षे विज्ञेयं मोक्षसाधनम् ॥१४॥

---

1. बलज्योति° D.
2. केवलः E F.
3. परमं D.

(जीवपरसंयोगस्याष्टाङ्गयोगशब्दार्थता)

संयोगो योग इत्युक्तो जीवात्मपरमात्मनोः ।
अष्टाङ्ग एष कथितो येनात्मा दृश्यतां गतः ॥१५॥

(योगाङ्गपरिगणनम्)

अष्टाङ्गान्यस्य वक्ष्यामि पृथक्तानि निशामय ।
यमश्च नियमश्चैवमासनं तदनन्तरम् ॥१६॥
प्राणायामस्ततः प्रोक्तः प्रत्याहारश्च धारणा ।
ध्यानं तथा समाधिश्चाप्यङ्गान्येतानि नारद ॥१७॥

(तत्र यमस्वरूपनिरूपणम्)

सत्यं दया धृतिः शौचं ब्रह्मचर्यं क्षमाऽऽर्जवम् ।
मिताहारस्तथाऽस्तेयमहिंसेति यमा दश ॥१८॥

(सत्यादीनां स्वरूपनिरूपणम्)

हितरूपं वचः सत्यं यथादृष्टार्थगोचरम् ।
दया दुःखासहिष्णुत्वम् सर्वभूतेषु सर्वदा ॥१९॥
आपद्यपि स्वकार्येषु कर्तव्यत्वस्थितिर्धृतिः ।
शौचं सर्वेन्द्रियाणां च वैधकर्मसु योग्यता ॥२०॥
ब्रह्मचर्यं स्वयोषित्सु भोग्यताबुद्धिवर्जनम् ।
अविकारमनस्त्वं तु क्षमा विकृतिहेतुषु ॥२१॥
वाङ्मनःकायवृत्तीनामेकरूपत्वमार्जवम् ।
मिताहाराश्रमस्थानां[1] श्रुतिचोदितभोजनम् ॥

1. मिताहारोऽश्रम° इति सर्वत्र पाठः; अनुमितपाठे संधिरार्ष इति कथंचिद्योज्यम्.

अस्तेयमस्पृहाऽन्येषां वित्ते वाक्कायमानसैः ।
अहिंसा वाङ्मनःकायैः परपीडानिवर्तनम् ॥२३॥

(अथ नियमस्वरूपनिरूपणम्)

सिद्धान्तश्रवणं दानं मतिरीश्वरपूजनम् ।
संतोषस्तप आस्तिक्यं ह्रीर्जपश्च तथा व्रतम् ॥
एते तु नियमाः प्रोक्ता दश योगस्य साधकाः ।

(सिद्धान्तश्रवणादीनां स्वरूपनिरूपणम्)

सिद्धान्तश्रवणं प्रोक्तं वेदान्तश्रवणं बुधैः ॥२५॥
दानं न्यायार्जितार्थस्य सत्पात्रे प्रतिपादनम् ।
विहिते कर्मणि श्रद्धा मतिरित्यभिधीयते ॥२६॥
यथाशक्त्यर्चनं भक्त्या विष्णोरीश्वरपूजनम् ।
संतोषोऽलमनेनेति प्रीतिर्यादृच्छिकेन वै[1] ॥२७॥
कृच्छ्रचान्द्रायणाद्यैश्च तपो देहविशोषणम् ।
आस्तिक्यमस्ति वेदैकगम्यं वस्त्विति निश्चयः ॥
निषिद्धकर्मकरणे व्रीडा ह्रीः प्रोच्यते बुधैः ।
गुरूपदिष्टस्वाध्यायमन्त्राभ्यासो जपः स्मृतः ॥
सदाचार्योपदिष्टेषूपायत्वप्रग्रहो व्रतम् ।

(अथासनानां स्वास्थ्यहेतुत्वम्)

आसनानि प्रवक्ष्यामि मुख्यानि विविधानि च ॥
आस्थायैषामन्यतमं योगिनो यान्ति निर्वृतिम् ।

---

1. मे D.

(मुख्यासनपरिगणनम्)

चक्रं पद्मासनं कूर्मं मायूरं कौक्कुटं तथा ॥३१॥
वीरासनं स्वस्तिकं च भद्रं सिंहासनं तथा ।
मुक्तासनं गोमुखं च मुख्यान्येतानि नारद ॥३२॥

(तत्र चक्रासनम्)

सव्योरुं दक्षिणे गुल्फे दक्षिणं दक्षिणेतरे ।
निदध्यादृजुकायस्तु चक्रासनमिदं परम् ॥३३॥

(अथ पद्मासनम्)

ऊर्वोरुपरि संस्थाप्य उभे पादतले सुखम् ।
पद्मासनमिदं प्रोक्तं सर्वकिल्बिषनाशनम् ॥३४॥

(अथ कूर्मासनम्)

गुदं [1]निपीड्य गुल्फाभ्यां व्युत्क्रमेण समाहितः ।
एतत्कूर्मासनं प्रोक्तं योगसिद्धिकरं परम् ॥३५॥

(अथ मयूरासनम्)

निवेश्य कूर्परौ [2]सम्यङ्नाभिमण्डलपार्श्वयोः ।
अवष्टभ्य भुवं पाणितलाभ्यां व्योम्नि दण्डवत् ॥
समोन्नतशिरःपादो मायूरासनमि[3]ष्यते ।
एतत्सर्वविषघ्नं च सर्वव्याधि[4]निवारणम् ॥३७॥

1. निरुध्य D.
2. सम्यग्गलमतुन्दिलपार्श्वयोः E.
3. °मुच्यते E F.
4. °निबर्हणम् B C.

(अथ कुक्कुटासनम्)

पद्मासनमधिष्ठाय जान्वन्तरविनिःसृतौ ।
करौ भूमौ निवेश्यैतद्व्योमस्थं[1] कुक्कुटासनम् ॥

(अथ वीरासनम्)

एकत्रोरुणि[2] संस्थाप्य पादमेकमथेतरम्[4] ।
ऊरुं पादे[3] निवेश्यैतद्वीरासनमुदाहृतम् ॥३९॥

(अथ स्वस्तिकासनम्)

उभे पादतले कृत्वा जानूर्वोरन्तरे दृढम् ।
ऋजुकायः समासीत[5] स्वस्तिकं तत्प्रचक्षते ॥४०॥

(अथ भद्रासनम्)

सीवन्याः पार्श्वयोर्गुल्फौ निवेश्याग्रपदे दृढम् ।
बध्वा कराभ्यां तत्प्रोक्तं भद्रासनमघापहम् ॥४१॥

(अथ सिंहासनम्)

सीवन्याः पार्श्वयोर्गुल्फौ व्युत्क्रमेण निवेश्य च ।
करौ जान्वोर्निधायोभौ प्रसार्य निखिलाङ्गुलीः ॥
नासाग्रन्यस्तनयनो व्यात्तवक्त्र ऋजुः सुधीः ।
एतत्सिंहासनं प्रोक्तं सर्वदेवाभिपूजितम् ॥४३॥

---

1. °स्थः A B C E F.
2. इत्थमेव सर्वत्र पाठः.
3. पद° E F.
4. °मथेतरत् इति सर्वत्र.
5. समासीनः A B C E F.

(अथ मुक्तासनम्)

मेढ्रादुपरि विन्यस्य सव्यगुल्फमिहेतरम् ।
गुल्फं विन्यस्य पाणी [1]चाप्यङ्गमध्ये निवेश्य च ॥
मुक्तासनमिदं प्रोक्तं स्थिता यत्र मुमुक्षवः ।

(अथ गोमुखासनम्)

उभयोर्गुल्फयोः कृत्वा पृष्ठपार्श्वावुभावपि ॥४५॥
व्युत्क्रमेणाथ पाणिभ्यां विन्यस्ताभ्यां [2]विगृह्य च ।
पृष्ठगाभ्यां पदाङ्गुष्ठावेतद्गोमुखमुच्यते ॥४६॥

(प्राणायामसिद्धये नाडीशुद्ध्यावश्यकता)

प्राणायामप्रसिद्ध्यर्थं नाडीशुद्धिमनन्तरम् ।
देहस्थवायुभिः कुर्यात्साग्निभिश्च तपोधन ॥४७॥

इति श्रीपाञ्चरात्रे तन्त्ररहस्ये अहिर्बुध्न्यसंहितायां

योगाङ्गयमनियमासननिरूपणं नामैकत्रिंशोऽध्यायः ।

ओम् ।

(आदितः श्लोकाः १८७२)

---

1. च हस्तमध्ये D; चाप्यङ्गं मध्ये (?) E.
2. प्रगृह्य D.

ओम् ।

## अथ नाडीशुद्धि—वायुजय—योगाङ्गप्राणायामादि-पञ्चक—निरूपणं नाम द्वात्रिंशोऽध्यायः ।

ध्यातं सकृद्भवानेककोट्यघौघं हरत्यरम् ।
सुदर्शनस्य तद्दिव्यं भर्गो देवस्य धीमहि ॥

(नाडीसंख्यास्थानादिप्रश्नः)

श्रीनारदः ।

नाडयः कति तिष्ठन्ति कीदृश्यः किंप्रमाणकाः ।
क्व वर्तन्ते शरीरेऽस्मिन्कथमासां विशोधनम् ॥

(वायुसंख्यास्थानादिप्रश्नः)

वायवः कति तिष्ठन्ति किंनामानश्च कीदृशाः ।
कानि कर्माण्यमीषां तु[1] तत्सर्वं[2] वक्तुमर्हसि ॥२॥

(तदुत्तरकथनारम्भः)

अहिर्बुध्न्यः ।

तदेतत्परमं गुह्यं शृणुष्वानन्यमानसः ।

---

1. च D; त्वं E F.
2. तत्सत्यं D.

(शरीरस्य षण्णवत्यङ्गुलात्मकत्वम्)

शरीरं सर्वजन्तूनामङ्गुलीभिरनामयम् ॥३॥
स्वाभिः स्वाभिः सुरमुने षण्णवत्यङ्गुलात्मकम् ।

(शरीरमध्यभागनिर्णयः)

शरीरमध्यः क इति शुश्रूषा चेन्महामुने ॥४॥
श्रूयतां पायुदेशात्तु द्व्यङ्गुलात्परतः परम् ।
मेढ्रदेशादधस्तात्तु द्व्यङ्गुलान्मध्य उच्यते ॥५॥

(शरीरस्थवह्निमण्डलस्वरूपम्)

चतुष्कोणं त्रिकोणं तद्वृत्तमाग्नेयमण्डलम् ।
चतुष्पदां नृणां चैव विहङ्गानां यथाक्रमम् ॥६॥

(नाडीमूलस्थानम्)

मेढ्रान्नवाङ्गुलादूर्ध्वं नाडीनां कन्द उच्यते ।
चतुरङ्गुलमुत्सेधं चतुरङ्गुलमायतम् ॥७॥
अण्डाकारं परिवृतं मेदोमांसास्थिशोणितैः ।

(नाभिचक्रस्थानम्)

तत्रैव नाभिचक्रं तु द्वादशारं प्रतिष्ठितम् ॥८॥
शरीरं ध्रियते येन तस्मिन्वसति कुण्डली ।

(नाभिचक्रस्यारेषु सुदर्शनमन्त्रवर्णन्यासः)

सौदर्शनस्य मन्त्रस्य यानि वर्णानि सन्ति वै ॥

---

1. पायुदेशात्परस्तात्तु द्व्यङ्गुलात्परतः परम् D.
2. °मुच्यते A B C E F.

विभज्य तानि सर्वाणि व्यञ्जनानि स्वरांस्तथा ।
चक्रेऽस्मिन्विन्यसेत्तानि प्राच्याद्यारेषु च क्रमात् ॥

(शिष्टाक्षराणां चक्रमध्ये न्यासः)

शेषाणि विन्यसेन्मध्ये [1]चक्रस्यास्य समाहितः ।

(नाभिचक्रंपरितः कुण्डल्यवस्थितिः)

वर्तते परितश्चक्रमष्टवक्राऽथ कुण्डली ॥११॥
अष्टप्रकृतिरूपेण भोगेनावेष्ट्य वैष्णवी ।
ब्रह्मरन्ध्रं सुषुम्नायाः [2]पिदधाति मुखेन वै ॥१२॥

(चक्रमध्ये अलम्बुसासुषुम्नयोः स्थितिः)

अलम्बुसा सुषुम्ना च मध्ये चक्रस्य तिष्ठतः ।

(अन्यासां द्वादशनाडीनां स्थानभेदाः)

अरे प्राच्ये सुषुम्नायाः कुहूर्नाडी वसत्यसौ ॥१३॥
अनन्तरारयुग्मे च [3]वैरुणा च यशस्विनी ।
दक्षिणारे सुषुम्नायाः पिङ्गला वर्तते क्रमात् ॥१४॥
तदनन्तरयोः पूषा वर्तते च पयस्विनी ।
सुषुम्नापश्चिमे चारे स्थिता नाडी सरस्वती ॥१५॥

---

1. चक्रनाभ्यां D.
2. संदधाति D.
3. वारणा D.

शङ्खिनी चैव गान्धारी तदनन्तरयोः स्थिते ।
उत्तरे च सुषुम्नाया इडाख्या निवसत्यरे ॥१६॥
अनन्तरं हस्तिजिह्वा ततो विश्वोदरा स्थिता ।
प्रदक्षिणक्रमेणैव चक्रस्यारेषु नाडयः ॥१७॥
वर्तन्ते द्वादशस्वेता द्वादश ब्रह्मणः सुताः ।

(मुख्यानां चतुर्दशनाडीनां नामानि)

इडा च पिङ्गला चैव सुषुम्ना च सरस्वती ॥१८॥
कुहूः पयस्विनी चैव वरुणा[2] च यशस्विनी ।
विश्वोदरा हस्तिजिह्वा गान्धारी[1] शङ्खिनी तथा ॥
अलम्बुसा च पूषा च मुख्यास्त्वेताश्चतुर्दश[3] ।

(देहवर्तिनाडीसंख्या)

द्विसप्ततिसहस्राणि[4] नाडीनां देहवर्तिनाम् ॥२०॥

(मुख्यतमास्तिस्रो नाड्यः)

तासु तिस्रो मुख्यतमाः सुषुम्नेडा च पिङ्गला ।

(तास्वपि सुषुम्ना मुख्या)

तासां सुषुम्ना मुख्या स्यादा मूर्धान्तं व्यवस्थिता ॥

---

1. गान्धारा D.
2. वारणा D.
3. उक्ताश्चैताः A B C E F.
4. °सहस्राण्यम् D E F.

(जीवस्य नाडीचक्रे भ्रमणम्)

प्राणारूढो भवेज्जीवश्चक्रेऽस्मिन्भ्रमते सदा ।
ऊर्णनाभिर्यथा तन्तुपञ्जरान्तर्व्यवस्थितः ॥२२॥

(सुषुम्नाया मध्यमरन्ध्रस्य कुण्डल्या पिधानम्)

पञ्च[1]रन्ध्र्याः सुषुम्नायाश्चत्वारो रक्तपूरिताः ।
कुण्डल्या पिहितं शश्वद्ब्रह्मरन्ध्रं तु मध्यमम् ॥

(अथ नाडीनां परिमाणनिरूपणम् )

प्राच्यः पार्श्वः सुषुम्नाया ललाटान्तं समुच्छ्रितः ।
प्रतीच्यः कन्धरान्तस्तु द्वौ पार्श्वौ सव्यदक्षिणौ ॥
आ पार्श्वशिरसः प्राप्तौ गुह्यमेतदुदाहृतम् ।
अलम्बुसाख्या नाडी स्यादा पादान्तं व्यवस्थिता ॥
आ मेढ्रान्तं कुहूः प्राप्ता [2]वारुणा विश्वदेहगा ।
आ दक्षिणपदाङ्गुष्ठं संप्राप्ताऽथ यशस्विनी ॥२६॥
प्राप्ता दक्षिणनासान्तं पिङ्गलाख्या तु नाडिका ।
पूषा पयस्विनी चैव दक्षिणाक्षिश्रुती गते ॥२७॥
जिह्वामूलमभिप्राप्ता नाडी नाम्ना सरस्वती ।
शङ्खिनी वामकर्णं च [3]गान्धारी वामलोचनम् ॥

1. इत्थमेव सर्वत्र पाठः.
2. वारणा D.
3. गान्धारा A D E F.

वामघ्राणं गता नाडी इडा नाम्नेति विश्रुता ।
प्राप्ता वामपदाङ्गुष्ठं हस्तिजिह्वा तु नाडिका ॥
विश्वोदरोदरं प्राप्ता प्रोक्ता नाडीगतिर्मया ।

(इडापिङ्गलयोश्चन्द्रसूर्यावस्थितिः)

इडायां वर्तते चन्द्रः पिङ्गलायां प्रभाकरः ॥३०॥
द्वावेव कुरुतः कालं भुङ्क्ते तं ब्रह्मनाडिका ।

(शारीरवायुवृत्तान्तकथनम्)

श्रूयतां वायुवृत्तान्तः शरीरान्तरवस्थितः ॥३१॥

(शरीरे दश वायवः)

प्राणापानसमानाश्चाप्युदानो व्यान एव च ।
नागः कूर्मश्च कृकरो देवदत्तो धनंजयः ॥३२॥

(प्राणादिवायूनां स्थाननिरूपणम्)

सदा निवसति प्राणो नाभिचक्रे समीरणः ।
आस्यनासिकयोर्मध्ये हृदि प्राणः प्रकाशते ॥३३॥
अपानो वसति प्रायो गुदमेढ्रोरुजानुषु ।
उदरे [2]वृषणे कट्यां [3]जङ्घे नाभौ प्रदीपवत् ॥३४॥

---

1. °नाडिकयो° E.
2. वङ्क्षणे B C.
3. इत्थमेव सर्वत्र पाठः.

गुदाग्न्यगारयोस्तिष्ठन्मध्येऽपानः प्रकाशते ।
व्यानः श्रोत्राक्षिमध्ये च कृकाट्यां गुल्फयोरपि ॥
घ्राणे गले च स्फिग्देशे वसत्यत्र न संशयः ।
उदानः [2]सर्वसिद्धिस्थः पादयोर्हस्तयोरपि ॥३६॥
समानः सर्वगात्रेषु सर्वं व्याप्य व्यवस्थितः ।

(अथ प्राणादीनां वृत्तिनिरूपणम्)

निश्वासोच्छ्वासकादीनि प्राणकर्म ईतीष्यते ॥
हानोपादानकर्मैव व्यानकर्मेति चेष्यते ।
उदानकर्म तत्प्रोक्तं देहस्योन्नयनादिकम् ॥३८॥
पोषणादि समानस्य शरीरे कर्म कीर्तितम् ।
उद्गारादिगुणो यस्तु नागकर्मेति चेरितम् ॥३९॥
निमीलनादि कूर्मस्य क्षुतं कृकरकस्य च ।
देवदत्तस्य देवर्षे तन्द्रीकर्मेति चेरितम् ॥४०॥
धनंजयस्य शौफादिसर्वकर्म प्रकीर्तितम् ।
एवं वायुगतिः सर्वा कर्म तेषां च कीर्तितम् ॥

(नाडीशोधनविधिः)

ततश्च सर्वनाडीनां कुर्याच्छोधनमात्मवान् ।

---

1. तिष्ठत्यत D.
2. इत्थमेव सर्वत्र पाठः; सर्वसंधिस्थः इति तु भवेत्.
3. छन्दोऽनुरोधादत्र संध्यभावः.
4. इत्थमेव सर्वत्र पाठः.

(तच्छोधनप्रकारः)

इडया वायुमापूर्य बाह्यं षोडशमात्रकैः ॥४२॥
धारयन्नुदरे वायुं मात्रा द्वात्रिंशतं ततः ।
स्मरेत्स्वमण्डले वह्निं तत्र रेफं सबिन्दुकम् ॥४३॥
नासाग्रे शशिनो बिम्बं स्मरेत्पीयूषवर्षिणम् ।
स्मृत्वा चन्द्रे वकारं च सबिन्दुं रेचयेत्ततः ॥४४॥
पुनः पिङ्गलयाऽऽपूर्य यथोक्तेनैव वर्त्मना ।
धृत्वा च मातरिश्वानमिडया रेचयेत्पुनः ॥४५॥
एवं त्रिसंध्यं त्रिष्कृत्वा कुर्यान्नित्यं समाहितः ।

(उक्तक्रमेण शोधयतो मासत्रयेण नाडीशुद्धिसिद्धिः)

एवं नियमयुक्तस्य कुर्वतः सर्वनाडयः ॥४६॥
मासत्रयेण शुद्धाः स्युरिति योगविदो विदुः ।

(ततो वायुजयः)

ततश्च मरुतां कुर्युर्विजयं देहवर्तिनाम् ॥४७॥

(वायुजयान्मनसः स्थैर्यम्)

ततश्च वायवो देहे यत्र यत्र वसन्ति वै ।
तत्र तत्र मनःस्थैर्यं वह्निना सह नारद ॥४८॥

---

1. धारयेदुदरे D.
2. स्मृत्वा A B.
3. सर्वतः D.
4. विदुः D.

(अथ प्राणायामविधिः)

प्राणायामं ततः कुर्यात्सर्वपापप्रणाशनम् ।

(शिखादिस्थानेषु मनोः षडक्षरन्यासः)

[1]शिखास्थाने नाभिचक्रे हृदयाम्बुरुहे ततः ॥४९॥
कण्ठकूपे भ्रुवोर्मध्ये जिह्वामूले तथैव च ।
मनोः षडक्षराण्येषु क्रमेणैव विचिन्तयेत् ॥५०॥

(प्राणायामप्रकारः)

वायुं षोडशमात्राभिरिडयाऽऽपूर्य चिन्तयेत् ।
हृन्मध्ये परमात्मानं चक्ररूपिणमव्ययम् ॥५१॥
यावच्छक्ति जपेन्मन्त्रमिमं सौदर्शनं स्मरन् ।
पुनः षोडशमात्राभी रेचयेत्पिङ्गलाह्वया ॥५२॥
अनया पुनरारोप्य धृत्वा चेतरया त्यजेत् ।
पूरणे कुम्भके चैव रेचने प्रणवं जपेत् ॥५३॥
दश पञ्चशतं चैव चतुर्दशशतं क्रमात् ।
गायत्रीं यदि वा जप्त्वा कुर्यादुक्तेन वर्त्मना ॥
एवं प्रतिदिनं कुर्यात्प्राणायामांस्तु षोडश ।
एते पुनन्ति मासेन महापातकिनं नरम् ॥५५॥

---

1. शिखि° D.
2. कर्णकूपे B C; कण्ठकूपे (?) E.
3. ध्यात्वा D.
4. पञ्चाशतं A E F.
5. [illegible]

(अथ प्रत्याहारनिरूपणम्)

प्रत्याहारं ततः कुर्यादङ्गैः पञ्चभिरन्वितम् ।
स्वभावेनेन्द्रियार्थेषु प्रवृत्तं मानसं बुधैः ॥५६॥
तद्दोषदर्शनात्तेभ्यः समाहृत्य बलेन तु ।
निवेशनं भगवति प्रत्याहार इति स्मृतः ॥५७॥

(अथ धारणास्वरूपनिरूपणम्)

विषयेषु च वैराग्यादभ्यासाद्गुणदर्शनात् ।
परमात्मनि संरोधो मनसो धारणा स्मृता ॥५८॥

(अथ ध्यानस्वरूपनिरूपणम्)

तदेवं धृतचित्तस्तु चक्ररूपं जनार्दनम् ।
ध्यायीत नियतस्तस्मिन्युञ्जानः प्रथमं मनः ॥५९॥

(वर्णाश्रमधर्माणां ध्यानेतिकर्तव्यतात्वम्)

रमणीये शुचौ देशे विविक्ते सजले वने ।
वर्णाश्रमोचिते धर्मे वर्तमानः प्रसन्नधीः ॥६०॥
शान्तः सर्वगुणोपेतः सममासनमास्थितः ।
ऋजुकायः स्वनासाग्रन्यस्तदृग्भक्तिमान्हरौ ॥६१॥
प्राणायामोत्थितेनैव वायुना साग्निना सुखम् ।
कुण्डल्यास्तु विनिर्भिद्य सुषुम्नामध्यवर्तिना ॥६२॥
विकास्य हृदयाम्भोजे तदाकाशे [1]शिखास्पदे ।
स्फुरद्वह्निशिखामध्ये चिन्तयेदद्भुताकृतिम् ॥६३॥

1. [illegible]स्पदे A B C E F.

(ध्यानालम्बनभूतध्येयस्वरूपनिरूपणम्)

पिङ्गाक्षं पिङ्गकेशाढ्यं ज्वलज्ज्वलनतेजसम् ।
दंष्ट्राकरालवदनं भ्रुकुटीभीमदर्शनम् ॥६४॥
[1]विद्युत्पुञ्जप्रतीकाशै[2]रूर्ध्वकेशैर्विराजितम् ।
विचित्रानन्दमाणिक्य[3]मुक्ताढ्यमुकुटोज्ज्वलम् ॥
[4]पूर्णचन्द्रप्रतीकाशमणिताटङ्कमण्डितम् ।
[5]भुजाभिरष्टभिर्युक्तं [6]रक्ताम्बरधरं विभुम् ॥६६॥
शङ्खचक्रगदाशार्ङ्गमुसलैः परमायुधैः ।
पाशाङ्कुशाम्बुजैरन्यैरुपेतं परदारुणैः ॥६७॥
दिव्यमाल्याम्बरधरं दिव्यचन्दनचर्चितम् ।
हारकेयूरकटक[7]काञ्चीमञ्जीरमण्डितम् ॥६८॥
अन्यैश्च विविधैश्चित्रैर्भूषणैरुपशोभितम् ।
पद्मासनस्थं भक्तानां विश्वेषामभयप्रदम् ॥६९॥
एवं ध्यायन्विमुच्येत [8]मुक्तः सकलकिल्बिषैः ।

(अथ समाधिस्वरूपनिरूपणम्)

[9]तदेवं स्मृतिसंतान[10]जनितोत्कर्षणं क्रमात् ॥७०॥
[11]अर्थमात्रावभासं तु समाधिं योगिनो विदुः ।

---

1. विद्युत्पिङ्ग° A E F. 2. °प्रतीकाशकेशपाशविराजितम् D.
3. °मुक्तामुकुटोज्ज्वलम् A B.
4. इतः प्रभृति पञ्चाशच्छ्लोका नष्टाः C पुस्तके. 5. भुजैरष्टभिरायुक्तं D.
6. रक्ताम्बर° E F. 7. °काञ्चीगुणसमन्वितम् A B E.
8. मुक्तः D. 9. तदेव D. 10. °जनितो° D.
11. अथ मन्त्रावभासं तु A B.

(समाधिनिष्ठस्य महिमानुवर्णनम्)

ततः समाधिमास्थाय तन्मयत्वमुपागतः ॥७१॥
तस्य प्रभावमखिलमश्नुते शक्तिशालिनः ।
अणिमादिगुणाः सर्वे भवन्त्यस्य महात्मनः ॥७२॥
निःसहायः सपत्नानामनीकानि बहून्यपि ।
हिनस्त्येष यथा चक्रं चक्रं दैतेयरक्षसाम् ॥७३॥
मनीषितानि सर्वाणि स्वयमस्योपयान्ति वै ।
सिद्धा विद्याधरा यक्षाः कैंकर्यं तस्य कुर्वते ॥
[1]देवाश्च ऋषयः [2]सर्वे गन्धर्वाप्सरसां गणाः ।
तदाज्ञाकारिणः सर्वे पिशाचोरगराक्षसाः ॥७५॥
निखिलभुवनजन्मस्थेमभङ्गैकहेतु-
र्भवति सकलवेत्ता सर्वदृक्सर्वशक्तिः ।
अभिमतबहुरूपो दैत्यरक्षांसि निघ्न-
न्परिहृतपरिवारो वर्तते पूर्णकामः ॥७६॥

इति श्रीपाञ्चरात्रे तन्त्ररहस्ये अहिर्बुध्न्यसंहितायां

नाडीशुद्धि-वायुजय-योगाङ्गप्राणायामादिपञ्चक-निरूपणं नाम द्वात्रिंशोऽध्यायः।

ओम् ।

(आदितः श्लोकाः १९४८)

---

1. देवा महर्षयः E.
2. सर्वे सर्वे चाप्सरसां गणाः A B.

ओम् ।

## अथ सुदर्शनप्रभाववर्णने मणिशेखरोपाख्यानवर्णनं नाम त्रयस्त्रिंशोऽध्यायः ।

ध्यातं सकृद्भवानेककोट्यघौघं हरत्यरम् ।
सुदर्शनस्य तद्दिव्यं भर्गो देवस्य धीमहि ॥

(उक्तार्थानुवादः)

श्रीनारदः ।

भगवन्कथितं सर्वं स्वरूपं च गुणास्तथा ।
परिवारास्तथा मन्त्राः शस्त्रैरस्त्रैश्च दैवतैः ॥१॥
शक्तिभिर्मण्डलैश्चित्रैः पद्मैर्बहुविधैरपि ।
एतैर्विशिष्टमाख्यातं यन्त्ररूपमनुत्तमम् ॥२॥
सर्वेषामेव जन्तूनां वर्णानां परमेश्वर ।
क्षत्रियस्य विशेषेण रक्षार्थं यन्त्रमीरितम् ॥३॥

(सुदर्शनप्रभावविषयकस्त्रिधा प्रश्नः)

एतस्य यन्त्रराजस्य महिमा कथितः पुरा ।
प्रभावश्चक्ररूपस्य देवस्य किमयं स्मृतः ॥४॥

सुदर्शननृसिंहस्य किमु किं परिवारजः ।
तमिमं संशयं छिन्धि सर्वज्ञोऽसि यतः प्रभो ॥

(विस्तरेण तदुत्तरकथनारम्भः)

अहिर्बुध्न्यः ।

सुदर्शनप्रभावोऽयं संक्षेपात्कथितो मया ।
[1]विस्तारमस्य देवर्षे कथ्यमानमिमं शृणु ॥६॥
सा भूमानं प्रति प्रायो महतां परिवारता ।
न चेद्भूमाऽस्य नास्त्येव परिवार्यत्वसंभवः ॥७॥

(सर्वस्यापि सुदर्शनात्मकत्वम्)

ततश्चक्रमयं सर्वं जगत्स्थावरजङ्गमम् ।

(सुदर्शनस्यैव कालचक्रात्मकत्वम्)

चक्रात्मानमनाद्यन्तं कालं प्रथमतः शृणु ॥८॥

(कालचक्रस्वरूपनिरूपणम्)

त्रिणाभियुक्तं षण्णेमि पञ्चारं चक्रमव्ययम् ।
संवत्सरमयं यत्तत्कालचक्रमिति स्मृतम् ॥९॥

(सर्वस्यापि कालचक्रवशवर्तित्वम्)

तद्वशे वर्तते [2]विश्वं चेतनाचेतनात्मकम् ।

---

1. इत्थमेव सर्वत्र पाठः.
2. नियम्, E.

(परमात्मा कालचक्रप्रवर्तकः)

परिवर्तयते देवस्तदेतच्चक्ररूपधृक् ॥१०॥

(जगच्चक्रस्वरूपनिरूपणम्)

अव्यक्तादिविशेषान्ततत्त्वरूपैररैर्वृतम् ।
चतुर्विंशतिसंख्याकैः पुरुषात्मकनेमियुक् ॥११॥

(परमात्मनस्तत्प्रेरकत्वम्)

जगच्चक्रमिति ख्यातं तच्च प्रेरयति स्वयम् ।

(परमात्मनो नाभिचक्रप्रेरकत्वम्)

स्थीयते द्वादशारेण नाभिचक्रेण देहिनः ॥१२॥
शरीरं तच्च येनैव प्रेर्यते चक्ररूपिणा ।

(परमात्मनः सर्वप्रेरकत्वनिगमनम्)

अतः प्रेरयिता देवः समस्तस्य जनार्दनः ॥१३॥
सुदर्शनवपुः श्रीमाननादिप्रभवाप्ययः ।

(तस्यैव जगत्सर्गस्थितिसंहारहेतुत्वम्)

ज्ञानस्वरूपो भगवान्पूर्णषाड्गुण्यविग्रहः ॥१४॥
स एव सर्वभूतानां स्रष्टा पालयिताऽन्तकः ।

(तस्यैव शिवरूपधरस्य शैवैराराध्यत्वम्)

स एव शिवरूपेण शैवैराराध्यते प्रभुः ॥१५॥

---

1. संख्यातैः E F.
2. एव B C E F.

(तस्यैव ब्रह्मरूपेण जगत्स्रष्टृत्वम्)

स एव ब्रह्मरूपेण सृजत्येतच्चराचरम् ।

(तस्यैव स्वांशरूपेण जगत्पालकत्वम्)

स एव पालयत्येतद्विष्णुर्भूत्वा जनार्दनः ॥१६॥

(तस्यैव रुद्ररूपेण संहर्तृत्वम्)

स एव रुद्ररूपेण संहरत्यखिलं जगत् ।

(तस्यैव बुद्धरूपत्वम्)

बुद्धात्मना च बौद्धानां स एव जगति स्थितः ॥

(तस्यैव दिगम्बररूपत्वम्)

स एव शाम्बराणां[1] च निरावरणरूपधृक् ।

(तस्यैव जिनरूपत्वम्)

स एव चार्वाकमते जिनेश्वरवपुर्धरः ॥१८॥

(तस्यैव यज्ञपुरुषरूपत्वम्)

स एव याज्ञिकानां च यज्ञपूरुषसंज्ञिकः ।

(मीमांसकमते यज्ञपुरुषस्यैवोपास्यत्वम्)

मीमांसकैः स एवायमुपास्यत्वेन चोद्यते ॥१९॥

(कापिलमते तस्यैव पुरुषरूपत्वम्)

कापिलैः पुरुषत्वेन स एवाख्यायते विभुः ।

---

1. शम्बराणां D.
2. इतःप्रभृति श्लोकद्वयं न दृश्यते A B E F.

(सर्वस्वरूपत्वात्तस्यैव सर्वफलप्रदत्वम्)

उपास्यत्वेन ये प्राहुर्यं य तत्तद्वपुर्धरः ॥२०॥
तेषां मनीषितं सर्वं स एवाशु प्रयच्छति ।

(देवादिरूपधारणादपि चक्ररूपधारणं भगवतः प्रियतमम्)

एतेषामेव देवानां स्वतनूनां जनार्दनः ॥२१॥
परं प्रीणाति भगवांश्चक्ररूपधरो हरिः ।

(तत्र हेतुनिरूपणम्)

स्वसमाश्रितरक्षायां परेषां च निबर्हणे ॥२२॥
इदमेव वपुर्धत्ते सुदर्शनमयं हरिः ।
रहस्यमेतत्कथितं भक्तोऽसीति तपोधन ॥२३॥

(तत्रेतिहासोदाहरणम्)

पुरावृत्तं सुरमुने शृणुष्व गदतो मम ।
दुर्धर्षो नाम राजर्षिर्धार्मिको दृढविक्रमः ॥२४॥
प्रमगन्दसुतः श्रीमान्नैचाशाखपुरे वसन् ।
धर्मतः पालयामास सप्तद्वीपवतीं महीम् ॥२५॥
वत्सला नाम तस्याभून्महिषी वरवर्णिनी ।
स[1] तस्यां जनयामास मणिशेखरमात्मजम् ॥२६॥
सोऽप्यवस्थामतिक्रम्य प्रथमां मणिशेखरः ।
रमणीयाकृतिः शूरः प्राप्तविद्यः परंतपः ॥२७॥
संप्राप्तयौवनः[2] श्रीमान्प्राचीं भार्यामविन्दत ।

---

1. "सा तस्य [illegible]" इति सर्वत्र.
2. संप्राप्तविद्यः B.

सर्वलोकाधिपत्यार्हमेनं दुर्धर्षणः सुतम् ॥२८॥
निधाय राज्ये तत्रैव जगाम तपसे वनम् ।
पितेव पालयामास स समुद्रवतीं महीम् ॥२९॥
प्राच्यां पुत्राः समभवंस्तस्य सप्त महात्मनः ।
पालयत्यवनीं तस्मिन्निखिलां मणिशेखरे[1] ॥३०॥
तस्मिन्काले समभवत्सर्वप्राणिभयंकरः ।
विकटाक्ष इति ख्यातो ब्रह्मदत्तवरो बली ॥३१॥
महासुरेण तेनैव पीडिता सकला मही ।
तत्पुत्रैस्तस्य पौत्रैश्च प्रपौत्रैः पूरिता मही ॥३२॥
तेऽसुराः सर्वभूतानि पीडयन्ति स्म भीषणाः[2] ।
विकटाक्षसमाज्ञप्ता भीमरूपाः सहस्रशः ॥३३॥
कांश्चिद्विद्रावयन्ति स्म कांश्चिज्जघ्नुस्तरस्विनः[3] ।
द्विजातीनां मुनिश्रेष्ठ यज्ञव्यासेधमाचरन्[4] ॥३४॥
सर्वेषामेव वर्णानां तत्तदाश्रमवासिनाम् ।
अबाधिषत कर्माणि विहितानि यथातथम् ॥३५॥
पृथिव्यां यानि रत्नानि धनानि विपुलानि च[5] ।

1. मणिशेखरः (?) A B E F.
2. भीषणम् A B.
3. तपस्विनः E F.
4. यज्ञस्यासेध° D.
5. ग्रामनानि वस्त्रानि च B C E F.

स्वस्मै प्रदापयामास विकटाक्षो महासुरः ॥३६॥
ततः संपीडिताः सर्वाः प्रजास्तेन दुरात्मना ।
व्यजिज्ञपंस्तद्वृत्तान्तं मणिशेखरभूभुजे ॥३७॥
क्रोधेन महताऽऽविष्टो राजा राजीवलोचनः ।
अभियोक्तुं मनश्चक्रे विकटाक्षं महासुरम् ॥३८॥
समानीय ततः सर्वान्सैनिकान्समनह्यत ।
तस्य संनाहमालोक्य मन्त्रिणस्तस्य संगताः ॥
इदमूचुरवध्यत्वं तस्य सेनाभियोगतः ।
पुरा दुरात्माऽवृणुत तपःसंतोषिताद्विधेः ॥४०॥
ये मामभिमुखायाताः शत्रवस्तै[2]रवध्यताम्[3] ।
एवमस्त्विति तेनोक्ते विकटाक्षोऽतिदर्पितः ॥४१॥
ततःप्रभृत्यजय्योऽभूच्छत्रुभिः संमुखागतैः ।
तस्मात्त्वमपि संनाहमुपसंहर तं प्रति ॥४२॥
ततः स शुश्रुवान्वाक्यं मन्त्रिभिः समुदीरितम् ।
ततः संग्रामसंनाहाद्विरराम महीपतिः ॥४३॥
ततः क्रतुं समाहूय पुरोधसमनागसम् ।
मन्त्रयामास नृपतिस्तेन मन्त्रविदा समम् ॥४४॥

---

1. ममाभि° D.
2. तैरजेयताम् D.
3. अत्र, "देहि इति वरं" इति पदत्रयाध्याहारेण वाक्यं योजनीयम्.
4. [illegible]ज्योऽभूत् शत्रुभिः D.

विकटाक्षस्य वृत्तान्तं सर्वमाख्याय तत्त्वतः ।
परैरजय्यतां चास्य युद्धे संमुखवर्तिभिः ॥४५॥
येनोपायेन भगवञ्जेष्यामस्तं दुरासदम् ।
ब्रूहि तं सकलाः स्वस्था भवेयुर्मामिकाः प्रजाः ॥
एवमुक्तस्तदा तेन भूभुजा स पुरोहितः ।
चिन्तयित्वा चिरायैतदुवाच मणिशेखरम् ॥४७॥
सत्यं न शक्यते जेतुं युद्धे स वरदर्पितः ।
भगवन्तमृते विष्णुं शङ्खचक्रगदाधरम् ॥४८॥
नीलजीमूतसंकाशं पुण्डरीकायतेक्षणम् ।
अप्रमेयं जगन्नाथमाश्रितार्तिविनाशनम् ॥४९॥
उत्तुङ्गमङ्गलगुणं दैत्यचक्रप्रमर्दनम् ।
नास्त्युपायान्तरं लोके तत्समं जगतीपते ॥५०॥
अतस्तं शरणं गच्छ सर्वभावेन भूपते ।
चक्ररूपधरं देवं भक्तरक्षणदीक्षितम् ॥५१॥
तत्प्राप्त्युपायं जानाति दुर्वासा मुनिसत्तमः ।
तत्प्रसादात्तमसुरं संहर्तुं सकलं क्षमम् ॥५२॥
तमृषिं सर्वभूतानां भीषणं गच्छ सांप्रतम् ।
एवमेवेति निश्चित्य राजा परमधार्मिकः ॥५३॥

1. °रसह्यतां B C.
2. सोऽयं A B C E F.
3. युद्धेषु वर° A B C E F.
4. तत्प्रसादात्सुरमुने D.
5. भूषणम् A B C.

निर्जगाम पुरात्तस्मात्सार्धं[1] तेन पुरोधसा ।
हिमवच्छिखरे रम्ये तपस्यन्तं महामुनिम् ॥५४॥
वसानं वल्कले शुभ्रे शुभ्रयज्ञोपवीतिनम् ।
जटाजिनधरं शान्तं ज्वलत्पावकसंनिभम् ॥५५॥
तं तथाऽवस्थितं राजा जगाम सपुरोहितः ।
स मुनिस्तौ मुनिश्रेष्ठो दृष्ट्वा राजपुरोहितौ ॥५६॥
तौ समभ्यर्च्य विधिना स्वागतं व्याजहार ह ।
इमं देशमनुप्राप्तौ किमर्थं वनगोचरम् ॥५७॥
भवन्तौ लक्षये साक्षाद्ब्रह्मक्षत्रे सविग्रहे ।
प्रमगन्दसुतं वीर जाने त्वां मणिशेखरम् ॥५८॥
सप्तद्वीपवती पृथ्वी तव वश्येति शुश्रुम ।
सर्वेष्वङ्गादिधर्मेषु भवतः किमनामयम् ॥५९॥
प्रजाः पालयसे सर्वाः स्वधर्मस्था महीपते ।
क्रतुं पुरोहितं लब्ध्वा भवतः किं न [2]सेत्स्यति ॥
अनूचानो मुनिः श्रेयान्सर्वेषां च [3]तपस्विनाम् ।
शान्तो दान्तः शुचिः श्रीमान्सत्यवादी दृढव्रतः ॥
धर्मज्ञः सर्वशास्त्रज्ञः सर्वकर्मसु कोविदः ।
[4]कर्मठः शीलसंपन्नो यायजूको निरामयः ॥६२॥

---

1. इतःप्रभृति श्लोकाष्टकं भ्रान्त्या त्यक्तं C पुस्तके.
2. भेत्स्यति A B C D.
3. तपस्विनाम् D.
4. कर्मण्यः A B E F.

कृपानुरक्तः सर्वेषु समबुद्धिः समाधिमान् ।
दैष्टिकः परमोदारो धृतिमान्राजसत्कृतः ॥६३॥
सर्वैरनुमतः शश्वद्भक्तिमान्पुरुषोत्तमे ।
षण्णां समयधर्माणामभिज्ञो नयकोविदः ॥६४॥
दयालुरभिजातश्च साधकः सर्वमन्त्रवित् ।
अन्यैश्च सद्गुणैर्युक्तः पुरोहित इति स्मृतः ॥६५॥
ईदृशोऽयं क्रतुः साक्षाद्बृहस्पतिरिवापरः ।
अनेन सर्वकार्याणि कुरुष्व मणिशेखर ॥६६॥
तथाऽपि कैश्चिदरिभिः परिभूत इवागतः ।
आख्याहि सर्वं नृपते किमागमनकारणम् ॥६७॥
एवमुक्त्वा महातेजा विरराम तपोधनः ।
अथ क्रतुर्मुनिश्रेष्ठः प्राह दुर्वाससं प्रति ॥६८॥
राजकार्यमशेषेण समागमनकारणम् ।
स्वराज्यं विकटाक्षेण पीड्यमानं दुरात्मना ॥६९॥
बलं महासुरस्यास्य दुर्जयत्वमरातिभिः ।
प्रजापतेर्वरप्राप्तिं तत्संततिविजृम्भणम् ॥७०॥
एवं बहुविधं तस्य चेष्टितं लोकगर्हितम् ।
व्याहृत्य प्रणिपत्यैनमुवाच विनयान्वितः ॥७१॥
ब्रूहि तस्य जयोपायं [1]त्वामयं शरणं गतः ।

1. त्वामहं D.

त्वमापदः परित्राहि राजानं धर्मवत्सलम् ॥७२॥
परित्रातान्यनेनैव भुवनानि तपोधन ।
एवमुक्त्वा मुनिवरं प्रणिपत्य पुरःस्थितौ ॥७३॥
कृपया परया वीक्ष्य षड्वर्णं मन्त्रमुत्तमम् ।
सौदर्शनं तयोः प्रादाच्चतुर्वर्गफलप्रदम् ॥७४॥
अनेन साधयाभीष्टमेतेनैव पुरोधसा ।
पुरोधा एव राज्ञां हि दृष्टादृष्टार्थसाधकः ॥७५॥
विशेषेणास्य देवस्य प्रतिष्ठाराधनादिषु ।
वैगुण्यमस्य तत्सर्वमपराधात्पुरोधसः ॥७६॥
तथा साद्गुण्यमस्यैव राज्ञः कार्येषु नारद ।
अन्यैः पौरोधसैः कार्यैः कार्यमेतस्य तच्च वै ॥७७॥
इत्युक्त्वा तौ तदा प्राह पुरावृत्तं महामुनिः ।
वाराहं रूपमास्थाय भगवान्पुरुषोत्तमः ॥७८॥
उज्जहार भुवं कल्पे वाराहे सलिलात्ततः ।
तदाऽऽह परमप्रीता देवं देवी वसुंधरा ॥७९॥
प्रियार्थमनुरक्तानां सदा भूमण्डले त्वया ।
वर्तितव्यं जगन्नाथ प्रियां तनुमुपाश्रितः[4] ॥८०॥

---

1. परस्मैपदान्तत्वेनैव सर्वत्र पाठश्छन्दोऽनुरोधात्.
2. चतुर्दश B C.
3. सर्वत्रायमेव पाठः, अत्रापि 'भूपते' इत्युचितम्.
4. सर्वत्रायमेव पाठः, स च कथं संगच्छेतेति चिन्त्यं सुधीभिः "तनुमुपेयुषा" इति तु युक्तम्.

एवमुक्तस्तया देव्या तदाप्रभृति केशवः ।
सालग्रामाह्वये पुण्ये न्यवसन्मण्डले भुवः ॥८१॥
सुदर्शनवपुः श्रीमान्भगवान्भक्तवत्सलः ।
अद्यापि देशमाहात्म्याद्भक्तानामनुकम्पया ॥८२॥
भुवः प्रार्थनया तत्र नित्यं संनिहितो हरिः ।
अत्र तप्तं तपो यत्तत्सहस्रगुणितं भवेत् ॥८३॥
मनुष्याः पशवस्तत्र कृमयश्च पतत्रिणः ।
ये मृताः शङ्खचक्राङ्कास्ते भवन्ति न संशयः ॥
भगवान्पुण्डरीकाक्षः सुदर्शनवपुर्धरः ।
संनिधत्ते सदा तत्र सन्मङ्गलगुणार्णवः ॥८५॥
तद्देशवासिनो मर्त्याः सुरास्तिर्यञ्च एव च ।
तरवश्चाचलाः सर्वे चक्रमुद्राङ्कितास्तदा ॥८६॥
सरस्वत्यास्तटे पुण्ये सालग्रामे जनार्दनम् ।
चक्ररूपं समाराध्य पूर्वोक्तेनैव वर्त्मना ॥८७॥
तत्प्रसादात्संपन्नांस्त्वं जहि दुष्टविचेष्टितान् ।
ततो निष्कण्टकां भूमिं पालयैनां पुरा यथा ॥

---

1. भूताना॰ A B C E F.
2. तरवश्च शिलाः सर्वे D.
3. ॰त्सपन्नान्स्वान् B C.
4. निष्कण्टकामिमां भूमिं पालयेथाः पुरा यथा A B C E F.

एवमुक्त्वा मुनिश्रेष्ठो राजानं सपुरोहितम् ।
उपरराम भगवान्दुर्वासा यमिनां वरः ॥८९॥
ततः प्रणम्य तं राजा पुरोधाश्चापि जग्मतुः ।
जैत्रं विमानमारुह्य नैचाशाखपुरं प्रति ॥९०॥
सालग्रामं ततो गत्वा भगवन्तं जनार्दनम् ।
संभृत्य सर्वसंभारांश्चक्ररूपं जगत्पतिम् ॥९१॥
पुरोधसैव नृपतिरर्चयामास मन्त्रतः ।
अर्चनेन जपेनैव ध्यानेन च महीपतिः ॥९२॥
तोषयामास मासेन भक्त्या परमया हरिम् ।
आविर्बभूव स तदा चक्ररूपी महीपतेः ॥९३॥
गदामुसलशङ्खारिधनुःपाशाङ्कुशाम्बुजान् ।
अष्टाभिर्बाहुभिर्दिव्यैर्बिभ्रत्पिङ्गललोचनः ॥९४॥
ऊर्ध्वपिङ्गलकेशाढ्यो रक्तवर्णो महाद्युतिः ।
दंष्ट्राकरालवदनः पङ्कजासनसंश्रितः ॥९५॥
रक्ताम्बरधरो हृष्टः सर्वभूषणभूषितः ।
दिव्यमालाधरोरस्कः सस्मितं समुदैक्षत ॥९६॥
समुदियाय ततो हरिवक्षसः
प्रतिहताखिललोकविलोचनम् ।

1. इत्यमेव सर्वत्र पाठः.
2. °वरः स्वोरः (?) D.
3. अत्र कियानपि ग्रन्थः पतितो भवेत्.
4. प्रद्युदितः° A B C E F.
41

वलयिताचिररोचिरिवाम्बरा-
स्त्परमचक्रमथैन्द्रमतिद्युति ॥९७॥
प्रथममेकमथो दश तच्छतं
[1]दशशतक्रमतो नियुतायुते ।
भवदथो बहुधा सकलं नभः
कलितचक्रमभूदतिभीषणम् ॥९८॥
युगपद्विकटाक्षदानवं
विनिहत्याखिलबान्धवैः सह ।
तदिहाविषयं व्यतिष्ठत
[2]क्षणमाप्लुत्य ययौ [3]सुदर्शनः ॥९९॥
शशास पृथ्वीं ससमुद्रकाननां
जिताखिलद्वीपपतिं सपत्तनाम् ।
यथा शचीशस्त्रिदिवं सदैवतं
पवित्रकीर्तिर्मणिशेखरस्तथा ॥१००॥

इति श्रीपाञ्चरात्रे तन्त्ररहस्ये अहिर्बुध्न्यसंहितायां
श्रीसुदर्शनप्रभाववर्णने मणिशेखरोपाख्यानवर्णनं नाम त्रयस्त्रिंशोऽध्यायः ।

ओम् ।

(आदितः श्लोकाः २०४८)

1. दशशतं तदथो D.
2. क्षत॰ A B C E F.
3. सुदर्शनम् D.

ओम् ।

## अथ ब्रह्मास्त्रादिमन्त्रस्वरूपनिरूपणं नाम

## चतुस्त्रिंशोऽध्यायः ।

ध्यातं सकृद्भवानेककोट्यघौघं हरत्यरम् ।
सुदर्शनस्य तद्दिव्यं भर्गो देवस्य धीमहि ॥

(ब्रह्मास्त्रादिमन्त्रस्वरूपप्रश्नः)

श्रीनारदः ।

भगवन्सर्वधर्मज्ञ सर्वलोकनमस्कृत ।
उक्तं चक्राद्विनिष्क्रान्तमस्त्रजातमिह प्रभो ॥१॥
तेषां स्वरूपं मन्त्राणां सर्वेषां वक्तुमर्हसि ।
विना त्वां न हि पश्यामि वेत्तारं कमपीश्वर ॥

(तदुत्तरकथनाय तेषां गुह्यतमत्वाख्यानम्)

अहिर्बुध्न्यः ।

महर्षे यत्त्वया पृष्टमेतद्गुह्यतमं परम् ।

---

1. स्वरूपमन्त्राणां D.
2. मेह A B C E F.

सुदुर्लभमनाख्येयं कस्मैचित्सर्वसाधकम् ॥३॥
तथाऽपि तव वक्ष्यामि भक्तोऽसीति महामुने ।
त्वयाऽप्येतन्न दातव्यं सुरासुरसमर्चितम्[1] ॥४॥

१ (तत्र प्रथमं ब्रह्मास्त्रम्)

फान्तं[2] वह्निसमायुक्तं व्योम[3] हालासमन्वितम् ।
मेषद्वयं दन्तयुतं[4] हालाहलमतः परम् ॥५॥
घनाद्यं वायुपूर्वं च दन्तयुक्तमथान्तिमम् ।
सरसं ऋक्षपर्यायं भान्तं[5] भृगुमतः परम्[6] ॥६॥
अम्बरं वायुसंयुक्तमरिमर्दनमप्युत[7] ।
प्रदीप्तमथ वक्तव्यं परमं च पदं ततः ॥७॥
तत्ते पदे प्रयोक्तव्ये गायत्र्या मध्यमं ततः ।
पदत्रयं प्रयोक्तव्यमेतद्ब्रह्मास्त्रमीरितम् ॥८॥

२ (अथ दण्डचक्रम्)

जीवः पञ्चमवर्गादि[8]श्चतुर्थाद्योऽन्तिमान्वितः ।

---

1. ॰नमस्कृतम् A B C.
2. वान्तं D.
3. व्योम्ना कालसमन्वितम् D.
4. द्वन्द्वयुतं A B C; दन्तयुगं E.
5. भ्रान्तं A B C.
6. अत्र षष्ठश्लोके द्वितीयतृतीयपादयोर्मन्त्राक्षरोद्धारविभ्रमः.
7. ॰सभ्यतः (?) D.
8. ॰पर्गीयं D.

भृगुः सदीर्घो [1]दण्डाद्यो मेषो यष्ट्यपराह्वयः ॥९॥
आत्मने च पदं तत्र चक्रायेति पदं ततः ।
वर्मान्त एष मन्त्रस्तु दण्डच[2]क्रमितीष्यते ॥१०॥

३ (अथ कालचक्रम्)

[3]वरुणं मायया युक्तं वान्तं वारुणसंयुतम् ।
यूपान्तं वह्निना युक्तं मोऽथ साग्नि[4]रथात्रियुक् ॥
[5]धान्तं कालात्मने[6]त्येतच्चक्रायेति पदं ततः ।
फडन्त एष मन्त्रस्तु [7]कालचक्रः [8]प्रकीर्तितः ॥१२॥

४ (अथ धर्मचक्रम्)

मोन यक्राच नेत्ममर्मा तथा ध नमयेति च ।
निलखीत्यपिचाकारो व्युत्क्रमेण [9]प्रदृश्यते ॥१३॥
धर्मचक्रमिमं मन्त्रं विदुः पूर्वे महर्षयः ।

५ (अथ विष्णुचक्रम्)

तारपूर्वं च हृदयं भगाद्यन्तौ वनादिमः ॥१४॥

---

1. दन्ताद्या (?) D.
2. ॰चक्र इतीष्यते A B C E F.
3. वारुणम् A B C E.
4. ॰रथाग्नियुक् A B C.
5. सान्तं D.
6. ॰त्येकचक्रायेति B C.
7. कालचक्रं B C E F.
8. प्रकीर्तितम् B C E F; प्रवर्तितः D.
9. प्रदृश्यते D E.

चण्डीशयुक्त आषाढस्तीव्रतेजस इत्यपि ।
पर्यायं लक्षसंख्याया आरेति च पदं ततः ॥१५॥
परमन्त्र प्रयोक्तव्यं भिन्धीति च पदं ततः ।
भीषयेत्यपि वक्तव्यं विष्णुचक्रमिदं विदुः ॥१६॥

६ (अथ इन्द्रचक्रम्)

यषशो कं तथा नीवानदा वन्नपिरूमहि ।
मिन्नेलज्वेति तारं च इन्द्र[1]चक्रमिदं स्मृतम् ॥

७ (अथ वज्रास्त्रम्)

तारं चतुर्मुखः स्व[2]न्ननाथवान्दीर्घसंयुतः ।
पिनाकी दीर्घसंयुक्तो जलाद्यं मायि सोमराट् ॥
फलान्तं भीषणपदं दम्भोले इत्यपि क्रमात् ।
[3]वर्मा[4]स्त्रयुक्तं विज्ञेयं वज्रास्त्रमिदमु[5]त्तमम् ॥१९॥

८ (अथ त्रिशूलम्)

हस्पूर्वं वह्निमायायुगाषाढो मायया बकः ।
वह्निर्भृगुः सचण्डीशः प्रयोक्तव्यस्ततः परम् ॥२०॥
अथ शूलवरायेति भीमरूपपदं तथा ।
दारयेति पदं तत्र मारयेति पदं ततः ॥२१॥

1. ॰चक्रमिति D.
2. खन्नं नाथवा (?) D.
3. ॰संयुतम् D.
4. वर्णास्त्र॰ D.
5. ॰मीरितम् A B C.

भीषयेति शिरोऽन्तं च त्रिशूलमिदमीरितम् ।

९ (अथ ब्रह्मशिरोऽस्त्रम्)

[1]क्रोधी दण्डी च चण्डीशवीरान्तं वृश्चिकादिमम् ॥
आषाढ[2]युक्सचण्डीशो हुं फड्ब्रह्मशिरः स्मृतम् ।

१० (अथ ऐषीकास्त्रम्)

हास्वा पक्षि यवद्रावि न्यसेरप मरेति च ॥२३॥
[3]पकारं [4]व्युत्क्रमेणेदमैषीकं परमं स्मृतम् ।

११ (अथ मोदकी)

भृगुः क्रोधी पिनाकी च सानन्तो मित्र इत्यपि ॥
संतापनान्ते माया स्यान्मोदकान्ते च तां न्यसेत् ।
कवचास्त्रयुतो मन्त्रो मोदकी [5]स्याद्वदाह्वया ॥२५॥

१२ (अथ शिखरी)

लोहितश्च भुजङ्गेशो भृगुर्भौतिकसंयुतः ।
मुण्डः सवाली खड्गीशो दीर्घयुक्तश्च पावकः ॥
उमेशो मायया युक्तः शिखरीति पदं ततः ।
ततो भेदिनि [6]फट् चैव शिखरी स्याद्वदा[7]ह्वया ॥

---

1. ब्रह्मशिरोऽस्त्रमन्त्रप्रतिपादकेऽस्मिन्नर्धद्वये मातृकाकोशारूढः पाठस्तथैव संरक्षितः; मन्त्रोद्धारस्तु चिन्त्यः सुधीभिः.

2. °युक्सब्रण्टीशो D.

3. पकारात् A B; वकारम् B C; सतारम् D.

4. व्युत्क्रमेणैवमैषीकं A B C.

5. स्याद्वदाह्वये A B C; स्याद्वदान्वये D.

6. फट्चैव° A B C. 7. °ह्वये A B C; °न्वये (?) D.

१३ (अथ धर्मपाशास्त्रम्)

वप्रान्तमाद्यं चण्डस्य मण्डपे मध्यमं ततः ।
दुर्वृत्तेति पदं तत्र गजपर्यायमप्युत ॥२८॥
द्विरावृत्तं बन्धयेति धर्मपाशमिदं विदुः ।

१४ (अथ कालपाशास्त्रम्)

अत्रिर्मायान्वितः श्वेतः ससोमेशोऽथ पावकः ॥
षष्ठस्वरसमायुक्तो लोहितश्च ततः क्रमात् ।
विष्टम्भयेति च पदं द्विरावृत्तमतः परम् ॥३०॥
वर्मान्त एष मन्त्रस्तु कालपाश इतीरितः ।

१५ (अथ वरुणपाशास्त्रम्)

तुन्दिलेति पदं पूर्वं सर्वेति च पदं ततः ॥३१॥
वारणेति ततो घोररूपेति च पदं क्रमात् ।
वर्म फट् चेति मन्त्रोऽयं वारुणं पाशमुत्तमम् ॥

१६ (अथ आद्योऽशनिः)

लोहितश्चैव वह्निश्च कूर्मः साषाढकं विषम् ।
भारभूतियुतः क्रोधी ततश्च मतिपश्चिमः ॥३३॥
अथ हस्तापरं नाम शोषयेति द्विरुच्चरेत् ।
अशनिद्वितयादाद्यमिमं मन्त्रं विदुर्बुधाः ॥३४॥

1. चन्द्रस्य B C E F.
2. जगत्पर्यायमप्युत (?) D.

१७ (अथान्योऽशनिः)

यषभी णरदानोमरप इत्यपरोऽशनिः ।

१८ (अथ पैनाकास्त्रम्)

अमरेशोऽथ खान्तोऽग्निसंयुक्तो दण्ड इत्यपि ॥
अङ्कुशो भिन्धि भिन्धीति पैनाकममितद्युति ।

१९ (अथ नारायणास्त्रम्)

विष्णुर्दण्डी पुनश्चाद्यो भुजङ्गो दीर्घसंयुतः ॥३६॥
आषाढो मायया युक्तः सुदर्शनपराह्वयः ।
दारणेति पदं तत्र विश्वमूर्ते इति क्रमात् ॥३७॥
वर्मास्त्रे च तथा ज्ञेये नारायणमिदं स्मृतम् ।

२० (अथ पाशुपतास्त्रम्)

सपिनाकी बको बिन्दुर्महामायासमन्वितः ॥३८॥
लोहितोऽथ बकश्चायं पञ्चमस्वरसंयुतः ।
कवचास्त्रे प्रयोक्तव्ये एतत्पाशुपतं स्मृतम् ॥३९॥

२१ (अथाग्नेयास्त्रम्)

तारं ततश्च हृदयं बहुवर्णाय चेत्यथ ।
वृत्तपिङ्गलशब्दं च लोचनेति ततः क्रमात् ॥४०॥
विश्वामित्रपदं चापि तथा प्रशमनेति च ।
दहेति शोषयेत्येवं प्रयुञ्ज्यान्नीषयेति च ॥४१॥

---

1. वरदा° E F.
2. कान्तो° D.

एतदाग्नेयमस्त्वग्र्यं सुरासुरसुपूजितम् ।

२२ (अथ दयितास्त्रम्)

बकश्च सूक्ष्मश्चण्डश्च भुजङ्गो दीर्घदण्डवान् ॥
व्योम खड्गीशसंयुक्तं वाली प्रक्षेपणेति च ।
वर्मान्तमेतं मन्त्रं तु दयितं परिचक्षते ॥४३॥

२३ (अथ वायव्यास्त्रम्)

वालिनं दण्डसहितं त्रिरावृत्तं विनिर्दिशेत् ।
यक्षरक्षःपदे चैव पिशाचादीनिति क्रमात् ॥४४॥
अमित्रांश्चेति च पदं ब्रूयाद्दूरमतः परम् ।
द्विरावृत्तं ततः कुर्यादुत्सारयपदं क्रमात् ॥४५॥
वायव्यमेतद्विख्यातं त्रैलोक्ये सर्ववन्दितम् ।

२४ (अथ हयशिरोऽस्त्रम्)

व्योम दण्डयुतं व्योम वाली शीताद्यमक्षरम् ॥
श्वेतो वह्नियुतो दीर्घो भुजङ्गो दीर्घसंयुतः ।
आषाढोऽथ महामायासंयुतो मुण्डमण्डितः ॥४७॥
कवलीकुर्विति ब्रूयादयं हयशिरोमनुः ।

२५ (अथ क्रौञ्चास्त्रम्)

नपन्तासरपेत्येष फडन्तः क्रौञ्च ईरितः ॥४८॥

---

1. बकः ससूक्ष्मः इति तु युक्तं प्रतिभाति.
2. ॰मुण्डितः A B; पण्डितः B C; पिण्डितः D.
3. हयशिरा मनुः D.

२६ (अथ प्रथमा शक्तिः)

णिरदाविरप तेंमूसदी व्युत्क्रमतो मनुः ।
वर्मान्त एष शक्तिभ्यामाद्यः सर्वारिभीषणः ॥

२७ (अथ द्वितीया शक्तिः)

नेसेतप्रो णिंकक्रुशं तेंमूजव इतीरितः ।
व्युत्क्रमेण हुमन्तोऽयं शक्तिभ्यामपरो मनुः ॥

२८ (अथ कङ्कालास्त्रम्)

[1]शिवोत्तमः सबिन्दुश्च क्रोधी [2]दीर्घान्वितोऽनलः ।
भान्तो दीर्घसमायुक्तो वाली फडिति [3]चान्ततः ॥
कङ्काल एष कथितो मन्त्रः सर्वभयंकरः ।

२९ (अथ मुसलास्त्रम्)

चण्डाद्यन्तौ क्रमाद्यस्य रूपाद्यन्तौ ततः परम् ॥
आवर्तयेद्घातयेति तदेतन्मुसलं स्मृतम् ।

३० (अथ कापालास्त्रम्)

चण्डो भुजङ्गश्चात्रिश्च बको वह्निसमायुतः ॥५३॥
मुण्डो द्विगण्डो मायी मा मेषद्वयमतः परम् ।
खड्गीशो भौतिकयुतो वह्निश्चण्डीशसंयुतः[4] ॥५४॥

---

1. शिवोत्तम इत्याद्यर्धत्रये कङ्कालमन्त्रोद्धारश्चिन्त्यः सुधीभिः.
2. दीर्घादिकोऽपरः D.
3. चान्ततः D.
4. अस्मिन्नर्थे मन्त्राक्षरोद्धारश्चिन्तनीयः.

अस्त्रान्त एष मन्त्रः स्यात्कापालमतिभीषणम् ।

३१ (अथ कङ्कणी)

अत्रिः सदीर्घो वह्निश्च मायया तु समन्वितः ॥
आषाढोऽनन्तसहितो वह्निर्दीर्घसमन्वितः ।
आद्यश्चतुर्थवर्गस्य चण्डीशेन समन्वितः ॥५६॥
दमयेति[1] द्विरावृत्त्या मनुरेष तु कङ्कणी[2] ।

३२ (अथ वैद्याधरास्त्रम्)

हृदयं प्रथमं न्यस्य भगेति च पदं ततः ॥५७॥
वतीत्येतदपि ब्रूयान्महामाये इति क्रमात् ।
कवचास्त्रे प्रयोक्तव्ये एतद्वैद्याधरं परम् ॥५८॥

३३ (अथासिरक्तास्त्रम्)

खण्डिताद्यरिपर्यायं[3] पदं शक्ते इति क्रमात् ।
वर्मान्तमसिरक्ताख्यमस्त्रमेतदुदाहृतम्[4] ॥५९॥

३४ (अथ गान्धर्वास्त्रम्)

क्रोधी पिनाकिसंयुक्तो दण्डभौतिकसंयुतः ।
मोहयेति द्विरभ्यस्य मनुर्गान्धर्व इष्यते ॥६०॥

३५ (अथ प्रस्वापनास्त्रम्) (प्रस्थापनास्त्रम्)

पश्चान्तकः सदण्डः स्यादथो गणपते अपि ।

1. गमयेति D.
2. कङ्कणिः D.
3. खण्डितेत्यरिपर्यायम् A B C.
4. ०रक्तारव्यं मन्त्रमे० A B C.

लोकेत्यनन्तरं ब्रूयादमित्रानित्यनन्तरम् ॥६१॥
प्रस्वापयेत्यथाभ्यस्य प्रस्वापनमुदाहृतम् ।

३६ (अथ प्रशमनास्त्रम्)

लोहितः सानलो जीवो महामायासमन्वितः ॥
अत्रिर्द्विरेण्डः पश्चारिर्लान्तो मायी तलादिमः ।
मायारूपिणि चेत्येतत्पदमन्ते प्रयोजयेत् ॥६३॥
एतत्प्रशमनं नाम सर्वशत्रुनिवारणम् ।

३७ (अथ सौर्यास्त्रम्)

तारं ततश्च हृदयं परायेति पदं ततः ॥६४॥
परेति पदमुच्चार्य तेजःपदमनन्तरम् ।
निबर्हणाय चेत्येतत्फडन्तं सौर्यमुच्यते ॥६५॥

३८ (अथ दर्पणास्त्रम्)

अत्रिर्दण्डी च खड्गीशो मायया च समन्वितः ।
अत्रिः सदीर्घो वह्निश्च मायी चाषाढकः स्मृतः ॥
अत्रिर्लोहितयुक्तश्च वह्निर्वर्म च फट् ततः ।
दर्पणास्त्रमिदं प्रोक्तं सर्वारिबलमर्दनम् ॥६७॥

३९ (अथ शोषणास्त्रम्)

बको दन्ती च शुक्राद्यो मायायुक्तस्तलादिमः ।

---

1. प्रस्वापय° D.
2. हिरण्डा पञ्चारी D.
3. सौर्युच्यते A F.
4. इतःप्रभृति सार्धश्लोकत्रयं A B C E F; पुस्तकेषु [illegible].

वैरीति मानसेत्येतत्प्रयोज्यं वर्म चान्ततः ॥६८॥
एतच्छोषणमित्युक्तं विश्वारातिक्षयंकरम् ।

४० (अथ संतापनास्त्रम्)

आषाढो दीर्घसंयुक्तो लोहितो माययाऽन्वितः ॥
आषाढो लोहितो वह्निर्भृगुर्भौतिकसंयुतः ।
मुण्डयुक्तं सवालि स्याद्भृगुराकाश एव च ॥७०॥
त्वमूर्ते इति च न्यस्य संतापयपदं ततः ।
आवर्तयेदिदं मन्त्रं संतापनमुदाहृतम् ॥७१॥

४१ (अथ विलापनास्त्रम्)

भृगुर्भौतिकसंयुक्तः सवह्निर्दण्डसंयुतः ।
महाकालः सदीर्घः स्याद्वाली दीर्घान्वितस्ततः ॥
आत्मने तु पदं पश्चात्फडन्तः स्याद्विलापनम् ।

४२ (अथ मदनास्त्रम्)

हुं येमाहामरवादु व्युत्क्रान्तं मदनं स्मृतम् ॥

४३ (अथ कन्दर्पदयितास्त्रम्)

चलगण्डमथो व्योम सामराधीश्वरं ततः ।
महाकालः सदन्तः स्याद्व्योम मेषस्ततः परम् ॥
मायाविन्निति च ब्रूयादस्त्रायेति पदं ततः ।
फडन्त एष मन्त्रस्तु कन्दर्पदयितं स्मृतम् ॥७५॥

---

1. व्युग्मं B C E F.
2. मन्त्रशब्दस्य नपुंसकान्तत्वमार्षम्.

४४ (अथ पैशाचास्त्रम्)

निहमोरप इत्येष व्युत्क्रान्तः सशिरोमनुः ।
पैशाचमिदमाख्यातमखिलारिविमर्दनम् ॥७६॥

४५ (अथ तामसास्त्रम्)

अजेश्वरं त्रिरावृत्तं सदण्डं प्रथमं पठेत् ।
तिमिरेति पदं ब्रूयाद्धस्तपर्यायमेव च ॥७७॥
प्रतिसैन्यं पदं पश्चात्संवृण्विति समभ्यसेत् ।
एतत्तामसमित्युक्तमस्त्रं सर्वारिमोहनम् ॥७८॥

४६ (अथ सौमनास्त्रम्)

विष्णुर्दन्ती महाकालः शिवोत्तममतः परम् ।
शक्ते इति पदं पश्चात्परस्तम्भन इत्यतः ॥७९॥
वर्माख्ये च ततो ब्रूयादेतत्सौमनमुच्यते ।

४७ (अथ संवर्तास्त्रम्)

भुजङ्गो दण्डवान्पश्चाद्रिपूनितिपदं वदेत् ॥८०॥
क्षिपेति द्विः शिरोऽन्तं स्यात्संवर्तमिदमुत्तमम् ।

४८ (अथ मौसलास्त्रम्)

तिग्मेति वृत्ते इति च पदे पूर्वं पठेत्क्रमात् ॥८१॥
भिन्धीति च द्विरभ्यस्तं शिरोऽन्तं मौसलं स्मृतम् ।

४९ (अथ सत्यास्त्रम्)

तारं प्रणामपर्यायं परमार्थाय इत्यथ ॥८२॥
रिपूनिति पदं ब्रूयाजहीत्येतद्विरभ्यसेत् ।

सत्यमस्त्रमिदं प्रोक्तं सर्वशत्रुनिबर्हणम् ॥८३॥

५० (अथ मायाधरास्त्रम्)

तारं ततश्च हृदयं देवायेति पदं वदेत् ।
मायात्मने इति पदं पठित्वा तदनन्तरम् ॥८४॥
फडन्त एष मन्त्रस्तु मायाधरमुदीरितम् ।

५१ (अथ घोरास्त्रम्)

शिवोत्तमः सदण्डश्च पुनश्चायं सदन्तकः ॥८५॥
वह्निस्ततो भुजङ्गः स्यादङ्ग्रीशेन च संयुतः ।
लोहितो दीर्घयुग्वाली चण्डायेति पदं वदेत् ॥
शिरोऽन्त एष मन्त्रस्तु घोरमस्त्रमुदीरितम् ।

५२ (अथ रत्यस्त्रम्)

भृगुरौद्रद्विकं[1] रेफं द्विः कृत्वा प्रादिकान्पुनः ॥
शिवोत्तमं ससयं च भुजङ्गेशास्ततः परम् ।
आषाढोऽमरयुङ्मेषं रत्यस्त्रं च पवित्रकम्[2] ॥८८॥

५३ (अथाघोरास्त्रम्)

चटं वीप्स्य पुनः प्रादिं क्रोधीशं व्योम चाभ्यसेत् ।
वारुणं च तथा कालं द्विर्वामनसबिन्दुकम् ॥८९॥
मीनमावृत्य [3]मेषं च आषाढं लोहितं पुनः ।

---

1. इतःप्रभृति श्लोकार्धद्वयं D पुस्तके भ्रान्त्या त्यक्तम्.
2. रत्यस्त्रमन्त्रप्रतिपादकेऽस्मिन्श्लोकत्रये मन्त्रोद्धारः सुधीभिर्विचिन्तनीयः.
3. मेषां च B C E F.

शक्याऽधिकमघोरास्त्रं वर्माऽस्त्रान्तमुदीरितम्[1] ॥

५४ (अथ सौमास्त्रम्)

भृगुं सानुमहाधीशं दण्डिनं प्रथमं पठेत् ।
द्विषन्तं पदमुच्चार्य तत उद्वेजयेति च ॥९१॥
अन्त्यं द्विरभ्यसेदेतत्सौमास्त्रमिदमीरितम् ।

५५ (अथ त्वाष्ट्रास्त्रम्)

प्रणवं हृदयं पूर्वं भृगुस्तेनैव संयुतः ॥९२॥
क्रोधी पिनाकी मेषश्च मायया च समन्वितः ।
महाकालद्वयं साग्निदीर्घयुक्तं ततः परम् ॥९३॥
भारभूतियुगाषाढो [2]मीनो दीर्घसमन्वितः ।
धाम्ने इति पदं ब्रूयात्परायेति पदं ततः ॥९४॥
एतत्त्वाष्ट्रं समाख्यातं सर्वलोकनमस्कृतम् ।

५६ (अथ दारुणास्त्रम्) (आरुणास्त्रम्)

विष्णुर्दण्डी पुनश्चाद्यो भुजंगो दीर्घसंयुतः ॥९५॥
आषाढो मायया युक्तो ज्वलनो बिन्दुसंयुतः ।
चतुर्मुखश्च क्रोधीशः फडन्तः स्यात्तु दारुणम् ॥

५७ (अथ भगास्त्रम्)

त्रिपक्षादिमर्मध्यान्तान्पठेद्विभजनेति च ।

---

1. [illegible]प्रतिपाद्येऽस्मिञ्श्लोकद्वये मन्त्रोद्धारक्रमश्चिन्तनीयः.
2. [illegible] द्विरावृत्तस्य प्रयोजनं चिन्त्यम्.
3. [illegible] D.
4. [illegible] B O.

प्रभुत्वायेति च पदं भगेति तदनन्तरम् ॥९७॥
आत्मने इति निर्दिश्य भगास्त्रं तत्फडन्तिमम् ।

५८ (अथ शीतेष्वस्त्रम्)

चकस्त्रिमूर्तिसहित आषाढश्च शिखी ततः ॥९८॥
पिनाकी खङ्गिको मायी लोहितश्च तथोपरि ।
संवर्तकः सदण्डश्च क्षिपेति द्विः पठेत्ततः ॥९९॥
शिरोऽन्त एष मन्त्रस्तु शीतेषुरभिधीयते ।

५९ (अथ मानवास्त्रम्)

लोहितश्च भुजंगश्च दीर्घो वाल्यथ लोहितः ॥
अग्निर्भोन्तश्च वाली च सवह्निर्दीर्घसंयुतः ।
अत्रिर्दीर्घसमायुक्तो भेदिने इति च क्रमात् ।
भीमरूपाय चेत्युक्त्वा नमोऽन्तं मानवं स्मृतम् ॥

६० (अथ रौद्रास्त्रम्)

दहेति द्विरभ्यस्य पूर्वं प्रचण्ड-
प्रयोगं विधायाथ रूपेति पश्चात् ।
ततो रुद्रधाम्ने इति न्यस्य पश्चा-
च्छिरोवृत्तमेतत्परं रौद्रमाहुः ॥१०॥

६१ (अथ प्रस्वापनास्त्रम्)

अत्रिस्त्रिमूर्तिसहितोऽथ शिवोत्तमश्च
सामिर्भृगुस्त्वमरनायकसंप्रयुक्तः ।

1. अग्निभ्रान्तश्च A B C D F. 2. [illegible]

घुप्स्यान्तिमः करिपदं च ततः प्रयोज्यं
मायात्मिके इति फडन्तमसौ मनुः स्यात् ॥
प्रस्वापनं तदिदमाहुरशेषवैरि-
सेनासमस्तपरिमोहनकारि मुख्यम् ।
इत्थं समस्तपरमास्त्रसमुद्धृतिस्तु
तत्त्वान्मया विरचिता परमेष्ठिसूनो ॥१०४॥
तारं सद्योजातमाषाढमन्ते
खड्गेशानं भौतिकेनैव युक्तम् ।
वह्निं मायासंवृतं तत्र चोक्त्वा
हृत्पर्यायं वर्म फट् चान्ततः स्यात्[1] ॥१०५॥

इति श्रीपाञ्चरात्रे तन्त्ररहस्ये अहिर्बुध्न्यसंहितायां
प्रस्वापनाद्यस्त्रमन्त्रस्वरूपनिरूपणं नाम चतुस्त्रिंशोऽध्यायः ।

ओम् ।

(आदितः श्लोकाः २१५३)

---

ओम् ।

## अथ संहारास्त्रस्वरूपनिरूपणं नाम पञ्चत्रिंशोऽध्यायः ।

ध्यातं सकृद्भवानेककोट्यघौघं हरत्यरम् ।
सुदर्शनस्य तद्दिव्यं भर्गो देवस्य धीमहि ॥

(संहारास्त्रस्वरूपप्रश्नः)

श्रीनारदः ।

भगवन्पूर्वमाख्यातं संहारास्त्राण्यशेषतः ।
सुदर्शनस्यापराङ्गान्निर्जग्मुरिति चेश्वर ॥१॥
तेषां स्वरूपविज्ञाने वर्तते मे कुतूहलम् ।
वक्तुमर्हस्यशेषेण यदि सानुग्रहो मयि ॥२॥

(तदुत्तरकथनारम्भः)

अहिर्बुध्न्यः ।

तदेतत्परमं गुह्यं पुरा नारायणेरितम् ।
भक्तोऽसीति तव स्नेहाद्वक्ष्यामि शृणु नार[illegible]

1. सम्यगाख्यातम् B C; सर्वमाख्यातम् E F.
2. तानि D.
3. नारायणोरितम् E.

१ (तत्र प्रथमं सत्यपदकम्)

लोहितोऽग्निसमायुक्तः खड्गीशो भारभूतिमान्।
आषाढयुग्मं मुण्डश्च मायी स्यात्खड्गनायकः ॥४॥
साम्न्याषाढयुगं पश्चात्क्रोधीशं निर्दिशेत्ततः।
परमेष्ठिन्निति ब्रूयादथो ऋतमिति क्रमात् ॥५॥
पिबेति सशिरोमन्त्रः सत्यवानिति विश्रुतः।

२ (अथ सत्यकीर्त्यस्त्रम्)

तारं ततश्च हृदयं सत्यधाम्न इति क्रमात् ॥६॥
शमयेति द्विरावृत्तं सत्यकीर्तिरिति स्मृतम्।

३ (अथ धृष्टास्त्रम्)

अत्रिः सामरनाथश्च साग्निः पश्चान्तकः स्मृतः ॥
महाकालश्च मज्जा च साग्निश्चोमापतिस्तथा।
प्रसादयेत्यथाभ्यस्तं धृष्टमस्त्रमिदं विदुः ॥८॥

४ (रभसास्त्रम्)

क्रोधी पिनाकी मायी स्यात्खड्गी मायासमन्वितः।
अत्रिः पिनाकी मुण्डश्च दीर्घयुक्तो रसस्तथा ॥
मासिर्द्विरण्डश्च भृगुर्दीर्घो वाली ततः परम्।

... D.
... D.

तमोऽन्त एव मन्त्रस्तु रभसः परिकीर्तितः ॥१०॥

५ (अथ प्रतीहारतराक्षम्)

तारं [1]शिरोयुतं मन्त्रं प्रतीहारतरं विदुः ।

६ (अथ पराङ्मुखाक्षम्)

लोहितो [2]वह्निसंयुक्तः स्तुतेति च पदं ततः ॥११॥
स्तोभात्मन इति ब्रूयात्पराङ्मुख इति क्रमात् ।
आयेति च हृदन्तं तु पराङ्मुखमुदाहृतम् ॥१२॥

७ (अथावाङ्मुखाक्षम्)

अमरेशस्तथाऽग्निश्च सवाल्याषाढनायकः ।
विद्रावणायेति [3]पदमवेति तदनन्तरम् ॥१३॥
नतेति च प्रयोक्तव्यं [4]फलाय तदनन्तरम् ।
शिरोयुक्तमिमं मन्त्रं मन्त्रिणोऽवाङ्मुखं विदुः ॥१४॥

८ (अथ लक्षाक्षम्)

नियुतापरपर्यायं [5]भेदिने इत्यनन्तरम् ।
निरासकेति चाप्युक्तं पदमायेति चेत्यथ ॥१५॥
हृदयान्तमिमं मन्त्रं लक्षाक्षं परिचक्षते ।

---

1. शिरोमयं D.
2. बिन्दुसंयुक्तः D.
3. पदं इवेति (?) B C.
4. फलायेत्यप्यनन्तरम् D.
5. भेदिते इत्यनन्तरम् B C; भेदिने तदनन्तरम् D.
6. "लक्षाक्षं" इति सर्वत्र.

९ (अथ विषमास्त्रम्)

खड्गीशो मायया युक्तः कूर्मो मायासमन्वितः ॥
आषाढो वह्निसहितो लोहितश्चाग्निसंयुतः ।
भृगुः सदीर्घो वह्निश्च मर्षयेति द्विरभ्यसेत् ॥१७॥
एतद्विषममित्युक्तमस्त्रं परमदुर्जयम् ।

१० (अथ दृढनाभास्त्रम्)

शान्ति पदं न्यसेत्पूर्वं कुर्विस्येतदतः परम् ॥१८॥
निबिडेति ततो न्यस्य गात्रशब्दं ततः परम् ।
विष्कम्भेति शिरोऽन्तं च दृढनाभमुदाहृतम् ॥

११ (अथ संहारकास्त्रम्)

ज्ञात्वा यक्षाचतस्त्रवि मोन ओं व्युत्क्रमो मनुः ।
संहारकमिदं चास्त्रं विदुः पूर्वे महर्षयः ॥२०॥

१२ (अथ दशाक्षास्त्रम्)

खड्गीशो मायया युक्तस्तेन युक्तो बकस्तथा ।
[illegible]न्तो दीर्घसमायुक्त आषाढो मुण्ड एव च ॥
[illegible] खड्गेश्वरो वह्निरुमेशो दीर्घसंयुतः ।
[illegible] [illegible]न्तो मन्त्रोऽयं दशाक्षः परिपठ्यते ॥

---

[illegible] B C E F [illegible]

१३ (अथ दशशीर्षास्त्रम्)

तारपूर्वं च हृदयं चलगण्डं ततो न्यसेत् ।
अम्बरं सामराधीशं वक्त्रायेति पदं ततः ॥२३॥
वज्रवारणशब्दौ च आयान्तं शतवक्त्रकम् ।
शिवोत्तमः सदन्तः स्यादग्निर्दीर्घसमन्वितः ॥२४॥
भृगुराषाढवान्साग्निः कर्तनायेति विन्यसेत् ।
दशेति च पदं पश्चाच्छीर्षायेति पदं ततः ॥२५॥
शिरोऽन्त एष मन्त्रस्तु दशशीर्षमुदाहृतम् ।

१४ (अथ शतोदरास्त्रम्)

तारं प्रणामपर्यायं लुप्तास्त्रेति पदं ततः ॥२६॥
जालायेति प्रयोक्तव्यं बहूदरपदं ततः ।
आयेत्यन्ते प्रयोक्तव्यं शतोदरमिदं विदुः ॥२७॥

१५ (अथ पद्मनाभास्त्रम्)

लोहितः पावकश्चैव नकुलीशस्ततः परम् ।
आषाढो मायया युक्तः प्रवृत्त इति च क्रमात् ॥[illegible]॥
नाशनायेत्यथाभ्यस्तं स्वस्त्यन्तं पद्मनाभकम् ।

१६ (अथ महानाभास्त्रम्)

महाकालोऽम्बरं दीर्घं लोहितो दीर्घसंयुत[illegible]

---

1. आघ्रातं (?) D.
2. पञ्चभिः D.

बकः खड्गीश्वरो मायी नाशनायेति च न्यसेत् ।
चक्रात्मन इति ब्रूयात्स्वस्त्यन्तो मन्त्रनायकः ॥
महानाभमिदं प्राज्ञा वदन्त्यखिलसाधकम् ।

१७ (अथ दुन्दुनाभास्त्रम्)

बकश्चैव महाकालो मायी चाषाढनायकः ॥३१॥
शूलायेति प्रयोक्तव्यं चण्डनाभाय [1]चेत्यतः ।
स्वस्ति चैव द्विरभ्यस्तं दुन्दुनाभमिदं विदुः ॥३२॥

१८ (अथ धृतिमाल्यस्त्रम्)

मेषो मायी च साङ्घ्रीशो भृगुश्चैवात्रिरेव च ।
मायायुक्तस्तथाषाढो दीर्घदण्डसमन्वितः ॥३३॥
क्रोधी च सामरेशः स्याद्बको दीर्घसमन्वितः ।
वाली दीर्घसमायुक्तो निवारितपदं ततः ॥३४॥
तेजसे इति च ब्रूयात्स्वस्त्यन्तोऽयं महामनुः ।
धृतिमालीति विख्यातः सर्वलोकेषु पूजितः ॥३५॥

१९ (अथ रुचिरास्त्रम्)

संवर्तकः सामरेशो मीनो बिन्दुसमन्वितः ।

---

1. चेत्यथ B.
2. [illegible] स्याद् D.
3. [illegible] B C.
4. [illegible] इति [illegible] D.
5. [illegible] मन्त्रोद्धारः [illegible]
6. [illegible] D.

मायी च क्षामयेत्येतदावृत्तं द्युतिमान्मनुः ॥३६॥
[2]द्विरावृत्तः प्रहरणं शं तनोतु पदं ततः ।
शिरोऽन्त एष मन्त्रस्तु रुचिरः परिकीर्तितः ॥

२० (अथ पितृसौमनसास्त्रम्)

लोहितो मायया युक्त आषाढो भारभूतिमान् ।
देवसारेत्यतः पाठ्यं सर्वाभयपदं ततः ॥३८॥
प्रदेत्येतत्प्रयोक्तव्यं सर्वशान्तिकराय च ।
शिरोऽन्त एष मन्त्रस्तु पितृसौमनसं स्मृतम् ॥

२१ (अथ विधूतास्त्रम्)

तारं तथा च हृदयं खड्गीशो मायया युतः ।
मीनश्चाङ्घ्रीशसंयुक्त आषाढो दीर्घसंयुतः ॥४०॥
चण्डो मायी पिनाकी चाप्याषाढो दीर्घसंयुतः ।
लोहितश्च करायेति पदं तत उदीर्य च ॥४१॥
परमेत्यथ धाम्ने च विधूतमिदमुत्तमम् ।

२२ (अथ मकरास्त्रम्)

नमस्त्रुटितशब्दौ च पठित्वा प्रथमं ततः ॥४२॥
शस्त्रास्त्रशब्दौ चोच्चार्य शक्तये इत्यनन्तरम् ।
शक्तिशालिन इत्युक्त्वा मकरायेति च क्रमात् ॥

---

1. द्युतिमात्मनः D.
2. द्विरावृत्तं B C E F.

प्रवृत्तास्त्रपदे चैव महार्णवपदं ततः ।
विभेदिन इति ब्रूयादेतन्मकरमुत्तमम् ॥४४॥

२३ (अथ करवीरसमास्त्रम्)

तारपूर्वं नमश्चोक्त्वा तिरस्कृतपदं ततः ।
गदाशब्दं समुच्चार्य [1]वीर्यायेति ततः पठेत् ॥
शिरोऽन्त एष मन्त्रस्तु [2]करवीरसमं स्मृतम् ।

२४ (अथ धनास्त्रम्)

तारं प्रणामपर्यायं लोहितं वह्निसंयुतम् ॥४६॥
आषाढोऽनन्तसंयुक्तो लोहितो मीन एव च ।
मुण्डः शिवं कुरुपदं द्विरावृत्तं धनं स्मृतम् ॥४७॥

२५ (अथ धान्यास्त्रम्)

वेतवाजीर्तरापेति व्युत्क्रमेण समीरितम् ।
शिरोऽन्त एष मन्त्रस्तु धान्यमित्युच्यते बुधैः ॥

२६ (अथ ज्यौतिषास्त्रम्)

लोहितो वह्निसंयुक्तश्[3]चण्डाद्यन्तौ ततः क्रमात् ।
बको मुण्डः समायी स्यात्सवह्निर्लोहितस्तथा ॥
बको विषं ततो मुण्डो मायी प्रकटितेति च ।
अथ विश्वं पदं चोक्त्वा ततः प्रशमयेति च ॥५०॥

---

1. वीरायेति D. 2. करवीरकरं D.
3. चण्डाद्यन्तस्ततः D.
4. सर्वत्राप्ययमेव पाठः, अथापि मन्त्रानुगुण्यात् "अथाशिवं पदं चोक्त्वा" इत्येव पाठो भवितुमर्हतीति प्रतिभाति.

द्विरभ्यस्तमिमं मन्त्रं ज्योतिषं परिचक्षते ।

२७ (अथ कृशनास्त्रम्)

क्रोधी पिनाकी मायी स्यादाषाढं च ततः परम् ॥
क्रोधी चानन्तसहितो[1] बकयुग्दीर्घमग्निमत् ।
मुण्डो वाली शिरोऽन्तश्च कृशनं समुदाहृतम्[3] ॥

२८ (अथ नैराश्यास्त्रम्)

मायी खड्गी शिखी चैव महामायी पिनाकवान् ।
कृतचक्रेति शब्दौ च चक्रायेति च निर्दिशेत् ॥
वषडन्तमिमं मन्त्रं नैराश्यं परिचक्षते ।

२९ (अथ विमलास्त्रम्)

खड्गेशः प्रथमं मायी चाषाढो दीर्घवह्निमान्[2] ॥५४॥
भृगुश्च मायासंयुक्त आषाढो दीर्घसंयुतः ।
मायी चण्डः पिनाकी च सानन्तोऽतः परं क्रमात् ॥
भृगुः साषाढदीर्घाग्निर्वाली[4] च तदनन्तरम् ।
विमलायेति चोच्चार्य शिरोऽन्तं विमलं स्मृतम् ॥

३० (अथ योगंधरास्त्रम्)

भृगुर्लान्तः सवह्निश्च मायाशब्दं पठेत्ततः ।
मयास्त्रायेति च पदं तमोबर्हण इत्यपि ॥५५॥

---

1. चानन्द° F.
2. दीर्घवह्निमान् E F.
3. कृशनास्त्रप्रतिपादकेऽस्मिन्पर्यन्ते मन्त्रोद्धारक्रमाविस्तरः.
4. वाली च B; वालीश (?) E F.

मूर्तये इति निर्दिश्य योगं चेति ततः पठेत् ।
धरायेति पदं चापि महते इत्यनन्तरम् ॥५८॥
भीषणायेति च ब्रूयादभ्यस्तं हृदयं ततः ।
योगंधरमिदं प्रोक्तमस्त्रं निखिलवन्दितम् ॥५९॥

३१ (अथ विनिद्रास्त्रम्)

मुण्डो मायी तथाऽऽकाश आषाढश्च ततः परम् ।
मेषो मायायुतोऽत्रिश्च सदीर्घाग्निस्ततः परम् ॥
मुद्रायेति शिरोऽन्तोऽयं [1]विनिद्रमभिधीयते ।

३२ (अथ नैद्रास्त्रम्)

विषमभ्यनिलोपेतं सषष्ठस्वरबिन्दुकम् ॥६१॥
पिण्डमेतच्छिरोऽन्तं च [2]नैद्रमस्त्रं विदो विदुः ।

३३ (अथ प्रमथनास्त्रम्)

प्रथमं तारमुच्चार्य हृदयं च ततः परम् ॥६२॥
विषं ततश्च दण्डीशं मायया च समन्वितम् ।
आषाढं च बकं चैव पठित्वा तदनन्तरम् ॥६३॥
ततः क्रोधी च साषाढश्चण्डीशेन समन्वितः ।
प्रसादयेत्यथावृत्तमस्त्रं प्रमथनं स्मृतम् ॥६४॥

३४ (अथ सार्चिमाल्यस्त्रम्)

वरुणेन समायुक्तो दीर्घयुक्तश्चतुर्मुखः ।

---

1. [illegible]मभिधीयते D.
2. नैद्रं मन्त्रविदो विदुः E F.

ततः पिनाकी सानन्तो लान्तो मायी ततः परम् ॥
ज्वालान्तो मायया युक्तः पिनाकी च ततः परम् ।
आद्यं चतुर्थवर्गस्य महासीति पठेत्ततः ॥६६॥
शक्र इत्यपि वक्तव्यं महामहस इत्यपि ।
मर्षयेति द्विरभ्यस्तं सार्चिमालिरयं मनुः ॥६७॥

३५ (अथ कामरूपास्त्रम्)

ह्रास्वा नञ्जभरश्चासरपत्तवृप्र इत्यपि[2] ।
रस्वा इति व्युत्क्रमेण कामरूपमिदं स्मृतम् ॥

३६ (अथ कामरुच्यस्त्रम्)

ओं नमो इत्युपक्रम्य मुण्डो मायासमन्वितः ।
तृतीयस्वरसंयुक्तश्चण्डो रान्तस्ततः परम् ॥६९॥
कबन्धेति पदं ब्रूयात्संधानायेति चान्ततः ।
शिखान्तोऽयं कामरुचिर्मन्त्रः पूर्वैः समीरितः ॥

३७ (अथ मोहनास्त्रम्)

भौतिकं दण्डसंयुक्तमङ्कुशं च ततो वदेत् ।
मोहवारिणिशब्दं च शिरोऽन्तं मोह उच्यते

1. इत्थमेव सर्वत्र पाठः.

2. अत्र द्वितीयपादे "प्र" इत्ययं पञ्चमो वर्णो लघुप्रयत्नेनोच्चार[illegible] ऽभ्यासाय.

3. °वारीणि° B; °वारुणि° D.

३८ (अथावरणास्त्रम्)

खड्गीशो दीर्घसंयुक्तो वह्निर्मायासमन्वितः ।
आषाढश्च महाकालो व्योम दीर्घान्वितं ततः ॥
महाकालश्च सानन्तो वाली चण्डीशसंयुतः ।
शिरोऽन्तोऽयं महामन्त्रः प्रोक्तमावरणं बुधैः ॥७३॥

३९ (अथ जृम्भकास्त्रम्)

द्विरण्डौ द्वौ क्रमाद्यस्य सदण्डौ चतुराननम् ।
मुण्डमुच्चार्य परतः स्वस्तीतिपदमुद्धरेत् ॥७४॥
शिरोऽन्तोऽयं महामन्त्रो जृम्भकः परिकीर्तितः ।

४० (अथ सर्वनाभकास्त्रम्)

चण्डोऽनन्तसमायुक्तो मायी चात्रिस्ततः परम् ॥
आद्यश्चतुर्थवर्गस्य सेनापदमनन्तरम् ।
जीवातव इति ब्रूयाच्छिरोऽन्तं सर्वनाभकम् ॥

४१ (अथ भृशाश्वतनयास्त्रम्)

वेगाद्यन्तौ क्रमादुक्त्वा विश्वाद्यं च ततः परम् ।
जितशब्दमथोच्चार्य वैनतेयाय इत्यपि ॥७७॥
शिरोऽन्तोऽयं मनुः प्रोक्तो भृशाश्वतनया इति ।

४२ (अथ संधानास्त्रम्)

भृगुश्च वरुणः साग्निर्मुण्डो मायी ततः क्रमात् ॥

खड्गीशः साग्निर्दीर्घश्च लोहितोऽथ उमापतिः । [1]
शं कुर्विति द्विरभ्यस्तो मन्त्रः संधानमुच्यते ॥

४३ (अथ वारुणास्त्रम्)

भृगुर्लान्तोऽग्निसहितो दण्डेन च समन्वितः ।
भृगुर्व्योमाथ जीवश्च वरुणेन समन्वितः ॥८०॥
शिरोऽन्त एष मन्त्रस्तु वारुणं परिकीर्तितम् ।

(अस्त्राणां मूर्तत्वामूर्तत्वजिज्ञासया नारदेनाहिर्बुध्न्यस्तुतिः)

श्रीनारदः ।

भगवन्देवदेवेश सर्वलोकनमस्कृत ॥८१॥
सर्वाध्यक्षाप्रमेयात्मन्नचिन्त्यज्ञानगोचर ।
त्वामाश्रित्य सुराः सर्वे लभन्ते काङ्क्षितं फलम् ॥
त्वत्तः सर्वं समुद्भूतं जगत्स्थावरजङ्गमम् ।
त्वयैव पालितं सर्वं संहृतं च महेश्वर ॥८३॥
त्वमादिः सर्वजगतामनादिस्त्वं जगन्मय ।
पुरुषस्त्वं त्वमव्यक्तो व्यक्तस्त्वं विश्वभावन ॥
यज्ञस्त्वमिज्यो यष्टा त्वमग्नयस्त्वं त्वमाहुतिः ।
वषट्कारस्त्वमोंकारो वेदवेद्यस्तथा भवान् [3] ॥८५॥
त्वत्त एव च भूतानि प्रवर्तन्ते महेश्वर ।
करणं कारणं कर्ता कार्यं कर्म फलं विभो ॥८६॥

1. अत्र संध्यभाव आर्षः; "लोहितो य उमापतिः" इति D पुस्तक...
2. साधितं D.
3. वेदावेद्यं तथा (?) D; वेदोवेद्य (?) E F.

त्वमेव भूतं भव्यं च भवच्च परमेश्वर ।
निर्गुणस्त्वं जगत्स्रष्टौ जुषमाणो गुणानपि ॥८७॥
अणीयसामणीयांस्त्वं महांश्च त्वं महीयसाम् ।
अनुरक्तस्त्वयीशान प्रयाति परमां गतिम् ॥८८॥
अपरक्तो व्रजत्येव निरयं [2]विकृतिर्न ते ।
कलाकाष्ठामुहूर्तादिकालश्च त्वं कलात्मकः ॥८९॥
सर्वदा सर्वभूतेषु निवसन्नपि शंकर ।
न लिप्यसे तद्विकारैः पद्मपत्रमिवाम्भसा ॥९०॥
करामलकवत्सर्वं सर्वदा कलयस्यतः ।
प्रोक्तवानसि सर्वास्त्रस्वरूपं पृच्छतो मम ॥९१॥

(अस्त्राणां मूर्तत्वामूर्तत्वप्रश्नः)

किमेषां मूर्तयः सन्ति किं वाऽमूर्तान्यमूनि वै ।
छेत्तुमर्हसि देवेश तमिमं संशयं विभो ॥९२॥

(तेषां मूर्तत्वप्रतिपादनम् )

अहिर्बुध्न्यः ।

तेषां भवन्ति गात्राणि भीमरूपाणि नारद ।
वक्रभीषणदंष्ट्रोग्रमुखत्रस्तजनानि वै ॥९३॥
भीषिताघूर्णितारक्तवृत्तनेत्रयुतानि वै ।

---

1. गुणानपि D.
2. प्रकृतिर्न ते D.
3. …स्तत्वं D.
4. … A B C E F.

विद्युत्पुञ्जप्रतीकाशकेशभीमानि नारद ॥९४॥
कानिचिद्धूम्रवर्णानि भास्कराभानि कानिचित् ।
कानिचिच्छुक्लवर्णानि वह्निकल्पानि कानिचित् ॥
महापरिघसंकाशभीमरूपैः करैः परैः ।
यथास्वं धृतशस्त्राणि महान्ति बलवन्ति च ॥९६॥
वेगवन्ति प्रमाथीनि वैरिदर्पद्रुहाणि च ।
उपासितानि सततं सुरासुरवरैरपि ॥९७॥
एवंभूतान्यधिष्ठाय गात्राण्यस्त्राणि नारद ।
विचरन्ति यथाकाममकुतोभीतिमन्ति च ॥९८॥

अकलितमहिमानि भीषणानि
ज्वलितवपूंषि समुद्यतायुधानि ।
अविहतगमनानि चास्त्रमुख्या-
न्यनवरतं भुवनेषु संचरन्ति ॥९९॥

इति श्रीपाञ्चरात्रे तन्त्ररहस्ये अहिर्बुध्न्यसंहितायां
संहारास्त्रस्वरूपनिरूपणं नाम पञ्चत्रिंशोऽध्यायः ।

ओम् ।

(आदितः श्लोकाः २२५२)

ओम् ।

## अथ राज्ञां सुदर्शनयन्त्राराधनविधान—केशवादि-गुणप्रधानभाव—व्यवस्थापनं नाम षट्त्रिंशोऽध्यायः।

ध्यातं सकृन्नृणामनेककोट्यघौघं हरत्यरम् ।
सुदर्शनस्य तद्दिव्यं भर्गो देवस्य धीमहि ॥

(सौदर्शनयन्त्रस्य पूर्वापराङ्गध्यानार्चनप्रकारप्रश्नः)

श्रीनारदः ।

भगवन्कथिताः सर्वे सर्वास्त्राणां महौजसाम् ।
प्रवर्तकास्तथा मन्त्रास्तथैव च निवर्तकाः ॥१॥
एतच्च कथितं सर्वं सर्वज्ञेन त्वया पुरा ।
सौदर्शनं महायन्त्रमर्चनीयं महात्मभिः ॥२॥
उक्तेनैव प्रकारेण चतुर्वर्गफलार्थिभिः ।
राजा चेदर्चयेदेतत्सौदर्शनमुखं परम् ॥३॥
उभयं चास्य यन्त्रस्य मुखमाराधयेदिति ।

1. तथैवैतन्निवर्तकाः D.
2. महामन्त्र॰ D.
3. मुखं माराधयेदिति D.

कथमस्यापराङ्गं च ध्यायेत्कुर्याच्च वा कथम् ॥४॥
छेतुमर्हसि संदेहमिमं मम महेश्वर ।

(तदुत्तरकथनम्)

अहिर्बुध्न्यः ।

एवं ध्यात्वाऽर्चयेद्राजा यन्त्रमेतन्महाद्युति ॥५॥

(तत्र पूर्वाङ्गे यन्त्रमध्ये सुदर्शनपुरुषध्यानम्)

यन्त्रमध्ये महात्मानं पुरुषं भीमलोचनम् ।
ऊर्ध्वपिङ्गलकेशाढ्यं ज्वलदंष्ट्रोज्ज्वलाननम् ॥६॥
तिष्ठन्तमष्टभिर्युक्तं भुजैः परमशोभनैः ।
चक्राब्जमध्ये तिष्ठन्तमवष्टभ्य महद्धनुः ॥७॥
समभङ्गमुदाराङ्गं रक्ताम्बरधरं विभुम् ।
शङ्खचक्राब्जमुसलपाशाङ्कुशगदाधरम् ॥८॥
सर्वाभरणसंयुक्तं पुष्पमालाविभूषितम् ।

(परितः केशवादिद्वादशमूर्तिध्यानम्)

[2]सुदर्शनमिमं ध्यात्वा परितश्चिन्तयेत्ततः ॥९॥
तिष्ठतो यदि वाऽऽसीनान्केशवादीन्सविग्रहान् ।
उक्तेनैव प्रकारेण भूषणैरायुधैर्युतान् ॥१०॥
प्रधानभूतान्परमान्यथाकामनिवेशितान् ।

1. °मपराङ्गस्य A B C E F.
2. सुदर्शनमिदं A B C

(ततो विष्ण्वादिषोडशमूर्तिध्यानम्)

ततः षोडशभिर्देवैर्विष्णवाद्यैरायुधान्वितैः ॥११॥
मूर्तिमद्भिश्च सोद्योगैः सर्वाभरणसंयुतैः ।
एतैः पञ्जरितं ध्यायेद्यन्त्रराजमनुत्तमम् ॥१२॥

(परितो मूर्तिमत्संहारास्त्रध्यानम्)

परितस्तान्यपि ध्यायेन्मूर्तिमन्ति महान्ति च ।
संहारास्त्राणि सर्वाणि साञ्जलीन्यद्भुतानि च ॥
अकुतोभयशालीनि शक्तिमन्ति समन्ततः ।

(ततो मूर्तिमत्प्रवर्तकास्त्रध्यानम्)

ततः प्रवर्तकान्येवं ध्यायीतास्त्राणि नारद ॥१४॥
मूर्तान्यत्तुमिवाशेषभुवनान्युज्ज्वलानि च ।

(ततो नारसिंहध्यानम्)

एवं चक्रक्रमेणैतदभिध्यायोपरि स्मरेत् ॥१५॥
दधानं नारसिंहस्य वपुर्नारायणं परम् ।
मूलकोशं परं देवमधोभागेऽथ चिन्तयेत् ॥१६॥
यन्त्रं चक्राकृति श्रीमद्दीप्तनेमिसमन्वितम् ।
नेमेरस्य चतुर्दिक्षु महाज्वालां विचिन्तयेत् ॥
चक्रकौमोदकीशार्ङ्गखड्गहस्तान्स्मरेत्क्रमात् ।
एवमेकमुखं ध्यायेद्यन्त्रस्यास्य महाद्युतेः ॥१८॥

---

1. इतःप्रभृति आ पञ्चाशाध्यायसमाप्ति C पुस्तके नष्टम्.
2. एवमेव मुखं A B E F.

(अथापराङ्गध्यानम्)

अपराङ्गं महामन्त्रैः सर्वतः समलंकृतम् ।
अन्तस्तारं समारभ्य यदि वा विष्णुपञ्जरम् ॥
पूर्वोक्तं तद्विना मूर्तेस्तत्तन्मन्त्रसमुच्चयम् ।
यथास्थानं स्मरेत्

(अपराङ्गे सर्वास्त्राणां मन्त्रमात्रध्यानम्)

तस्य पर्यन्ते चिन्तयेत्ततः ॥२०॥
सर्वसंहरणास्त्राणां मन्त्रानेव च केवलम् ।
तदनन्तरमन्येषामस्त्राणां च प्रवर्तकम् ॥२१॥
मन्त्रजालमभिध्याय सुनेमि सुरपूजितम् ।
महायन्त्रं महाशक्ति चक्ररूपमनुत्तमम् ॥२२॥
उच्चैर्विशेषणैर्जुष्टं सर्वकामैकसाधनम् ।
अस्य चक्रस्य मध्ये यद्वर्तते पुरुषः परः ॥२३॥
तस्मान्निगद्यते लोके चक्रवर्तीति सूरिभिः ।

(एतद्यन्त्राभ्यर्चनाद्राज्ञां चक्रवर्तित्वलाभः)

तस्मादभ्यर्चयेदेतद्यो राजा भक्तिसंयुतः ॥२४॥
सोऽचिरेणैव कालेन चक्रवर्तित्वमाप्नुयात् ।

(अन्यैरपि राजहितैषिभिरेतदर्चनं कार्यम्)

राजा वा राजभृत्या वा मन्त्रिणो वाऽथवा परे ॥

---

1. मूर्तेः A B E F. 2. °हारणास्त्राणां A B E F.
3. मन्त्रराज° D. 4. यो वर्तते E.

राज्ञां हितैषिणः सर्वे पूजयेयुरिदं परम् ।

(अन्येषामपि श्रीकामानामेतदभ्यर्चनम्)

अन्ये च ये तु विपुलां श्रियमिच्छन्ति मानवाः ॥
तैर्नित्यमर्चनीयं स्यादिदं सर्वार्थसाधकम् ।
राज्ञामेव विशेषेण यदेतत्समुदीरितम् ॥२७॥
तद्राजव्यतिरेकेण ये निर्दिष्टास्तु मानवाः ।
तेषां विभूतिर्महती राज्ञा संपत्स्यते ध्रुवम् ॥२८॥
लोहैर्वा शिलया वाऽपि यो हि निर्माय पूजयेत् ।
विपुलां श्रियमाप्नोति दीर्घमायुश्च विन्दति ॥२९॥
आरोग्यं चाश्नुते सर्वे तद्वंश्या दीर्घजीविनः ।

(द्विमुखयन्त्रार्चने मन्त्रोपदेष्टुर्ब्राह्मणस्यैवाधिकारः)

परं मन्त्रोपदेष्टैव ब्राह्मणो द्विमुखं यजेत् ॥३०॥
ज्ञानेन तपसा शक्त्या सोढुं तस्योभयात्मनः ।
स एव शक्नुयात्तस्य प्रभावं परमं मुने ॥३१॥

(आदित्यमण्डलाक्ष्यादिस्थानां पुरुषाणामभिन्नत्वम्)

योऽसावादित्यबिम्बस्थः पुरुषो दृश्यते परः ।
हिरण्मयो य एवान्तरक्षिण्यपि च दृश्यते ॥३२॥

---

1. च D.
2. °दर्शिन: A B E F.
3. त्रिमुखं (?) D.
4. °ऽयमेवान्त° E F.

सोऽप्ययं नाभिचक्रस्य मध्ये यो वर्तते पुमान् ।

(तस्यैव कालचक्रादिप्रवर्तकत्वम्)

योऽयं कालाख्यचक्रस्य प्रेरकः पुरुषोऽव्ययः ॥

युगचक्रस्य नेतारमेनमेव विदुर्बुधाः ।

एनं महर्षयोऽप्याहुर्जगच्चक्रप्रवर्तकम् ॥३४॥

(विमाने संस्थाप्य तस्यैव समभ्यर्चनमैहिकामुष्मिकफलसाधकम्)

सर्वलोकैककर्तारं सर्वलोकैकसाक्षिणम् ।

एनं विमाने संस्थाप्य चक्रवर्तिनमव्ययम् ॥३५॥

यः पूजयति तस्यायं लोकश्चामुष्मिको भवेत् ।

(विमानकरणारम्भस्यापि महाफलकत्वम्)

सुदर्शनविमानं यः प्रारभेत महामुने ॥३६॥

इह सर्वानवाप्यार्थान्विष्णुलोकं स यास्यति ।

(विमानकरणार्थस्य कर्षणस्यापि सर्वसंपत्साधनत्वम्)

सुदर्शनविमानस्य कर्षणं यः करोति वै ॥३७॥

तस्यामित्रा विनश्यन्ति सन्ति सर्वाश्च संपदः ।

(आरब्धापरिसमाप्तस्यापि विमानकरणस्यान्ततो मुक्तिसाधनता)

आरभ्यायतनं मध्ये [5]विच्छिरया विघ्नितो यदि ॥

---

1. सोऽयं A E F; सोऽय B.
2. कालस्य चक्रस्य A E F.
3. ०भर्तारं D.
4. एवं A B E F.
5. विश्रया D (?); विभूत्या E.

स सार्वभौमः सकलान्भुक्त्वा भोगान्महीतले ।
पुनश्च भक्तश्चक्रस्य शेषं निर्वर्तयिष्यति ॥३९॥
अन्ते वैकुण्ठमासाद्य विष्णुसायुज्यमाप्नुयात् ।

(साङ्गप्रतिष्ठादिकर्तुः फलपरंपरानिरूपणम्)

विमानं परमं कृत्वा प्रतिष्ठाप्य सुदर्शनम् ॥४०॥
ब्राह्मणान्वेदविदुषो वैष्णवान्द्वादशावरान् ।
तच्छेषभूतांस्तत्रैव प्रतिष्ठाप्य च शक्तितः ॥४१॥
पर्याप्तजीवनान्कृत्वा दत्वा भूमिमठादिकान् ।
नित्यं योऽभ्यर्चयत्येनं देवं [2]भूमिसमन्वितम् ॥४२॥
तस्य प्रतिदिनं भूतिरमर्यादा विवर्धते ।
नीरोगता दीर्घमायुर्लभ्यते नात्र संशयः ॥४३॥
जन्मान्तरे सार्वभौमो जनित्वा सकलां भुवम् ।
भुक्त्वा कालेन महता तदनन्तरजन्मनि ॥४४॥
त्रिविष्टपपतिर्भूत्वा भुङ्क्ते चैन्द्रपदं चिरम् ।
ततः क्रमेण लब्ध्वाऽयं तत्तल्लोकेशतां गतः ॥४५॥
तदन्ते परमं धाम वैष्णवं प्रतिपद्यते ।

(सुदर्शनपुरुषमनाराधयतो नृपत्वं दुर्लभम्)

देवमेनमनाराध्य न कश्चिज्जायते नृपः ॥४६॥

(एतदाराधनतारतम्यात्फलतारतम्यम्)

एतदाराधनस्यैव तारतम्येन नारद ।

1. योऽयच सत्येन (?) D. 2. "भूतिसमन्वितम्" इति भवेत्.

भोगायुषोस्तारतम्यमश्नुते नृपतिर्ध्रुवम् ॥४७॥

(तस्माद्राज्ञामन्येषां चैतदाराधनावश्यकता)

तस्मात्सर्वप्रयत्नेन राजैवैनं समर्चयेत् ।
जात्यायुर्भोगकामाश्च ये चान्ये भुवि मानवाः ॥
तेऽप्येतत्पूजया सर्वं काङ्क्षितं प्राप्नुवन्ति च ।

(शेषिणः केशवादेः शेषभूतं सुदर्शनं प्रति परिवारतादिकथंताप्रश्नः)

श्रीनारदः ।

सिद्धं सुदर्शनं विष्णोः शेषमायुधसंज्ञितम् ॥४९॥
कथमस्य परीवाराः केशवाद्याः समीरिताः ।
विष्णवाद्या मूर्तिभेदाश्च कथं वा पञ्जरीकृताः ॥
कथं वा भगवन्मन्त्राः परिवारत्वमागताः ।
इमं च संशयं देव छेत्तुमर्हसि सांप्रतम् ॥५१॥

(तदुत्तरकथनारम्भः)

अहिर्बुध्न्यः ।

शृणु तात महाप्राज्ञ रहस्यमिदमुत्तमम् ।
त्वदृते शक्नुयात्प्रष्टुमिममर्थं न कश्चन ॥५२॥

(भगवत इव तत्संकल्परूपस्य सुदर्शनस्याप्यनादित्वापरिच्छेद्यत्वे)

यथा नारायणो देवः पुरुषः पुष्करेक्षणः ।

---

1. तत्त्वं A B E F.
2. ॰मत्त्वं D.

अनादिरपरिच्छेद्यस्तथाऽयमपि नारद ॥५३॥

(तदुपपादनाय परमात्मशक्तेर्द्वैधा विभागः)

द्वे शक्ती तस्य विद्येते विष्णोः सर्वार्थसाधने ।
प्रधानभूते याभ्यां तु वहत्येष जगद्धुरम् ॥५४॥
एका त्विच्छात्मिका तस्य तथाऽन्या तु क्रियात्मिका ।

(तत्रेच्छारूपिण्याः प्रथमशक्तेर्लक्ष्मीरूपत्वम्)

प्रथमा परमा लक्ष्मीर्जगत्त्रातुः कुटुम्बिनी ॥५५॥

(क्रियारूपाया द्वितीयशक्तेः सुदर्शनरूपत्वम्)

तत्त्वविद्भिरिदं प्रोक्तं द्वितीयेह सुदर्शनम् ।

(ताभ्यां शक्तिभ्यां विना भगवतोऽप्यकिंचित्करत्वम्)

तस्माल्लक्ष्म्या विना देवः संकल्पेन प्रभुर्हरिः ॥५६॥
अनेनापि विना कर्तुं किंचिन्नार्हति केशवः ।

(तस्य शक्तिद्वयस्य सृष्टिस्थितिसंहाराद्युपकरणत्वम्)

अनेन सर्वं सृजति देवोऽनेनैव पाति च ॥५७॥
अनेन संहृतिं देवो विश्वस्यान्ते करोति च ।
अनेन दानवान्दैत्यान्निहन्ति मधुसूदनः ॥५८॥
क्रियतेऽनेन तत्कर्म सर्वं सर्वगतेन वै ।

(रक्षकं परमात्मानं प्रति शक्तिद्वयस्यापि रक्ष्यकोट्यन्तर्भावः)

तस्मात्सर्वात्मना चैनं स्वबुद्ध्या परिरक्षति ॥५९॥

---

1. स्वं बुद्धा A B E F.

(विशिष्य लक्ष्म्या अपि रक्ष्यकोट्यन्तर्भावप्रतिपादनम्)

यथा स्वं स्वामिना रक्ष्यं रक्ष्यते स्वयमेव हि ।
एवं सर्वस्य जननीं लक्ष्मीं लक्ष्मीधरः स्वयम् ॥
चतुर्धा व्यूह्य चात्मानं स्वभूतां परिरक्षति ।

(अतः केशवादीनां परिवारत्वादिकल्पनाया युक्तत्वम्)

तत्केशवादिमूर्तीनां परिवारत्वकल्पना ॥६१॥
विष्णवादीनां च मूर्तीनां पञ्जरत्वं च युज्यते ।
सर्वेषामपि मन्त्राणां रक्षकत्वं च सांप्रतम् ॥६२॥

(प्रकारान्तरेणापि गुणप्रधानभावोपपादनम्)

अथवा भगवानेव स्वयं चक्रस्वरूपधृक्[1] ।
अवस्थित इति प्राज्ञैः कथ्यते पुरुषोत्तमः ॥६३॥
प्रतित्रेतायुगं देवः साधुत्राणकृते हरिः ।
रामलक्ष्मणशत्रुघ्नभरताद्यात्मना स्वयम् ॥६४॥
चतुर्धाऽवस्थितस्तद्वच्चक्रात्मा हरिरेव हि ।
गुणप्रधानभावस्तु रामादेरिव युज्यते ॥६५॥
तदात्मनैव चात्मानं रक्षत्येव जनार्दनः ।
स्वमूर्तिरक्षणे स्वेन विनाऽन्यन्न भवेद्यतः ॥६६॥

---

1. इत्थमेव सर्वत्र पाठः.

(एतद्रहस्यश्रवणादेरपि क्रमशः परमपुरुषार्थसाधनत्वम्)

य इदं शृणुते परिपृच्छति वा
पठति स्मरतीह नरः सततम्।
विपुलामिह भूतिमवाप्य परा-
मथ याति पदं परमं स[1] हरेः ॥६७॥

इति श्रीपाञ्चरात्रे तन्त्ररहस्ये अहिर्बुध्न्यसंहितायां
राज्ञां सुदर्शनयन्त्राराधनविधान-केशवादिगुणप्रधानभाव-व्यवस्थापनं
नाम षट्त्रिंशोऽध्यायः।

ओम्।

(आदितः श्लोकाः २३१९)

---

1. हि A B.

ओम् ।

# अथ न्यासापरपर्यायप्रपत्तिनिरूपणं नाम

## सप्तत्रिंशोऽध्यायः ।

ध्यातं सकृद्भवानेककोट्यघौघं हरत्यरम् ।
सुदर्शनस्य तद्दिव्यं भर्गो देवस्य धीमहि ॥

(उक्तानुवादपूर्वकं सुदर्शनस्य षोडशभुजत्वप्रयोजनादिप्रश्नः)

श्रीनारदः ।

[1]आख्यातं भवता सर्वं भगवन्परमेश्वर ।
सौदर्शनस्य यन्त्रस्य मन्त्रस्य स्वस्य च प्रभो ॥
[2]अस्त्राणां चापि माहात्म्यं स्वरूपं लक्षणं तथा ।
आराधनं च योगश्च स्वभावश्च विशेषतः ॥२॥
भुजैः षोडशभिर्वेति प्रोक्तं रूपोपवर्णने ।
तत्कदा केन कर्तव्यं किमर्थं कीदृशं वद ॥३॥

(राज्ञामत्याहितादिनिवारणं षोडशभुजत्वस्य प्रयोजनम्)

अहिर्बुध्न्यः ।

परैरभिभवे प्राप्ते राज्ञां बलसमन्वितैः ।

---

1. क्ष्यातं भगवता सर्वं D. 2. मन्त्राणां D.

नगरेषु [1]प्रदग्धेषु [2]राज्ञां विद्राविते [3]बले ॥४॥
उपरुद्धेषु भोगेषु तत्तद्विषयवासिनाम् ।
पीड्यमाने परबलैरित्थं राष्ट्रे महामुने ॥५॥
स्थितावनुपपन्नायां [4]राज्ञोऽनुच्छिन्नवैरिणः ।
कारयेत्षोडशभुजं सुदर्शनमवारितम् ॥६॥

(षोडशभुजसुदर्शनविग्रहवर्णनम्)

अपारमपरिच्छेद्यमवाङ्मनसगोचरम् ।
रक्तवर्णमुदाराङ्गं पीतकौशेयवाससम् ॥७॥
विद्युत्पुञ्जप्रतीकाशैः केशैरूर्ध्वमुखैर्युतम् ।
पिङ्गलाघूर्णमानोग्रनेत्र[5]त्रितयभीषणम् ॥८॥
दष्टाधरस्फुटालक्ष्यदंष्ट्रानिष्ठ्यूतपावकम् ।
क्वणत्किङ्किणिजालेन काञ्चीदाम्ना विराजितम् ॥
नितम्बलम्बिनोपेतं ज्वलत्कौक्षेयकेण च ।
दधानं [6]किङ्किणीमालां त्वलिमालानिनादिताम् ॥
आपादलम्बिनीं दिव्यां मुक्तारत्नाचितां तथा ।
[7]झणज्झणितमञ्जीरशोभमानपदाम्बुजम् ॥११॥

---

1. प्रभिन्नेषु A B E F.
2. राज्ये D.
3. बलैः D.
4. 'राज्ञो व्युच्छिन्न वैरिणः' इति सर्वत्र पाठः.
5: °त्रयविभीषणम् D.
6. किङ्किणीरूपतत्त्वमालानिनादिताम् A B E F.
7. रणज्झणित° A B.

हारकेयूरताटङ्कमुकुटैरुपशोभितम् ।
अन्यैर्मणिमयैश्चित्रैर्भूषणैः समलंकृतम् ॥१३॥
क्रमेण चक्रपरशुकुन्तदण्डाङ्कुशानि च ।
शस्त्राणि शतवक्त्राणि खड्गशक्ती च बिभ्रतम् ॥
करैरूर्ध्वमुखैर्दीर्घैर्दक्षिणैरष्टभिः परैः ।
वामैः शङ्खधनुःपाशहलवज्राणि च क्रमात् ॥१४॥
गदामुसलशूलानि भीमान्येतानि बिभ्रतम् ।
स्वसमाश्रितशत्रूत्थक्रोधेन महताऽऽवृतम् ॥१५॥
भुग्नभ्रूकुटिलं वक्त्रं धारयन्तं विभीषणम् ।
प्रत्यालीढविशेषेण तिष्ठन्तं दीप्तिमालिनम् ॥१६॥
कालाग्निरुद्ररूपेण संहरन्तमिदं जगत् ।

(यथोक्तसुदर्शनध्यानस्य निःसापत्न्यसाधनता)

एवं सुदर्शनं ध्यायेत्कालात्मानं महाद्युतिम् ॥
राजा तद्ध्यानमात्रेण निःसपत्नो भवेत्क्षणात् ।
न क्वाप्युपस्थितिस्तेषां सपत्नानां महीतले ॥१८॥
नश्यन्ति शत्रवस्तत्र यत्र यत्र च विद्रुताः ।

(सुदर्शनमनाराधयतां राज्ञां प्रत्यवायः)

एवमेनमनाराध्य राजानोऽमितविक्रमाः ॥१९॥
सपत्नैरभिभूयन्ते निःश्रीकाश्च भवन्ति वै ।

---

1. °मकरै° A B.
2. क्वाप्यवस्थितिः E F.

(योगेन न्यासेन वा सुदर्शनाराधनस्यैहिकामुष्मिकफलसाधनता)

य एनं पूजयेद्भक्त्या पूर्वोक्तेनैव वर्त्मना ॥२०॥
बाह्येन चान्तरेणापि योगाख्येन महामुने ।
न्यासेन वा सुखी सोऽत्र परत्र च न संशयः ॥

(उक्तानुवादपूर्वकं न्यासाख्यप्रपत्तिस्वरूपप्रश्नः)

श्रीनारदः ।

बाह्य आभ्यन्तरश्चापि मम योगः पुरोदितः ।
न्यासाख्यं साधनं प्रोक्तं तन्मे ब्रूहि महेश्वर ॥

(तत्प्रतिवचने तस्य परमरहस्यत्वख्यापनम्)

अहिर्बुध्न्यः ।

एतन्महोपनिषदं देवानां गुह्यमुत्तमम् ।
अभीष्टार्थप्रदं सद्यः सर्वपापप्रणाशनम् ॥२३॥
अवाच्यमेतत्सर्वस्मै नाभक्ताय कदाचन ।
भक्तोऽसि मे स्थिरश्चेति वक्ष्यामि हितकाम्यया ॥

(न्यासस्य सर्वफलसाधनत्वोपपादनम्)

यद्येन कामकामेन नासाध्यं साधनान्तरैः ।
मुमुक्षुणा यत्सांख्येन योगेन न च भक्तितः ॥

---

1. नोक्तं इति पाठो वरम्.
2. देहिनां D.
3. सम्यक् D.
4. साध्यं यत्साधनान्तरैः A B.

प्राप्यते परमं धाम यतो नावर्तते पुनः ।
तेन तेनाप्यते तत्तन्न्यासेनैव महामुने ॥२६॥
परमात्मा च तेनैव साध्यते पुरुषोत्तमः ।

(प्रपत्तेः षाड्विध्यकथनमुखेन प्रपन्नस्य प्रपत्त्युत्तरभाविसंभावितस्वभाव-
निरूपणम्)

षोढा हि वेदविदुषो वदन्त्येनं महामुने ॥२७॥
आनुकूल्यस्य संकल्पः प्रातिकूल्यस्य वर्जनम् ।
रक्षिष्यतीति विश्वासो गोप्तृत्ववरणं तथा ॥२८॥
आत्मनिक्षेपकार्पण्ये षड्विधा शरणागतिः ।

(न्यासप्रकरणे शरणशब्दस्य साधनवाचित्वम्)

उपाये गृहरक्षित्रोः शब्दः शरणमित्ययम् ॥२९॥
वर्तते सांप्रतं चैष उपायार्थैकवाचकः ।

(अथ प्रपत्तिलक्षणम्)

अहमस्म्यपराधानामालयोऽकिंचनोऽगतिः ॥३०॥
त्वमेवोपायभूतो मे भवेति प्रार्थनामतिः ।
शरणागतिरित्युक्ता सा देवेऽस्मिन्प्रयुज्यताम् ॥

(सुदर्शनप्रपत्तौ मन्त्रविशेषकथनम्)

भगवन्सर्वविजयिसहस्रारापराजित ।
शरणं त्वां प्रपन्नोऽस्मि श्रीकरं श्रीसुदर्शनम् ॥३२॥

---

1. तत्तन्न्यासेनापि D.

(अनेन मन्त्रेण प्रपन्नस्य फलोत्पत्तिप्रतिबन्धकसकलदुरितनिवृत्तिः)

अनेनैव प्रपन्नस्य भगवन्तं सुदर्शनम् ।
तस्यानुबन्धाः पाप्मानः सर्वे नश्यन्त्यसंशयम् ॥

(एवं प्रपन्नस्य कर्तव्यान्तराभावः)

कृतान्यनेन सर्वाणि तपांसि तपतां वर ।
सर्वे तीर्थाः सर्वयज्ञाः सर्वदानानि च क्षणात् ॥
कृतान्यनेन मोक्षश्च तस्य हस्ते न संशयः ।

(न्यासमात्रेण तपोयज्ञादिसिद्धिकथंताप्रश्नः)

श्रीनारदः ।

कथं तपांसि यज्ञाश्च तीर्थदानानि सर्वशः ॥३५॥
तस्यैव न्यासमात्रेण सिध्यन्ते[1] तद्वद प्रभो ।

(तदुत्तरकथने न्यासस्य सर्वतपोऽतिरिक्ततपस्त्वकथनम्)

अहिर्बुध्न्यः ।

यानि निःश्रेयसार्थानि चोदितानि तपांसि वै ॥
तेषां तु तपसां न्यासमतिरिक्तं तपः श्रुतम् ।

(नमःशब्देन कृतात्मन्यासस्य स्वध्वरत्वोपपादनम्)

समित्साधनकादीनां यज्ञानां न्यासमात्मनः ॥
नमसा योऽकरोद्देवे स स्वध्वर उदीरितः ।

---

1. आत्मनेपदमार्षं छन्दोऽनुरोधात्.

(न्यासस्य परमधर्मत्वे प्रमाणप्रदर्शनम्)

यागसाधनभूतेन स्वात्मना वेद्यमीश्वरम् ॥३८॥
अयजन्तानि धर्माणि प्रथमानीति नः श्रुतम् ।

(न्यासस्य सर्वयज्ञप्रतिनिधित्वम्)

यज्ञरूपधरं देवं यजते स्वात्मनैव यः ॥३९॥
तेन सर्वे कृता यज्ञा भवन्तीह महात्मना ।

(न्यासस्य यज्ञत्वनिर्वहणाय यज्ञाङ्गपौष्कल्यरूपणम्)

यज्ञरूपधरस्यास्य शरीरं वेदिरिष्यते ॥४०॥
आस्यमाहवनीयाग्निर्हृदयं दक्षिणानलः ।
अथास्य गार्हपत्याग्निरुदरं श्रुतिचोदितम् ॥४१॥
यजमानो मनस्तत्त्वं बुद्धिः पत्नी प्रकीर्तिता ।
स्वाश्रितप्रत्यनीका ये पशवस्ते प्रकीर्तिताः ॥४२॥
लोमानि बर्हिषस्त्वस्य जीवं हव्यं प्रचक्षते ।
सवनानि शिरोमध्यगात्रपादाः प्रकीर्तिताः ॥४३॥
दश यज्ञायुधान्यस्य ज्ञानकर्मेन्द्रियाण्यपि ।
ऋत्विजः षोडश भुजा देवस्यास्य महामुने ॥४४॥
भक्तरक्षणसंकल्पो दीक्षा देवस्य नारद ।
ऋग्यजुःसामघोषोऽस्य भूषणाराव इष्यते ॥४५॥
सदस्या भूषणान्यस्य दया देवस्य दक्षिणा ।
जुहूर्ध्रुवा स्रुवश्चैव प्राशित्रहरणं तथा ॥४६॥

---

1. पशवोऽत्र B D E F.

मेक्षणोपभृतौ वेद इडापात्री तथैव च ।
दारुपात्रं च योक्त्रं च चमसः सृष्टिरेव च ॥४७॥
पिष्टोद्वमन्याज्यस्थाल्याविध्मः प्रव्रश्चनं तथा ।
मदन्तीत्यस्य शस्त्रेषु चक्राद्येषु समाश्रिताः ॥४८॥

(प्रपन्नस्य कृतकृत्यत्वनिगमनम्)

एवंरूपं तमभ्यर्च्य प्रक्षीणाशेषपातकः ।
अनुष्ठितक्रतुशतो भवेदेष न संशयः ॥४९॥

(यथोक्तक्रमेण सुदर्शनमनाराधयतां प्रत्यवायनिगमनम्)

एवं बहुविधै रूपैरुपेतं तं सुदर्शनम् ।
कृत्वा तमप्रतिष्ठाप्य राजानो मन्त्रिणोऽपि वा ॥
विनष्टसंपदः सद्यः परिभूताश्च शत्रुभिः ।
अर्चनाभावतो राज्याद्भ्रष्टाश्चिरमुपद्रुताः ॥५१॥

(सुदर्शनमनाराधयतां राज्ये ब्रह्महत्यादिदोषोत्पत्तिः)

स्वराज्यं ब्रह्महत्यादिदोषैर्दुष्येन्महामुने ।
समिदित्यस्य ऋग्वेदश्रुतिराह दयावती ॥५२॥

---

1. मदन्तीन्यस्य (?) D.  2. महात्मनः D.

3. इदमर्धं न दृश्यते D पुस्तके. पुस्तकान्तरेषु तु यद्यप्यत्र लिखितमिदं । तथाऽपि पूर्वोत्तरसंदर्भाननुगुणत्वात् प्रपत्तिप्रमाणप्रतिपादकस्यास्यार्धश्लोकस्य तत्प्रमाणप्रतिपादकवचनसंदर्भमध्यनिवेशौचित्याच्च "समित्साधनकादीनां यज्ञानां न्यासमात्मनः । नमसा योऽकरोद्देवे स स्वध्वर उदीरितः" इति श्लोकानन्तरभावित्वमेवास्य युक्तं । तथा-सत्येवोदाहरिष्यमाणयोरेतद्वचनविवक्षितयो ऋग्वेदश्रुत्योः 'स स्वध्वर उदीरितः' इत्यस्य च मूलमूलिभावेन संनिवेशौचित्यं स्यात् । लेखकप्रमादात्त्विह लिखितमिति प्रतिभाति.

4. अत्रेदं ऋग्वेदश्रुतिद्वयं बोध्यं—यः समिधा य आहुती यो वेदेन ददाश

(सुदर्शनमनाराधयतां राज्ञां प्रजानुरागाभावः)

अनभिध्यानतो ह्यस्य विश्वे विषयवासिनः ।
अपरक्ताश्च जायन्ते महाराजे कृतागसि ॥५३॥

(राज्ये सुदर्शनानाराधनात्प्रजानामपि बहुदुःखभागिता)

अश्रद्दधानाश्चैतस्मिन्निह जन्मनि दुःखिनः[1] ।
प्रेत्याधोऽधः पतन्त्येव नाप्नुवन्ति सुखं क्वचित् ॥

(सुदर्शनसमाराधनस्य सर्वफलावाप्तिसाधनतानिगमनम्)

तद्यज्ञरूपं [2]सुसमाश्रितानां
रक्षाविधाने कृतदीक्ष[3]मीशम् ।
सुभीषणं षोडशबाहुयुक्तं
[4]स्वशत्रुपक्षक्षपणप्रवृत्तम् ॥५५॥
यथोक्तरूपं धृतसर्वशस्त्र-
मुपेतमस्त्रैरपि मूर्तिमद्भिः ।
पटे लिखित्वा शिलयाऽथवाऽर्चां
विधाय लोहैरुत बिम्बमस्य ॥५६॥

---

मर्तो अमये । यो नमसा स्वध्वरः ॥ तस्येदर्वन्तो रंहयन्त आशवस्तस्य द्युम्नितमं यशः । न तमंहो देवकृतं कुतश्चन न मर्त्यकृतं नशत् ॥ इति (ऋग्वेदे 6-1-29.)

1. त्रिपञ्चाशः श्लोकश्चतुःपञ्चाशश्लोकपूर्वार्धं चेत्यर्धत्रयं न दृश्यते A B F पुस्तकेषु.

2. स्वयमाश्रितानां D.

3. °मेनम्.

4. स्वपक्षशत्रु° A B E F.

समर्चयेद्यो नृपतिः प्रतिष्ठां
विधाय भक्त्याऽथ सुदर्शनेशम् ।
क्षणेन सिध्यन्ति मनीषितानि
विपक्षनाशश्च भवेदमुष्य ॥५७॥

इति श्रीपाञ्चरात्रे तन्त्ररहस्ये अहिर्बुध्न्यसंहितायां

न्यासापरपर्यायप्रपत्तिनिरूपणं नाम सप्तत्रिंशोऽध्यायः ।

ओम् ।

(आदितः श्लोकाः २३७६)

---

ओम् ।

## अथ ज्वरादिरोगनिवृत्त्युपायविधानं नाम

## अष्टत्रिंशोऽध्यायः ।

ध्यातं सकृद्भवानेककोट्यघौघं हरत्यरम् ।
सुदर्शनस्य तद्दिव्यं भर्गो देवस्य धीमहि ॥

(उक्तानुवादपूर्वकं रोगमोचनोपायप्रश्नः)

श्रीनारदः ।

आख्यातं भवता राज्ञां परेभ्यो रक्षणं परम् ।
तथैव सर्वे सर्वज्ञ पुरुषार्थाः समीरिताः ॥१॥
तत्साधनानि चान्यच्च प्रसङ्गात्समुदीरितम् ।
इदं त्विदानीं [1]भगवन्व्याख्याहि मम पृच्छतः ॥
[2]राज्ञां तत्सचिवानां च तथाऽन्येषां नृणामपि ।
रोगाः [3]क्रूरतरास्तेषां पुरुषार्थविरोधिनः ॥३॥
संभवन्ति हि तेषां तु मोचनं केन सिध्यति ।

---

1. भगवन्नाख्याहि A B E F.
2. राज्ञः D.
3. परतराः D.

(तत्प्रतिवचनाय रोगोत्पत्ति-तद्विनाश-कारणकथनप्रतिज्ञा)

अहिर्बुध्न्यः ।

साधु पृष्टं मुने रोगा जायन्ते येन दुःसहाः ॥४॥
शृणु येनैव नश्यन्ति तद्वक्ष्यामि तवाधुना ।

(प्राकृतप्रलय एकाकिनः परमपुरुषस्य दयालो रमणाभावः)

प्राकृते सर्वलोकस्य संप्राप्ते प्रतिसंचरे ॥५॥
ब्रह्मायुषि परिक्षीणे नष्टे स्थावरजङ्गमे ।
सर्वभूतेषु भूतादौ प्रलीनेषु महामुने ॥६॥
भूतादाविन्द्रियादौ च तैजसे महति स्थिते ।
ततो महति याते तु प्रकृतिं बुद्धिलक्षणे ॥७॥
तथा च पुरुषे तस्यां प्रलीने पञ्चविंशके ।
तस्यामपि प्रलीनायां पुरुषे पुष्करेक्षणे ॥८॥
स एव सर्वं संहृत्य स्वस्मिन्परमपूरुषः ।
भगवान्पुण्डरीकाक्षः परमात्मा जगन्मयः ॥९॥
एकाकी स तदा नैव रमते स्म सनातनः ।

(लीलार्थं पुनः स्सृष्टिः)

स[1] लीलार्थं पुनश्चेदमसृजत्पुष्करेक्षणः ॥१०॥

(नामरूपव्याकरणम्)

स पूर्वं नामरूपाणि चक्रे सर्वस्य सर्वगः ।

---

1. स्व° D.

(लीलोपकरणभूतया प्रकृत्या परमात्मनो रमणम्)

लीलोपकरणां देवः प्रकृतिं त्रिगुणात्मिकाम् ॥
मायासंज्ञां पुनः सृष्ट्वा तया रेमे जनार्दनः ।

(तया प्रकृत्या जीवपरयोः स्वरूपप्रच्छादनम्)

सा तु सर्वाणि भूतानि तत्तच्छक्तिसमन्विता ॥
मोदयन्ती च तन्वाना स्वस्यां भोग्यधियं तथा ।
वर्तते जीवपरयोः स्वरूपाच्छादनाय सा ॥१३॥

(प्रकृतिपारवश्याज्जीवस्य संसरणम्)

तया विवशमेतत्तु संसरत्यखिलं जगत् ।

(प्रकृतेर्देहात्मभ्रमहेतुत्वम्)

तयैव प्रथमं देहे करोत्यात्मधियं नरः ॥१४॥

(तस्या एवास्वे स्वत्वधीहेतुत्वमपि)

ततः शरीरसंबन्धिपुत्रादौ ममतां गतः ।

(अहंकारममकारोत्थवासनादार्ढ्यम्)

ततोऽहंकारजास्तस्य ममतोत्थाश्च वासनाः ॥१५॥
भवन्ति देहे पुत्रादौ दृढबद्धाश्चिरं मुने ।

(तदुत्थवासनानां रागद्वेषद्वारा पुण्यपापहेतुत्वम्)

ततः स्वदेहे पुत्रादावुपकार्यपकारिषु ॥१६॥

---

1. वि॰ D.
2. स A B.

रागद्वेषौ च भवतस्ताभ्यां सर्वं विचेष्टते ।
कपूयरमणीये च तदुत्थे संचिनोत्ययम् ॥१७॥

(ततो जात्यायुर्भोगरूपकर्मविपाकप्राप्तिः)

तद्विपाकानथाप्नोति जात्यायुर्भोगलक्षणान् ।

(प्रारब्धकर्मफलोपभोगायैवास्य शरीरस्य सृष्टिः)

अतः फलोपभोगार्थमुभयेषां च कर्मणाम् ॥१८॥
प्रारब्धानामिदं सृष्टं शरीरं च शरीरिणः ।

(रोगाणां पापजन्यत्वम्)

पाप्मभ्य एव जायन्ते प्रारब्धेष्वामयास्तनौ ॥
नानाविधा दुःखवरा भुज्यन्ते देहिनाऽपरे ।

(तत्र प्रथमं ज्वरशान्त्युपायः)

ज्वराभिभूते नृपतौ सचिवेऽन्यजनेऽथवा ॥२०॥
महासुदर्शनं यन्त्रं कथितं मन्त्रकोविदैः ।
गुडूचीराज्यसंसिक्ताश्चतुरङ्गुलसंमिताः ॥२१॥
मन्त्रेणानेन जुहुयात्सहस्रं ज्वलितेऽनले ।
चक्राम्बुजं च विन्यस्य स्थण्डिले शालितण्डुलैः ॥
तत्र पात्रं निधायाज्यं प्रस्थपूर्णं निधाय च ।
तस्यां पलप्रमाणेषु तन्तुष्वारोप्य दीपिकाम् ॥
तत्राप्येनं समावाह्य मन्त्रेणानेन मन्त्रवित् ।
ततः पश्चिमभागे तु स्थण्डिले मण्डिते शुचौ ॥

---

1. शरीरिणाम् B E.

आस्तीर्य कलमांस्तत्र न्यसेन्माहेन्द्रमण्डलम् ।
तन्मध्ये षडरं चक्रं मध्ये तारं च विन्यसेत् ॥२५॥
तन्तुजालेन संवेष्ट्य नवकुम्भं[1] सुशोभनम् ।
चन्द्रचन्दनकाश्मीरमिश्रैरापूर्य वारिभिः ॥२६॥
तद्बहिश्चन्दनाद्यैस्तमर्चयेद[2]क्षतैरपि ।
रत्नानि पञ्च पद्मं च दूर्वां हाटकमेव च ॥२७॥
श्यामाकं विष्णुपर्णीं च देवीं चान्तर्विनिक्षिपेत् ।
मध्येकुम्भं समावेष्ट्य क्षौमेण नवमालया[3] ॥२८॥
तं तारमध्ये संस्थाप्य साध्यनामयुते शुभे ।
पूर्णचन्द्रमभिध्यायंस्तत्र चावाहयेत्प्रभुम् ॥२९॥
तं धूपदीपमाल्याद्यैः समभ्यर्च्य यथाविधि ।
शाल्यन्नं दधिमध्वाज्यसर्वव्यञ्जनसंयुतम्[4] ॥३०॥
हृद्यं साज्यं गुडं दद्याद्देवाय हविरुत्तमम् ।
बलिं ततो हरेर्दिक्षु विदिक्षु च समाहितः ॥३१॥
शाल्यन्नैः श्वेतपुष्पैश्च धूपदीपादिभिस्तथा ।
दिक्पालानां ततो दद्यात्क्षेत्रेशायापि नारद ॥३२॥
आसने प्राङ्मुखं साध्यमुपवेश्याथ सज्वरम् ।
दर्पणं तस्य संस्थाप्य पुरस्तात्प्रातिबिम्बितम् ॥

1. नवं कुम्भं B E F.
2. ०स्तदर्चयेत् E.
3. वनमालया A B E F.
4. दधिमध्वाज्य० D.

कुम्भमादाय मन्त्रेण दर्पणं सोऽभिषेचयेत् ।
सद्य एव ज्वरान्मुक्तो भवेन्मेघादिवोडुराट् ॥३४॥
अथ द्विजेभ्यो विद्वद्भ्यो वैष्णवेभ्यो विशेषतः ।
निष्कत्रयं हिरण्यस्य द्रोणं चाज्यस्य गां तथा ॥
कर्पूरं चन्दनं चापि वासांसि विमलान्यपि ।
एतानि दद्यादेकस्मै मुने ब्रह्मविदे[1]ऽथवा ॥३६॥
ततः स्वस्थो भवेत्सद्यो यावज्जीवं न संशयः ।
एषा चिकित्सा प्रकृतिर्व्याधीनां मात्रया भिदा ॥

(अथ राजयक्ष्मशान्त्युपायः)

राजयक्ष्माभिभूते तु नृपादौ मुनिसत्तम ।
[2]मध्वक्ताभिरपामार्गसमिद्भिः खादिरेऽनले ॥३८॥
[2]मन्त्रेणानेन जुहुयात्सहस्रं मन्त्रवित्तमः ।
ततः प्रतीच्ये दिग्भागे पूर्ववत्कल्पितेऽनले ॥३९॥
आढकाज्याभिपूर्णायां पात्र्यां द्विपलतन्तुषु ।
आरोप्य दीपिकां पश्चाद्देवमावाह्य मन्त्रतः ॥४०॥
ततः पाश्चात्यभागे तु भारशालिपरिष्कृते ।
स्थण्डिले मण्डिते शुद्धे कृत्वा माहेन्द्रमण्डलम् ॥
पूर्ववत्षडरं चक्रं विन्यस्यारेष्वमुष्य च ।
मन्त्रवर्णानि विन्यस्य साध्यनाम च तारके ॥४२॥

---

1. ब्रह्मविदे तथा A B E F.
2. इदमर्धद्वयं त्यक्तं A B E F पुस्तकेषु.

पूर्ववन्मन्त्रितं कुम्भं तत्र संस्थाप्य मण्डले ।
आवाह्य देवमभ्यर्च्य पूर्ववच्चक्ररूपिणम् ॥४३॥
हविश्च पायसं दद्यात्खण्डमध्वाज्यसंयुतम् ।
बलिं च पूर्ववत्कुर्यात्पायसेन विशेषतः ॥४४॥
गुरुक्षेत्रेशविघ्नेशदुर्गादिक्पालकान्प्रति ।
प्रावृत्य कम्बलेनैनं साध्यं प्राङ्मुखमासने ॥४५॥
आसीनं मन्त्रतः कुम्भवारिभिश्चाभिषेचयेत् ।
अन्वहं दर्पणाविष्टं स्नापयेच्छायया पुनः ॥४६॥
निष्कद्वयं हिरण्यस्य द्विनिष्कं रजतं तथा ।
कम्बलं स्वधृतं वस्त्रं तिलानां द्रोणमेव च ॥४७॥
कमण्डलुं कांस्यपात्रं छत्रं चोपानहौ तथा ।
एकस्मै ब्राह्मणायैव विदुषे चास्तिकाय वै ॥४८॥
दद्यादेतानि सर्वाणि सर्वसत्कारपूर्वकम् ।
प्रयोक्तारं धनैरेवमभ्यर्च्य प्रयतो भवेत् ॥४९॥
सद्यस्तस्मान्महारोगाद्विमुक्तो नात्र संशयः ।

(अथ प्रमेहरोगशान्त्युपायः)

एवं प्रमेहरोगेण गृहीते च महामुने ॥५०॥

---

1. ॰मण्डितं D.
2. गुह॰ A B.
3. पुरः A B, E F.

सहस्रं जुहुयान्मन्त्री मन्त्रेणानेन बैल्वकैः ।
माषौदनं हविर्दद्याद्बलिं चानेन कारयेत् ॥५१॥
अभिषेकं स्वयं कुर्यादन्यत्पूर्ववदाचरेत् ।
दद्याद्द्रोणं च माषाणां रजतं पञ्चनिष्ककम् ॥
एकं चानडुहं सद्यो नीरोगः स्यान्महामुने ।

(अथोदररोगशान्त्युपायः)

तथौदरैर्महारोगैर्गुल्मशूलादिभिश्चिरम् ॥५३॥
अभिभूतेषु मर्त्येषु वक्ष्ये प्रतिविधिं शृणु ।
पूर्ववत्कुम्भमभ्यर्च्य सुदर्शननिषेवितम् ॥५४॥
तत्पूर्वभागे प्रज्वाल्य ज्वलनं कुण्डमध्यमे ।
समिद्भिरार्कैर्जुहुयादाज्याक्तैर्द्विसहस्रकम् ॥५५॥
तिलैश्च जुहुयात्तद्वन्मन्त्रेणानेन मन्त्रवित् ।
ततः कुम्भोदकं स्पृष्ट्वा सहस्रं च जपेन्मनुम् ॥
ततो हरेर्बलिं मन्त्री दिक्पालानां यथाक्रमम् ।
भूतप्रेतपिशाचानां क्षेत्रेशस्यापि नारद ॥५७॥
शुक्लौदनैः शुक्लपुष्पैः पिष्टैः शुक्लध्वजैरपि ।
कुम्भाधिवासितं देवं पूजयेद्विधिवत्ततः ॥५८॥
हविर्निवेदयेच्छुद्धैरोदनैः कल्पितं बहु ।
शर्करामधुदध्याढ्यं सर्वव्यञ्जनसंयुतम् ॥५९॥

---

1. पाठस्त्वित्थमेव सर्वत्रोपलभ्यते। भिन्नलिङ्गयोर्विशेषणविशेष्यभावः कथमुपपद्यतामिति तु चिन्त्यम्.

ततः कुम्भोदकं किंचिदादायानेन मन्त्रितम् ।
पाययेद्रोगिणं मन्त्री मन्त्रोच्चारणपूर्वकम् ॥६०॥
ततः कुम्भोदकेनैव प्राङ्मुखं स्नापयेद्बुधः ।
तर्पयेद्ब्राह्मणान्सप्त यथाशक्ति समाहितः ॥६१॥
गुरुं बहुधनैर्वस्त्रैर्भूषणैर्धान्यराशिभिः ।
सर्वे तस्यौदरा रोगा विनश्यन्ति न संशयः ॥६२॥
ततः स्वस्थो भवेन्मर्त्यो देववन्मोदतेऽनिशम् ।

(अथापस्मारशान्त्युपायः)

अपस्माराभिभूते तु नरे प्रतिविधिं शृणु ॥६३॥
भूतले गोमयालिप्ते समे मङ्गलसंयुते ।
तिलभारद्वयं तत्र [1]प्रस्तीर्य चतुरश्रकम् ॥६४॥
द्विहस्तसंमितं तत्र यन्त्रं सौदर्शनं न्यसेत् ।
पूर्वोक्तेन प्रकारेण विनैवाखिलमूर्तिभिः ॥६५॥
सुदर्शनं नृसिंहं च विना मन्त्राभिसंहितम् ।
सौदर्शनं महायन्त्रं मध्ये पूर्वोक्तवर्त्मना ॥६६॥
[2]प्रणिधायोदकुम्भं तु तन्तुभिः परिवेष्टितम् ।
पूर्वोक्तद्रव्यसंयुक्तं कम्बलेनाभिवेष्टितम् ॥६७॥

---

1. प्रस्थाप्य D.
2. परिधायोक्कुम्भं तु A; परिधायोदकुम्भं तु E F.

पूर्वेण मण्डलं वह्निं निधाय विधिवत्ततः ।
अनेन मनुना कुर्याद्द्विसहस्रं तिलाहुतीः ॥६८॥
ततः कुम्भं स्पृशन्मन्त्रमष्टोत्तरसहस्रकम् ।
जपेन्मन्त्राभिपूतेन वारिणाऽनेन मन्त्रवित् ॥६९॥
ग्रहाभिभूतमासीनं प्राङ्मुखं चाभिषेचयेत् ।
ततो मुक्तग्रहस्तेन क्षणेनैव सुखी भवेत् ॥७०॥
सर्वे चान्ये ग्रहास्तं तु न क्षमन्ते हि वीक्षितुम् ।
धनधान्यैश्च वासोभिः स गुरुं पूजयेत्ततः[1] ॥७१॥
यस्मिन्यन्त्रे तु यद्द्रव्यं तच्च तस्मै निवेदयेत् ।
ब्राह्मणांस्तर्पयेत्पश्चादष्टौ तिलसुवर्णकैः ॥७२॥
रजतैश्चापि महिषीं साधकाय निवेदयेत् ।
ततः स्वस्थो भवेन्मर्त्यो देववन्मोदते भुवि ॥७३॥

इति श्रीपाञ्चरात्रे तन्त्ररहस्ये अहिर्बुध्न्यसंहितायां

ज्वरादिरोगनिवृत्त्युपायविधानं नाम अष्टत्रिंशोऽध्यायः ।

ओम् ।

(आदितः श्लोकाः २४४९)

---

1. स्वगुरुं E F.

2. इत उत्तरमग्रिमाध्यायस्य त्रयोदशश्लोकपर्यन्तं A पुस्तके लेखकेन भ्रान्त्या त्यक्तम् । संभाविता चैषा भ्रान्तिः, उभयत्र स्थाने "पूजयेत्ततः" इति दर्शनात् । अत एव A पुस्तकमादर्शीकृत्य लिखिते B पुस्तकेऽपि युक्तस्तत्यागः ॥

ओम् ।

## अथ सर्वफलसाधनभूतमहाभिषेकविधानं नाम एकोनचत्वारिंशोऽध्यायः ।

ध्यातं सकृद्भवानेककोट्यघौघं हरत्यरम् ।
सुदर्शनस्य तद्दिव्यं भर्गो देवस्य धीमहि ॥

(केनैकेन प्रयोगेण सर्वार्थसिद्धिरिति प्रश्नः)

श्रीनारदः ।

भगवन्ब्रूहि सर्वज्ञ येनैकेनैव कर्मणा ।
सर्वरोगा विनश्यन्ति केन सर्वे च शत्रवः ॥१॥
केन सर्वार्थसिद्धिः स्याज्जगत्केन वशं भवेत् ।
विभूतिर्विमला केन प्राप्यते कर्मणा वद ॥२॥

(तदुत्तरकथनारम्भः)

अहिर्बुध्न्यः ।

श्रूयतां चावधानेन गुह्यमेतन्महामुने ।
येनैकेन प्रयोगेण सर्वार्थाः संभवन्ति हि ॥३॥

---

1. °विपुला E.

(तत्र महाभिषेकाख्यकर्मविधिः)

रा[1]ज्ञश्च मन्त्रिणां चैव सर्वेषामधिकारिणाम् ।
पदात्स्वस्मादुपारो[2]ढुंकामानां परमं पदम् ॥४॥
अन्येषां लौकिकानां च यत्किंचिद्वाञ्छतां तथा ।
कार्यं महाभिषेकाख्यं कर्म सर्वार्थसाधकम् ॥५॥

(तदङ्गतया स्थानादिविशेषविधिः)

[3]वासुदेवालयोद्यानमण्डपे मन्दिरेऽथवा ।
समे पवित्रिततले मङ्गलाष्टकसंयुते ॥६॥
विकीर्य कलमांस्तत्र नवभाराभिसंमितान् ।
माहेन्द्रमण्डलं न्यस्य बाह्यतो जातिपुष्पकैः ॥७॥
मध्ये सौदर्शनं यन्त्रमुक्तेनैव तु वर्त्मना ।
विन्यसेद्गन्धपुष्पैश्च तन्मध्ये च सुशोभनम् ॥८॥
तन्मध्ये विन्यसेन्मन्त्री यन्त्रबिम्बमनुत्तमम् ।
तस्याग्रे मूलमन्त्रेण कुम्भं तन्तुपरिष्कृतम् ॥९॥
आवाहयेद्गन्धतोये नवरत्नसमन्वितम् ।
चन्दनागुरुकर्पूरकाश्मीरक्षोदमण्डितम् ॥१०॥
अक्षतैश्च परिक्षिप्तं शुद्धक्षौमाभिवेष्टितम् ।

---

1. राज्ञां च E F.
2. °रोढुं F; °रोढं (?) D; °रोढुं E.
3. वासुदेवालये नद्यां E F.

गन्धवत्कुसुमाकीर्णं धूपदीपसमन्वितम्[1] ॥११॥
मुखान्तरे तथा कार्ये कुम्भकुण्डे स्वलंकृते[2] ।
प्रतिष्ठाप्याष्टदिग्भागे पूर्णकुम्भानलंकृतान् ॥१२॥
आचक्रायेतिमन्त्राद्यैरग्निप्राकारकान्तकैः ।
प्रागादि विन्यसेन्मन्त्रैः[3] प्रत्येकं पूजयेत्ततः ॥१३॥

(प्रागादिदिक्षु मध्ये चाग्निकुण्डविधिः)

सर्वत्र कुम्भप्राग्भागेष्वग्निकुण्डानि विन्यसेत् ।
प्रासादलक्षणं कुण्डं मध्ये कुर्यात्स्वलंकृतम् ॥१४॥

(प्रागाद्यग्निकुण्डानां लक्षणभेदकथनम्)

प्राच्यां दिशि चतुष्कोणमाग्नेय्यां तु त्रिकोणकम् ।
याम्ये[4] त्वर्धेन्दुसंकाशं नैरृत्यां योनिसंनिभम् ॥
वारुण्यां पद्मसंकाशं वायव्यामष्टकोणकम् ।
वृत्तमुत्तरदिग्भागे चैशान्यां तु षडश्रकम् ॥१६॥

(दिशाहोमेषु वैष्णवर्त्विग्वरणम्)

वैष्णवा[5]नृत्विजश्चाष्टौ दिशां होमेषु योजयेत् ।
मध्ये तु साधको मन्त्री जुहुयाज्ज्वलितेऽनले ॥

---

1. ॰समर्चितम् E F.
2. इदमर्धं सर्वत्रैवमेवोपलभ्यते.
3. ॰मन्त्री E F.
4. अत्र ' दिग्भागे ' इति विशेष्यं बोध्यं ; D पुस्तके तु ' याम्यामर्धेन्दुसंकाशं ' इति पाठः.
5. त्यक्तमेतदार्धत्रयं भ्रान्त्या A पुस्तके तदनुयायिनि B पुस्तके च.

(होमे द्रव्य-संख्या-विधिः)

प्रत्येकं जुहुयादाज्यैरष्टोत्तरसहस्रकम् ।

(होमे मन्त्रविधिः)

सर्वत्र¹ मूलमन्त्रेण जुहुयाद्ध्यानपूर्वकम् ॥१८॥

(कुम्भाभिमन्त्रणविधिः)

होमान्ते देवमभ्यर्च्य सर्वकुम्भेषु साधकः ।
स्पृष्ट्वा तु ताञ्जपेन्मन्त्रं साध्यनामपुटीकृतम् ॥
अष्टोत्तरसहस्रं तु सर्वत्र विधिवत्ततः ।
निवेशयेन्महायन्त्रसंमुखं साध्यमासने ॥२०॥

(प्रथमं प्रागादिकुम्भजलैरभिषेकः)

ततो भेरीनिनादैश्च शङ्खकाहलनिस्वनैः ।
सहितं स्नापयेदेनं प्राच्याद्यैः कुम्भवारिभिः ॥२१॥

(ततः पूर्णकुम्भजलेनाभिषेकः)

पश्चान्मध्यममादाय पूर्णकुम्भं स्वलंकृतम् ।
तद्वारिणाऽभिषिच्यान्ते मन्त्रं मन्त्री जपेत्स्वयम् ॥

(यथोक्ताभिषेकेण सर्वकिल्बिषनिवृत्तिपूर्वकसर्वकामावाप्तिः)

ततस्तेनाभिषेकेण निर्धूताशेषकिल्बिषः² ।
राजते हिमसंरोधान्निर्मुक्त इव भास्करः ॥२३॥

1. सर्वत्रानेन मन्त्रेण A B E F.
2. °कल्मषः A B E F.

सर्वे तमनघं[1] कामा वृणते स्वयमेव हि ।
विना राजानमेतेन[2] कुर्याच्चान्याभिषेचनम्[3] ॥२४॥
एवं महाभिषेके तु कृते पूर्णे[4] महात्मना ।
यस्य यद्वाञ्छितं तस्य हस्तस्थं तन्न संशयः ॥२५॥
आयुष्कामी तथाऽऽयुष्यमारोग्यार्थी तदश्नुते ।
अर्थार्थी चार्थमाप्नोति पशुकामस्तथा पशून् ॥
अपुत्रः पुत्रमाप्नोति निर्गुणो गुणवान्भवेत् ।
कन्यार्थी लभते कन्यां जिगीषुर्जयमश्नुते ॥२७॥
स्वपदं पदहीनस्तु पदार्थी परमं पदम् ।
अन्नकामश्च[5] बह्वन्नं यशोऽर्थी चाश्नुते यशः ॥२८॥
किमत्र बहुनोक्तेन यद्यन्मनसि वर्तते ।
तत्तत्सद्यः समाप्नोति नात्र कार्या विचारणा ॥

(अन्ते साधकार्चनविधिः)

एवं कृताभिषेकस्तु पूर्णकामोऽथ मानवः ।
सुवर्णैर्बहुरत्नैश्च वस्त्रैर्माल्यानुलेपनैः ॥३०॥

---

1. तं मनसः A B E F.
2. ॰मेकेन A B E F.
3. कुर्याद्वन्याभि॰ (?) D ; कुर्याद्वाऽन्याभि॰ (?) E F.
4. पूर्वोक्तवर्त्मना A B E F.
5. अन्तकाम्रो भवेद्वृन्मन् (?) A B.

अर्चयेत्साधकं सम्यग्दद्याद्धेनुं सवत्सकाम् ।
तस्मै शिष्टं च यद्द्रव्यमभिषेकपरिच्छदम् ॥३१॥
तच्च दद्यात्तथा पात्रीं पायसेनाभिपूरिताम् ।

(ऋत्विजां ब्राह्मणानां च परितोषणविधिः)

प्रत्येकं निष्कदानेन तोषयेदृत्विजोऽखिलान् ।
तर्पयेद्ब्राह्मणानन्यान्यथाशक्ति समाहितः ॥३२॥

इति श्रीपाञ्चरात्रे तन्त्ररहस्ये अहिर्बुध्न्यसंहितायां

सर्वफलसाधनमहाभिषेकविधानं नाम एकोनचत्वारिंशोऽध्यायः ।

ओम् ।

(आदितः श्लोकाः २४८१)

---

ओम् ।

## अथास्त्रस्वरूप-तच्छक्ति-निरूपणं नाम

## चत्वारिंशोऽध्यायः ।

ध्यातं सकृद्भवानेककोट्यघौघं हरत्यरम् ।
सुदर्शनस्य तद्दिव्यं भर्गो देवस्य धीमहि ॥

(उक्तानुवादपूर्वकमस्त्रसंस्थान-तच्छक्ति-स्वरूपप्रश्नः)

**श्रीनारदः ।**

भगवन्देवदेवेश विश्वामरवरार्चित ।
यद्यन्मया पुरा पृष्टं तत्त्वतस्तत्तदीरितम् ॥१॥
दिव्यास्त्राणां तु सर्वेषां मन्त्ररूपाश्च मूर्तयः ।
कथिता भवता सम्यक्पृच्छतो मे सविस्तरम् ॥२॥
किंसंस्थानान्यथास्त्राणि किंशक्तीनि परंतप ।
मयि सानुग्रहं चेतस्तव चेद्वक्तुमर्हसि ॥३॥

(तदुत्तरकथनाय तेषां परमगुह्यत्वख्यापनम्)

**अहिर्बुध्न्यः ।**

तदेतत्परमं गुह्यमवाच्यमतिदुर्लभम् ।

(अस्त्राणां स्वरूपेण कंचित्प्रत्यपि गोचरताविरहः)

न चाविरासन्नस्त्राणि स्वस्वरूपेण कस्यचित् ॥४॥
सुरासुरैर्नियुज्यन्ते मन्त्ररूपेण तानि वै ।

(देवकार्यार्थमिन्द्रं प्रति कदाचित्तेषां गोचरता)

एकदा वृत्रनिधने वासवस्य स्वरूपतः ॥५॥
आविर्बभूवुरेतानि सुरकार्यमिदं त्विति ।

(मन्त्ररूपेणासाध्ये विषये तेषां स्वस्वरूपाविष्करणम्)

मन्त्रस्वरूपैश्चासाध्ये विषये स्वस्वरूपतः ॥६॥
आविष्कुर्वन्ति चास्त्राणि भीषणानि परं मुने ।
एषां[1] दर्शनमात्रेण विनश्यन्त्यरिसैनिकाः ॥७॥

(भगवता तेषां स्वरूपेण धारणम्)

चक्रस्वरूपी भगवांस्तानि[2] धत्ते स्वरूपतः ।

(तत्स्वरूप-तच्छक्ति-कथनप्रतिज्ञा)

स्वरूपाणि तथा तेषां शक्तीश्च कथयामि ते ॥८॥

१ (तत्र प्रथमं नारायणास्त्रस्वरूपकथनम्)

शृणु नारायणास्त्रस्य स्वरूपं प्रथमं मुने ।
सहस्रधारमत्युग्रं सहस्रार्कसमप्रभम् ॥९॥

---

1. एतेषां ध्यानमात्रेण A B E F.
2. भगवान्संनिधत्ते A B E F.

तैजसं [1]विस्तृताग्रं तन्मोहिनीकुसुमोपमम् ।

२ (अथ पाशुपतम्)

प्रतिपच्चन्द्रसंकाशमध्याष्टाश्रविदीपितम् ॥१०॥
शतधारं तडिद्दीप्तमेतत्पाशुपतं मतम् ।

३ (अथ ब्राह्मम्)

[2]सहस्रारसमायुक्तं विद्युत्पुञ्जोपमाकृति ॥११॥
प्रस्तरप्रतिमं मुष्टिग्राह्याग्रं ब्राह्ममीरितम् ।

४ (अथ ब्रह्मशिरः)

दंष्ट्राकरालं दष्टोष्ठं पिङ्गलाक्षं विभीषकम् ॥१२॥
गृहीतपिङ्गकेशाग्रमेतद्ब्रह्मशिरो मतम् ।

५ (अथ विष्णुचक्रम्)

विष्णुचक्रमिति ख्यातं सहस्रारं सुदर्शनम् ॥१३॥

६ (अथ जृम्भणम्)

जृम्भणं त्वष्टवक्राङ्गं दण्डमेवं विदुर्बुधाः ।

७ (अथ कालपाशः)

भीमाकारं पाशमेव कालपाशमिति स्मृतम् ॥१४॥

८ (अथाग्नेयम्)

षट्कोणाग्रं ज्वलज्ज्वालमस्त्रमाग्नेयमुत्तमम् ।

---

1. विद्युताग्रं D.
2. सहस्रार्क॰ E F.

९ (अथ हयशिरः)

ज्वालाविलं वाजिवक्त्रमस्त्रं हयशिरो मतम् ॥१५॥

१० (अथ प्रस्वापनम्)

प्रस्वापनं कुवलयस्तवकस्तम्बसंनिभम् ।

११ (अथ तामसम्)

सतोयतोयदप्रख्यं तामसास्त्रमुदीरितम् ॥१६॥

१२ (अथ कालास्त्रम्)

कालास्त्रं भीषणं दण्डं षष्टिघण्टासमाकुलम् ।

१३ (अथ दण्डचक्रम्)

आद्यन्तचक्रयुग्दण्डं दण्डचक्रमिति स्मृतम् ॥

१४ (अथ कालचक्रम्)

कालचक्रं चतुष्कोणं पर्यन्तस्थितराशिमत्[1] ।

१५ (अथ धर्मचक्रम्)

धर्मचक्रं सुवृत्तं स्याद्दशयज्ञायुधाङ्कितम् ॥१८॥

१६ (अथ शैवम्)

शैवं शतमुखाग्निस्तु दण्डवत्परिकीर्त्यते ।

१७ (अथ शूलम्)

शूलं तु त्रिदलं प्रोक्तं तीक्ष्णधारं [2]सुदण्डकम् ॥

---

1. °धाकृति D.
2. सदण्डकम् A B.

१८ (अथ रौद्रम्)

परशू रौद्रमस्त्रं च तीक्ष्णधारं भयावहम्[1] ।

१९ (अथ त्रिशूलम्)

शूलत्रयाङ्कितमुखं त्रिशूलं दण्डवद्भवेत् ॥२०॥

२० (अथ घोरास्त्रम्)

घोरं नाराचरूपं स्यादस्त्रमाहुर्मनीषिणः ।

२१ (अथाघोरास्त्रम्)

[2]कृष्णास्यं पिङ्गनयनं ज्वालाकेशोर्ध्वबन्धनम् ॥
अघोरास्त्रमिदं प्रोक्तं +[3]+ + मसिधारकम् ।

२२ (अथ संमोहनम्)

अस्त्रं संमोहनं नाम कमलं नालसंयुतम् ॥२२॥

२३ (अथैषीकम्)

ऐषीकं [4]शरनालाभमस्त्रमाहुर्विचक्षणाः ।

२४ (अथेन्द्रचक्रम्)

वज्राङ्कितचतुष्कोणं [5]नटाभममितद्युति ॥२३॥
ऐन्द्रचक्राख्यमस्त्रं तत्परवैरि[6]भयंकरम् ।

---

1. रौद्रमद्रं (?) स्यात्तीक्ष्णधारं भयापहम् D.
2. अघोरास्त्रप्रतिपादकमिदमर्धद्वयं D पुस्तके न दृश्यते.
3. अत्रापेक्षितं वर्णत्रयं पुस्तकेषु नोपलभ्यते.
4. शरपुष्पाभ° D.
5. चेटाभ° D.
6. °भयावहम् A B E F.

२५ (अथ शुष्काशनिः)

सदा ज्वलितसर्वाङ्गं महिषाकृति भीषणम् ॥२४॥
शुष्काशनिरिदं प्रोक्तमस्त्रमङ्गारसंनिभम्

२६ (अथार्द्राशनिः)

तादृशं शुक्लवर्णं[1] तदार्द्राशनिरिति स्मृतम् ॥२५॥

२७ (अथ पैनाकास्त्रम्)

पैनाकमस्त्रं परमं धनुस्तक्षकसंनिभम् ।

२८ (अथ कङ्कालम्)

कङ्कालाख्यं भवेदस्त्रं पिशाचाकृति भीषणम् ॥

२९ (अथ कापालम्)

कपालमालिकामाहुः कापालास्त्रमनुत्तमम् ।

३० (अथ सौरम्)

सौरमस्त्रं समाख्यातं[2] सूर्यबिम्बपरंपरा ॥२७॥

३१ (अथ वरुणपाशः)

अस्त्रं वरुणपाशाख्यं शीताकृति सुदारुणम् ।

३२ (अथ संतापनम्)

लकुटं[3] शङ्कुजालाढ्यं संतापनमिदं विदुः ॥२८॥

---

1. बहुवर्णं A B E F.
2. तदाख्यातम् D.
3. शकुटं D; अत्र पाठद्वयमपि चिन्त्यम्.

३३ (अथ वारुणम्)

वारुणं जालकाकारं द्वात्रिंशच्छिद्रसंयुतम् ।

३४ (अथ धर्मपाशः)

सर्वतत्त्वमयं धाम धर्मपाशमिति स्मृतम् ॥२९॥

३५-३६ (अथ शक्तिद्वयम्)

शक्तिरेका प्रसिद्धैव शक्त्यन्तरमथोच्यते ।
द्विशिरस्कैकनाला च दशघण्टाविभूषिता ॥३०॥

३७ (अथ वायव्यम्)

वायव्यमस्त्रं सारङ्गः सशृङ्ग इव पठ्यते ।

३८ (अथ मौसलम्)

मौसलं मुसलं प्रोक्तं विद्युद्दण्डमिवोज्ज्वलम् ॥

३९ (अथ गान्धर्वम्)

गान्धर्वमस्त्रमादिष्टं वीणादण्डोपमाकृति ।

४० (अथ दर्पणास्त्रम्)

दर्पणं दर्पणं प्रोक्तमस्त्रं पूर्णेन्दुसंनिभम् ॥३२॥

४१ (अथ शोषणम्)

शोषणं विकटं शृङ्गमस्त्रं परविशोषणम् ।

---

1. अत्र "दाम" इति तु युक्तं भवेत्.
2. °समन्विता D.

४२ (अथ पैशाचम्)

पैशाचमस्त्रं परममुल्कामुखमुदाहृतम् ॥३३॥

४३ (अथ तेजःप्रभम्)

तेजःप्रभं स्मृतं प्रासप्रतिमं परदारणम् ।

४४ (अथैन्द्रास्त्रम्)

ऐन्द्रमस्त्रं वज्ररूपं तेजसां निलयं स्मृतम् ॥३४॥

४५ (अथ विलापनम्)

अस्त्रं विलापनं नाम [1]धाराधरमुदाहृतम् ।

४६ (अथ वैद्याधरम्)

वैद्याधरास्त्रमाहुस्तत्पुष्पमालां तु मोहिनीम् ॥३५॥

४७ (अथ कङ्कालम्)

अस्त्रं [2]कङ्कालसंज्ञं स्यान्महाघण्टानिनादितम् ।

४८ (अथ मोदकी)

[3]मोदकी नाम परमा वल्लरी पुष्पशालिनी ॥३६॥

४९ (अथ शिखरम्)

शिखरं नाम खट्वाङ्गमायुधं परिचक्षते ।

५० (अथ क्रौञ्चम्)

क्रौञ्चमस्त्रं महत्पक्षी क्रौञ्चाकृतिरिहोच्यते ॥३७॥

---

1. शतधारमुदाहृतम् E F.
2. कङ्कणिसंज्ञं तु महा० D.
3. मोदिनी D.

५१ (अथासिरत्नं, असिरक्तं वा)

असिरत्नाह्वयं दिव्यमस्त्रं खड्गो महाद्युतिः ।

५२ (अथ प्रशमनम्)

अस्त्रं प्रशमनं नाम प्रोच्यते ध्वजसंनिभम् ॥३८॥

५३ (अथ कन्दर्पदयितम्)

कन्दर्पदयितं चास्त्रमिक्षुः परमशोभनम् ।

५४ (अथ मदनास्त्रम्)

मदनं चामरप्रख्यमस्त्रं परभयावहम् ॥३९॥

५५ (अथ सौमनम्)

सौमनं शिबिकाभं तदस्त्रमस्त्रविदो विदुः ।

५६ (अथ सत्यास्त्रम्)

स्थूलमुक्ताक्षमाले[1]व सत्यास्त्रं सर्वसाधकम् ॥४०॥

५७ (अथ संवर्तकास्त्रम्)

अस्त्रं [2]संवर्तकं नाम महाशङ्खः प्रकीर्त्यते ।

५८ (अथ मायाधरास्त्रम्)

मायाधराह्वयं [3]प्राहुरस्त्रं [4]शांखिनमेव च ॥४१॥

---

1. °मालेव E.
2. संवर्तनं D.
3. भूयुरस्त्रं B E F.
4. शङ्खिन° E F; अत्र पाठद्वयमपि चिन्त्यम्.

५९ (अथ सोमास्त्रम्)

सोमास्त्रमर्धचन्द्राभं सायकं संप्रचक्षते ।

६० (अथ त्वाष्ट्रम्)

त्वाष्ट्रमस्त्रं चैत्यसमं सदण्डमभिधीयते ॥४२॥

६१ (अथ शीतेष्वस्त्रम्)

शीतेषुनाम [1]कुम्भास्या स्रवन्ती सरिदुत्तमा ।

६२ (अथ भगास्त्रम्)

त्रिकोणं दण्डवद्विद्याद्भगास्त्रममितद्युति ॥४३॥

६३ (अथ संदामनम्)

संदामनं समाख्यातं चक्रं निररमुच्यते ।

६४ (अथ सत्यवदस्त्रम्)

सत्यवन्तं महाभूतं व्यात्ताननमिदं विदुः ॥४४॥

६५ (अथ वारणम्)

वारणं नाम [2]सर्पास्यं वारणं परमाङ्कुशम् ।

६६ (अथ धृष्टम्)

धृष्टं कबन्धमुदरं व्यात्ताननमुदाहृतम् ॥४५॥

---

1. कुम्भः स्यात् D.
2. सर्पोत्थं D.

६७ (अथ भृशाश्वतनयास्त्रम्)

भृशाश्वतनयं नाम द्विधारं क्रकचं स्मृतम् ।

६८ (अथ सत्यकीर्तिः)

सत्यकीर्तिस्तु मकरो व्यात्तवक्त्रोऽभिधीयते ॥४६॥

६९ (अथ मोहः)

मोहः सर्पशिरो व्यात्तवक्त्रमस्त्रं विदुर्बुधाः ।

७० (अथ रभसास्त्रम्)

रभसं तारसंकाशमस्त्रं सर्वास्त्रसादनम् ॥४७॥

७१ (अथ सर्वनाभः)

सर्वनाभाह्वयं चास्त्रं कमण्डलुरिहोच्यते ।

७२ (अथ पराङ्मुखास्त्रम्)

पराङ्मुखाह्वयं चास्त्रं पञ्चाननशिरो विदुः ॥४८॥

७३ (अथ जृम्भकम्)

जृम्भकं नाम रक्ताक्षं त्रिपञ्जरमुदीर्यते ।

७४ (अथ प्रतिहारः)

प्रतिहाराख्यमस्त्रं तु कुन्तः परमभास्वरः ॥४९॥

1. बालसं॰ D.
2. सर्वार्थसाधनम् E.
3. सर्वारम्भाह्वयं A B.
4. त्रिपाज्ज्वर उदीर्यते D E F.
5. प्रत्याहाराख्य॰ A B.

७५ (अथावाङ्मुखम्)

[1]ऋक्षास्यं भूतमुद्दिष्टमवाङ्मुखसमाह्वयम् ।

७६ (अथ धनास्त्रम्)

धनाख्यमस्त्रं मुकुटसमानममितद्युति ॥५०॥

७७ (अथ धान्यास्त्रम्)

धान्यास्त्रमेतत्परमं शालिस्तबकबन्धनम् ।

७८ (अथ महाभूतम्)

[2]वृषाक्षं वृषवक्त्राङ्कं महाभूतं प्रचक्षते ॥५१॥

७९ (अथ कामरूपम्)

[3]कामरूपं महास्त्रं तु प्रतिसूर्यकसंनिभम् ।

८० (अथ दृढनाभः)

दृढनाभाख्यमस्त्रं स्यान्नागो बहुफणान्वितः ॥५२॥

८१ (अथ कामरुचिः)

अस्त्रं कामरुचिर्नाम स्वस्तिकं परिचक्षते ।

८२ (अथ सुनाभम्)

सुनाभं क्षुरिका तीक्ष्णा प्रोच्यतेऽस्त्रमनुत्तमम् ॥

---

1. ऋक्षाख्यं D.
2. वृक्षाक्षं E.
3. एतदारभ्य सार्धश्लोकः A पुस्तके पङ्क्तिभ्रमात्त्यक्तः; अत एव तदनुयायिनि B पुस्तके च.

८३ (अथ मकरास्त्रम्)

मकरो नाम दिव्यास्त्रं दीपिकादण्डसंनिभम् ।

८४ (अथ दशाक्षम्)

[1]दशाक्षमेतज्जानीयात्कौक्षेयकमवारितम् ॥५४॥

८५ (अथ वेतालास्त्रम्)

[2]शूत्तिमन्तं चोष्ट्रमुखं वेतालमभिधीयते ।

८६ (अथ दशवक्त्रम्)

[3]एकस्था दशवक्त्री तु दशवक्त्रमुदाहृतम् ॥५५॥

८७ (अथ रुचिरास्त्रम्)

रुचिराख्यं भवेदस्त्रं हलं परमदारुणम् ।

८८ (अथ दशकर्णः)

दशवर्षा काकमुखी [4]दशकर्णमुदीर्यते ॥५६॥

८९ (अथ योगंधरास्त्रम्)

योगंधरं दिवाभीतव्यात्तवक्त्रमिति स्मृतम् ।

९० (अथ वारुणम्)

अमित्रघ्नं वारुणं स्यात्परास्त्रविनिवारणम् ॥५७॥

---

1. दशास्य॰ A B E F.
2. इत्थमेव सर्वत्र पाठः.
3. एकद्वादशवक्त्री तु D.
4. दशवर्ष॰ D.

९१ (अथानिद्रास्त्रम्)

अनिद्रमस्त्रमुन्निद्रकल्पकं कथयन्ति वै ।

९२ (अथ कुठारास्त्रम्)

[1]भेत्तारमस्त्रमाख्यातं कुठारं परभेदनम् ॥५८॥

९३ (अथ शतोदरम्)

शतोदरास्त्रं भूतं स्याच्छतोदरसमन्वितम् ।

९४ (अथ सौमनसम्)

अस्त्रं सौमनसं नाम जपाकुसुममञ्जरी ॥५९॥

९५ (अथ पद्मनाभास्त्रम्)

पद्मनाभं महाभूतं पद्मालंकृतनाभिमत् ।

९६ (अथ महानाभास्त्रम्)

महानाभाख्यमस्त्रं तु वक्रो विकटकंधरः[2] ॥६०॥

९७ (अथ ज्यौतिषास्त्रम्)

ज्यौतिषं नाम परमं विमानमभिधीयते ।

९८ (अथ क्षेपणास्त्रम्)

क्रमणं क्षेपणं प्रोक्तं परास्त्रक्रमणं महत् ॥६१॥

९९ (अथ त्रैराशिकास्त्रम्)

त्रैराशिर्वानरमुखं सपक्षं नरपादवत् ।

---

1. इत्थमेव सर्वत्र पाठः. 2. °कंधरम् E F.

१०० (अथ सार्चिमालि)

सार्चिमालि महाभूतमेकपाद्वहुहस्तकम् ॥६२॥

१०१ (अथ विमलास्त्रम्)

विमलास्त्रमिदं विद्यात्स्फाटिकाकारडोलिकाम्[2] ।

१०२ (अथ धृतिकास्त्रम्)

वराहसिंहमनुजकुक्कुरेभमुखैर्युतम्[1][3] ।
भूतं पुराविदो ब्रूयुर्धृतिकास्त्रं सुदारुणम् ॥६३॥

इति श्रीपाञ्चरात्रे तन्त्ररहस्ये अहिर्बुध्न्यसंहितायां

अस्त्रस्वरूप-तच्छक्ति-निरूपणं नाम चत्वारिंशोऽध्यायः ।

ओम् ।

(आदितः श्लोकाः २५४४)

---

1. इत्थमेव सर्वत्र पाठः.
2. °गोलिकाम् D.
3. °कूर्मकपमुखैर्युतम् A B E F.

ओम् ।

## अथ स्वरूपतोऽस्त्रधारण-तत्प्रयोजन-प्रतिपिपादयिषया मधुकैटभसंहारवर्णनं नाम एकचत्वारिंशोऽध्यायः ।

ध्यातं सकृद्भवानेककोट्यघौघं हरत्यरम् ।
सुदर्शनस्य तद्दिव्यं भर्गो देवस्य धीमहि ॥

(भगवता क्रियमाणस्यास्त्राणां स्वरूपतो धारणस्य कालविशेषप्रयोजनादिप्रश्नः)

श्रीनारदः ।

अस्त्राण्येतानि भगवन्कथितानि स्वरूपतः ।
तान्यधत्त स्वरूपेण देवः पूर्वमितीरितम् ॥१॥
कस्मिन्कदा किमर्थं तत्कृतं विश्वेश्वर प्रभो ।
प्रश्नमेतत्परिच्छिन्धि यदि सानुग्रहोऽसि मे ॥२॥

(पृष्टस्यार्थस्य परमगुह्यत्वख्यापनमुखेन तत्प्रतिवचनप्रतिज्ञा)

अहिर्बुध्न्यः ।

परमं ते प्रवक्ष्यामि गुह्यमत्यद्भुतं महत् ।
पृच्छते भक्तियुक्ताय परमात्मनि नारद ॥३॥

(प्रलयावसाने लीलार्थं भगवतः सिसृक्षोदयः)

पुरा कल्पावसाने तु भगवान्पुरुषोत्तमः ।

जगत्स्रष्टुं मनश्चक्रे लीलारससमुत्सुकः ॥४॥

(प्रकृति-पुरुष-महदादिविशेषान्त-जगत्सृष्टिः)

प्रथमं जनयामास प्रधानपुरुषौ स्वतः ।
महदादि विशेषान्तं जनयित्वा ततो हरिः ॥५॥

(अण्डोत्पादनपूर्वकं तत्र चतुर्मुखसृष्टिः)

तैः सर्वैरण्डमुत्पाद्य तस्मिन्ब्रह्माणमासृजत् ।

(प्रजासृष्ट्यर्थं चतुर्मुखाय वेदोपदेशः)

प्रजाः सृजेति वेदांश्च तस्मै प्रादाज्जनार्दनः ॥६॥

(चतुर्मुखस्य प्रजासृष्ट्यारम्भः)

ततः प्रजाः स विविधाः स्रष्टुं समुपचक्रमे ।

(तत्र बलदर्पितमधुकैटभोत्पत्तिः)

एतस्मिन्नन्तरे दैत्यौ ब्रह्मसृष्टेरनन्तरम् ॥७॥
बलवन्तौ तु तस्योर्वोर्जज्ञाते मधुकैटभौ ।
मदोन्मत्तौ महाकायौ दानवौ बलदर्पितौ ॥८॥

(ताभ्यां चतुर्मुखाद्वेदापहरणम्)

तौ दृष्ट्वा सृष्ट्युपक्रान्तं ब्रह्माणममितद्युतिम् ।
प्रविश्य मायया तस्माद्वेदान्जगृहतुस्तदा ॥९॥

---

1. तस्माद्वेदानाजहतुस्तदा A B E F.

(वेदापहाराच्चतुर्मुखस्य सृष्ट्यसामर्थ्यम्)

ततः स्रष्टुं प्रजाः सर्वा न शशाक प्रजापतिः ।

(ततो निर्विण्णस्य तस्य चिन्ताप्रकारः)

परं निर्वेदमापन्नो बभूवाथ प्रजापतिः ॥१०॥
प्रजाः सृजेति भगवान्व्यादिदेश स मां हरिः ।
न शक्यते विना वेदैः स्रष्टुं नानाविधाः प्रजाः ॥
दानवाभ्यामिमे वेदा हृता मत्तोऽद्य मायया ।
किमन्यत्कार्यमित्येष परां चिन्तामुपेयिवान् ॥१२॥

(ततः कृतनिश्चयस्य प्रजापतेः क्षीराब्धिगमनम्)

ततो वेधा विनिश्चित्य [1]मनसा कार्यमात्मनः ।
क्षीराब्धेरुत्तरं तीरं जगाम कमलोद्भवः ॥१३॥

(तत्र चतुर्मुखेन भगवत्स्तुतिः)

तत्र तुष्टाव देवेशं पुण्डरीकाक्षमच्युतम् ।
ओं नमो वासुदेवाय शुद्धज्ञानस्वरूपिणे ॥१४॥
असीमानन्दकन्दाय भूरिभूम्ने महात्मने ।
अचिन्त्यशक्तिरूपाय बिभ्रते भुवनानि ते ॥१५॥
[2]असीमैश्वर्यवीर्याय तेजसां निधये नमः ।

---

1. मनसः A B.
2. अणिमैश्वर्यरूपाय B E F.

[1]विश्रान्तर्यामिणे तुभ्यं शुद्धसत्त्वैकमूर्तये ॥१६॥
अनवद्याखिलाधारभूषणाय नमो नमः ।
शङ्खचक्रगदाखड्गशार्ङ्गायुधधराय ते ॥१७॥
श्रीमते पुष्कराक्षाय पुरुषाय नमो नमः ।
विष्वक्सेनमुखैर्दिव्यैः सेव्यमानाय सूरिभिः ॥१८॥
दिव्यानन्दमयव्योमनिलयाय नमो नमः ।
सर्गोपसर्गरक्षाभिः क्रीडते जगतां सदा ॥१९॥
महाविभूतये तुभ्यं नमो निखिल[2]मूर्तये ।
स्वसमाश्रितवात्सल्य[3]कृतव्यूहविभूतये ॥२०॥
विश्वविद्वेषिविध्वंसकृतदीक्षाय ते नमः ।
तापत्रयाभितप्ताघनाशनस्मरणाय ते ॥२१॥
नमोऽचिन्त्यस्वरूपाय विष्णवे कर्मसाक्षिणे ।

(स्तुतिप्रसन्नेन भगवता चतुर्मुखाय दर्शनप्रदानम्)

इति तस्य स्तुतिं श्रुत्वा भगवान्पुरुषोत्तमः ॥२२॥
आविर्बभूव पुरतः प्रसन्नः पद्मलोचनः ।

(चतुर्मुखेन स्ववृत्तान्तनिवेदनम्)

तं दृष्ट्वा परमप्रीतः प्रणम्य परमाद्भुतम् ॥२३॥
व्यजिज्ञपदमेयात्मा स्ववृत्तं विनयान्वितः ।

---

1. इदमाद्यर्धचतुष्कं A B पुस्तकयोर्भ्रान्त्या त्यक्तम्.
2. ॰रूपिणे B E F.
3. ॰परव्यूह॰ B E F.

(तच्छ्रुत्वा भगवता मधुकैटभस्मरणम्)

एतं दानवयोः श्रुत्वा व्यतिक्रममरिंदमः ॥२४॥
मन्दं प्रहस्य भगवान्सस्मार मधुकैटभौ ।

(स्मृतिमात्रेण तयोस्तत्रागमनम्)

तौ तस्य स्मृतिमात्रेण द्वारमाजग्मतुस्तदा ॥२५॥

(तौ प्रति भगवद्वचनम्)

ततः समागतौ दृष्ट्वा तत्रैव बलदर्पितौ ।
मेघगम्भीरनिर्घोषमुवाच मधुसूदनः ॥२६॥
युवाभ्यामाहृता वेदा मद्दत्ता ब्रह्मणो मुखात् ।
माययेति श्रुतं नैवं युज्यते कर्तुमत्र वै ॥२७॥
तत्तस्मै सकला वेदा दीयन्तां परमेष्ठिने ।

(भगवद्वचनतिरस्करणपूर्वकं तयोः प्रतिवचनम्)

एवमुक्तौ भगवता दुर्मदान्धौ महासुरौ ॥२८॥
प्रत्यूचतुरिमांस्तस्मै [2]ददावो नैव [3]सर्वदा ।
आवामेवाचिरात्सर्वाः स्रक्ष्यावो विविधाः प्रजाः ॥
वेदैर्विनैव भगवन्किमत्र परमेष्ठिना ।

(ततः क्रुद्धेन भगवता तयोर्हननाय विष्वक्सेनव्यादेशनम्)

स तयोर्वचनं श्रुत्वा [4]कोपसंरक्तलोचनः ॥३०॥

---

1. मद्दं (?) D. 2. ददाव इत्यार्षं रूपम्.
3. सर्वथा B E F.
4. कोपरक्तान्तलोचनः D.

दुरात्मानौ तु तौ हन्तुं मतिं चक्रे जगत्पतिः ।
“एतौ निहत्य दुर्दान्तौ पापावद्य मदोद्धतौ ॥
आदाय वेदानेतस्मै ब्रह्मणे प्रतिपादय” ।
इति शेषाशनं देवो व्यादिदेश कृताञ्जलिम् ॥

(ततस्तेन समरसंनहनम्)

स तथेति समानीय सर्वाः सेनाश्च वैष्णवीः ।
निर्जगाम ततो योद्धुं

(सन्नद्धाभ्यां ताभ्यां च मायया महासेनानिर्माणम्)

संनद्धौ तौ च दानवौ ॥३३॥
निर्मिमाते तदा सेनां महतीं तौ च मायया ।

(द्वयोः सेनयोस्तुमुलसंग्रामः)

उभयोः पक्षयोर्युद्धं तुमुलं समपद्यत ॥३४॥
अदृष्टमश्रुतचरमभूत्तत्समरं तदा ।

(विष्वक्सेनेन भगवत्सकाशे तयोरजय्यत्वनिवेदनम्)

चिरेणाजय्यतां ज्ञात्वा दुष्टदानवयोर्युधि ॥३५॥
विष्वक्सेनस्तु देवाय न्यवेदयदवारितः ।

(ततः क्रुद्धस्य भगवतः सर्वास्त्राणां स्वरूपतो धारणपूर्वकं युद्धाय निर्गमनम्)

ततस्तु परमक्रुद्धो निर्जगाम जनार्दनः ॥३६॥
युध्यमानौ तु तौ दृष्ट्वा चक्ररूपी स्वयं हरिः ।

[1]बिभ्रद्द्विषष्टिभिर्हस्तैस्तस्थौ दिव्यास्त्रसंहतिम् ॥

(सर्वास्त्रस्वरूपधारिभगवद्रूपवर्णनम्)

तं दृष्ट्वा परमक्रुद्धं सहस्रादित्यसंनिभम् ।
ज्वलद्भिरस्त्रैर्हस्ताग्रधार्यमाणैश्च वेष्टितम् ॥३८॥
पिङ्गलोर्ध्वमुखैः केशैरुपेतमतिभीषणम् ।
अण्डान्तव्याप्तवपुषं जपाकुसुमसंनिभम् ॥३९॥
पिङ्गलाघूर्णमानोग्रवृत्तनेत्रत्रयान्वितम् ।
भुग्नभ्रुकुटिसंनद्धभीषणाननशोभितम् ॥४०॥
दष्टोष्ठमुज्ज्वलद्दंष्ट्रानिर्यत्स्खलितपावकम् ।
महाजलधिसंकाशं द्विषष्टिभुजपञ्जरम् ॥४१॥
रक्ताम्बरधरं भीममालीढस्थितिमण्डितम् ।
हारकेयूरताटङ्ककटकादिविभूषणैः ॥४२॥
उपेतं किङ्किणीजालक्वणत्कारनिनादितम् ।
आश्चर्यरूपमतुलमेवंभूतं महाद्युतिम् ॥४३॥

(तद्रूपदर्शनाद्दैत्यसैन्यानां निःशेषं विलयः)

कल्पान्तजृम्भिताम्भोधिकल्पास्ते दैत्यसैनिकाः ।
नेशुर्निरीक्ष्य निःशेषं

(अवशिष्टयोर्मधुकैटभयोर्हननाय भगवता चक्रप्रेषणम्)

शिष्टौ तौ दानवौ परम् ॥

1. °भृत° A B E F.

आगच्छन्तौ [1]सुसंक्रान्तौ दृष्ट्वा तावुद्यतायुधौ ।
प्राहिणोद्भीषणं चक्रं तद्वधाय महाद्युतिः ॥४५॥

(चक्रेण तयोः शिरश्छेदः)

तयोश्चिच्छेद शिरसी तत्क्षणाच्चक्रमुत्तमम् ।
ताभ्यां वेदानुपादाय देवायैताव्यवेदयत् ॥४६॥

(ब्रह्मणे वेदप्रदानपूर्वकं भगवतस्तिरोधानम्)

देवोऽपि ब्रह्मणे दत्वा पुनरन्तर्दधे हरिः ।

(ब्रह्मणा यथापूर्वं प्रजासृष्टिः)

लब्धवेदः पुनर्धाता प्रजाश्चक्रे यथापुरम् ।

(विवक्षितार्थोपसंहारः)

इत्थं भगवतो रूपं चक्ररूपस्य चक्रिणः ॥४७॥

इति श्रीपाञ्चरात्रे तन्त्ररहस्ये अहिर्बुध्न्यसंहितायां
स्वरूपतोऽस्त्रधारण-तत्प्रयोजन-प्रतिपिपादयिषया मधुकैटभसंहारवर्णनं नाम
एकचत्वारिंशोऽध्यायः ।

ओम् ।

(आदितः श्लोकाः २५९१)

---

1. सुसंकुद्धौ A B E F.

ओम् ।

## अथ निवर्तकास्त्रप्रयोगावसरवर्णने काशीराज-श्रुतकीर्त्युपाख्यानवर्णनं नाम द्विचत्वारिंशोऽध्यायः ।

ध्यातं सकृद्भवानेककोट्यघौघं हरत्यरम् ।
सुदर्शनस्य तद्दिव्यं भर्गो देवस्य धीमहि ॥

(तत्र प्रथममङ्गमन्त्राणामुत्पत्ति-देवता-प्रयोजन-शक्ति-ध्येय-प्रश्नाः)

श्रीनारदः ।

भगवन्सर्वधर्मज्ञ सर्वभूतनमस्कृत ।
श्रोतव्यं यद्यदस्माभिः श्रुतं तत्तदशेषतः ॥१॥
इदं त्विदानीं पृच्छामि शंस मे मनसि स्थितम् ।
कुतोऽमुष्याङ्गमन्त्राणामुत्पत्तिः का च देवता ॥२॥
किमर्थं कीदृशी शक्तिः किं ध्येयं ब्रूहि तत्त्वतः ।

(पृष्टस्यार्थस्य गुह्यत्वख्यापनमुखेनोत्तरकथनारम्भः)

अहिर्बुध्न्यः ।

श्रूयतामवधानेन तदेतद्गुह्यमुत्तमम् ॥३॥

---

1. काश्च देवताः B E F.

(तत्रोत्पत्तिप्रश्नस्योत्तरम्)

आथर्वणान्मया वेदान्महामन्त्रपरिष्कृतात् ।
समुद्धृतः षडर्णोऽयं कौस्तुभः सागरादिव ॥४॥
तथा तस्मादिमे मन्त्राः प्रोद्धृताः सकला मुने ।

(देवताप्रश्नस्योत्तरम्)

स्वयमेवाङ्गमन्त्राणामपि देवः सुदर्शनः ॥५॥

(प्रयोजनप्रश्नस्योत्तरम्)

सुदर्शनमहामन्त्रनिष्ठस्याप्लावनं परम् ।
कार्यमेषां

(शक्तिप्रश्नस्योत्तरम्)

षडर्णेन तथाऽमी समशक्तयः ॥६॥

(ध्येयप्रश्नस्योत्तरम्)

एषामष्टभुजो देवः पूर्वोक्तेनैव वर्त्मना ।
ध्येयः सर्वं समाख्यातं किमन्यच्छ्रोतुमिच्छसि ॥

(उक्तानुवादपूर्वकं निवर्तकास्त्रप्रयोगावसरप्रश्नः)

श्रीनारदः ।

भगवन्परमोदार नित्यतृप्त दयानिधे ।
नित्यज्ञानक्रियैश्वर्य विश्वविज्ञानवारिधे ॥८॥

सुदर्शनमहायन्त्रमन्त्रशक्तिक्रियादिषु ।
यद्वक्तव्यं विशेषेण तदुक्तं भवता विभो ॥९॥
[1]प्रवर्तकानामस्त्राणामुत्पत्तिः कथिता पुरा ।
स्वरूपशक्ती च तथा प्रयोगश्च महाद्युते ॥१०॥
निवर्तकानां तु पुनः कदा क्व विषये गुरो ।
प्रयोगः परमं मेऽत्र संशयं छेत्तुमर्हसि ॥११॥

(तदुत्तरकथनप्रतिज्ञा)

अहिर्बुध्न्यः ।

श्रूयतामवधानेन प्रयोगावसरं मुने ।
[2]निवर्तकानामस्त्राणां सम्यक्कथयतो मम ॥१२॥

(तत्प्रयोगावसरकथनम्)

परप्रयुक्तैर्दिव्यास्त्रैरभिचारैश्च तत्कृतैः ।
महत्यभिभवे प्राप्ते तं विद्यात्तपसां निधे ॥१३॥

(पराभिचाराभिभवज्ञानोपायप्रश्नः)

श्रीनारदः ।

पराभिचाराभिभवः कैर्लिङ्गैरवगम्यते ।
राज्ञां च मन्त्रिणां चैव तथाऽन्येषां नृणामपि ॥

---

1. प्रवर्तकानां मन्त्राणा° D.
2. निवर्तकानां मन्त्राणां A B.

(तज्ज्ञानोपायलिङ्गनिरूपणम्)

अहिर्बुध्न्यः ।

लक्ष्यते लक्षणैरेतैर्नृपाणामाभिचारिकी ।
विकृतिः प्रस्तुताऽकाले दारुणा सर्वगोचरा ॥१५॥
अकाण्ड एव नश्यन्ति वाजिवारणमन्त्रिणः ।
तीव्रामयपरीताङ्गः पीड्यते नृपतिः स्वयम् ॥१६॥
पतन्त्यशनयस्तस्य विषये घोरदर्शनाः ।
अल्पसस्या वसुमती विनश्यन्ति गवां गणाः ॥
भवन्ति तस्य विषये पुनः पुनरवग्रहाः ।
तीव्रामयगृहीताश्च महिष्यस्तस्य भूपतेः ॥१८॥
प्रभवन्त्यहिवल्मीकाः प्रासादे द्वारि मण्डपे ।
निपतन्ति महोल्काश्च भृशं भीमस्वरान्विताः ॥
मन्त्रिणश्च विरुध्यन्ते मत्सरेण परस्परम् ।
रजन्यां राजते भीममैन्द्रं धनुरनभ्रजम् ॥२०॥
इतस्ततो वह्निभयं नगरे जायते भृशम् ।
प्रविश्य गर्भभवनं क्रोष्टारश्चानिवारिताः ॥२१॥
क्रोशन्ति संध्ययोर्भीमा दीप्तायां दिशि विस्वरम् ।
रुन्धन्ति नगरं राज्ञः शत्रवो बलदर्पिताः ॥२२॥

---

1. अपि वल्मीकाः A B E F.
2. जायते D.
3. °रनभ्रकम् A B E F.

कृत्याकृत्यं न जानाति स्वयं स्तैमित्यमास्थितः[1] ।
स्वप्नेऽपि पश्यत्यात्मानं मुण्डितं नीलवाससम् ॥
रथेन गर्दभयुजा व्रजन्तं दक्षिणां दिशम् ।
इत्यादिलिङ्गैर्जानीयादभिचारं सपत्नजम् ॥२४॥
पराभिचारजा कृत्या राजानं प्रविशेद्यदि ।
तां दृष्ट्वा क्षिप्रमेवासौ विनश्यति न संशयः ॥
पुत्रांश्च मन्त्रिणश्चापि महिषीं नगरं तथा ।
ज्वालामालाविला कृत्या सर्वं नाशयति क्षणात् ॥

(पराभिचारनिवर्तनाय निवर्तकास्त्रधारिसुदर्शनप्रीणनम्)

एवं पराभिचारेण पीडिते नृपतौ स्वयम् ।
निवर्तकास्त्रसहितं भगवन्तं महाद्युतिम् ॥२७॥
चक्रस्वरूपिणं देवं भक्त्या संतोषयेत्ततः ।
रजतेन सुवर्णेन शिलया ताम्रकेण वा ॥२८॥
सुदर्शनार्चां निर्माय पूजयेत्सनिवर्तकम् ।
समालिख्य पटे वाऽपि ध्यायेत्त्रैलोक्यपूजितम् ॥
एवं निर्माणतो ध्यानात्पूजया वन्दनेन वा ।
प्रतिष्ठया वा स्तोत्रेण देवं संप्रीणयेन्नृपः ॥३०॥
एवमन्ये तथा कुर्युरमात्या वा नरा मुने ।

---

1. °माश्रितः A B E F.

(प्रीतेन सुदर्शनेन पराभिचारनिर्दहनम्)

ततः प्रीतः स भगवाननादिनिधनो विभुः ॥३१॥
अभिचारान्परकृतानाश्रितानुग्रहेण तु ।
भस्मीकरोति स्मृत्यैव तत्प्रयुक्तानपि क्षणात् ॥
दिव्यास्त्राण्युपसंहारैरस्त्रैर्वारयतीश्वरः ।

(परप्रयुक्तकृत्यायास्तत्प्रयोक्तुश्च विनाशनम्)

परप्रयुक्तां कृत्यां तु संप्राप्तामतिभीषणाम् ॥३३॥
स्वयं निर्गत्य देवोऽसौ चक्ररूपी जगत्पतिः ।
भस्मसात्कुरुते तं च प्रयोक्तारं ततः परम् ॥३४॥

(तत्र काशीराजेतिहासोदाहरणम्)

तथैव काशीराजाख्यो वाराणस्यां वसन्नृपः ।
विश्वेश्वरं महादेवमर्चयित्वा समाहितः ॥३५॥
कृष्णोद्देशेन कृत्यां वै जनयामास मोहितः ।
सा [1]समुत्पादिता कृत्या विकटा भीमदर्शना ॥
द्वारकां समनुप्राप्य कृष्णाभ्याशं ययौ तदा ।
तामापतन्तीं संप्रेक्ष्य ज्वाला[2]मालाविलाननाम् ॥
प्रेषयामास भगवान्सुदर्शनमनुत्तमम् ।
सा तमापतितं दृष्ट्वा सहस्रादित्यसंनिभम् ॥३८॥
यथागतं प्रदुद्राव प्रयोक्तारं भयातुरा ।

1. तदुत्पादिता A B E F.
2. °मालाकुला° B E F.

स तां निहत्य तं चापि काशीराजं पुरीं तथा ॥
आजगाम पुनश्चक्रं विष्णुपार्श्वं महाद्युति ।

(अथ श्रुतकीर्त्युपाख्यानोदाहरणम्)

एवमन्यत्पुरावृत्तमितिहासं शृणुष्व[2] मे ॥४०॥

(राज्ञा श्रुतकीर्तिना धर्मेण सप्तद्वीपविशिष्टमहीपरिपालनम्)

सौराष्ट्राधिपती राजा श्रुतकीर्तिरिति श्रुतः ।
निवसन्भद्रशालायां नगर्यामरिमर्दनः ॥४१॥
गजाश्वरथसंपन्नो बलवान्वासवोपमः ।
सुदर्शनमहामन्त्रनिष्ठः परमधार्मिकः ॥४२॥
सुदर्शने परां भक्तिमुद्वहन्नर्चनापरः ।
बुभुजे तत्प्रसादेन सप्तद्वीपवतीं महीम् ॥४३॥

(लोकान्तरं जिगीषोस्तस्य ससैन्यस्य सुदर्शनार्चनपूर्वकं स्वस्तिकाख्य-
गन्धर्वनगरगमनम्)

[3]जेतुं लोकान्तरं चक्रे श्रुतकीर्तिर्मनस्तदा ।
चतुरङ्गबलैर्युक्तः समभ्यर्च्य सुदर्शनम् ॥४४॥
कामगं स्यन्दनं चित्रमारुरोह महाबलः ।
ततः प्रतस्थे प्रथममन्तरिक्षं [4]बलान्वितः ॥४५॥

---

1. इत्थमेव सर्वत्र पाठः ; तत्र पुंलिङ्गान्तत्वं कथमुपपद्यतामिति चिन्त्यम् .
2. आत्मनेपदमार्षम् .
3. गन्तुं A B E F.
4. महाबलः A B E F.

(तन्नगरवर्णनम्)

तत्र गन्धर्वनगरं विशालं स्वस्तिकाह्वयम् ।
वीणाविनोदनेनेत्थं पालितं परमद्युति ॥४६॥
स्वयंप्रवृत्तैः शस्त्रैश्च वार्यमाणारिसैनिकम् ।
बहिर्निरिन्धनेनैव वह्निना परिवेष्टितम् ॥४७॥
सुवर्णसालं परमं रत्नगोपुरमण्डितम् ।
मणिहर्म्यपरिक्षिप्तं गानस्वनसमाकुलम् ॥४८॥
विमानैस्तैजसैर्जुष्टं [1]दिव्योपवनशोभितम् ।
सुवर्णपद्मसरसीसरिद्वापीनिषेवितम् ॥४९॥
सेवितं सुरनारीभिरप्सरोभिश्च सेवितम् ।
गन्धर्वैः किंनरैः सिद्धैश्चारणैश्च सदा युतम् ॥

(युयुत्सुना श्रुतकीर्तिना तन्नगरोपरोधः)

एवंविधं पुरं राजा रुरोध बलदर्पितः ।
वीणाविनोदनं योद्धुं महत्या सेनया तदा ॥५१॥

(गन्धर्वराजेन वाहिनीप्रेषणम्)

श्रुत्वा गन्धर्वराजोऽपि मानुषैरुपरोधनम् ।
[2]प्रहस्य प्रेषयामास सिद्धगन्धर्ववाहिनीम् ॥५२॥

(तत्र तुमुलसंग्रामनिष्पत्तिः)

सा तेन बलिना राज्ञा युयुधे निशितैः शरैः ।

1. दीर्घोपवन° D.
2. प्रहस्य सिद्धगन्धर्ववाहिनीं समचोदयत् A B E F.

प्रवृत्तं तन्महद्युद्धं तुमुलं रोमहर्षणम् ॥५३॥

(श्रुतकीर्तिना गन्धर्वसैन्यविद्रावणम्)

ततो विद्रावयामास भूपतिर्लीलया बलम् ।
गान्धर्वं तत्पुनः प्राप स्वपुरीं भयविह्वलम् ॥५४॥

(क्रुद्धस्य गन्धर्वराजस्य स्वयं युद्धाय निर्गमनम्)

तच्छ्रुत्वा परमक्रुद्धः स्वयं वीणाविनोदनः ।
रथं महान्तमास्थाय निर्ययौ सह सैनिकैः ॥५५॥

(गन्धर्वराजश्रुतकीर्त्योरष्टदिनपर्यन्तं युद्धप्रवृत्तिः)

ततस्तयोरभूद्युद्धं वृत्रवासवयोरिव ।
परस्परं निजघ्नुस्ते सैनिका विविधैः शरैः ॥५६॥
तत्र संछन्नमाकाशं शरौघैरुभयोरपि ।
जयः पराजयो वा स्यान्न तत्र समितौ तयोः ॥
एवमष्टदिनान्यासीदेकरूपं भयंकरम् ।

(भूपतिना गन्धर्वराजस्य धनुरादिच्छेदो बलविद्रावणं च)

ततो गन्धर्वराजस्य धनुश्चिच्छेद भूपतिः ॥५८॥
ध्वजच्छत्रहयांश्चापि सायकैर्नतपर्वभिः ।
दिशः प्रस्थापयामास तदीयं सकलं बलम् ॥

(गन्धर्वराजस्य विषादः)

शस्त्रैरजय्यमालोच्य नृपं गन्धर्वराडपि ।

पराजितं तु स्वबलं मनुजैर्विषसाद ह ॥६०॥

(गन्धर्वराजेन मानुषबले गान्धर्वास्त्रप्रयोगः)

दिव्यास्त्रैः सूदयाम्येनमिति मत्वा महाद्युतिः ।
गान्धर्वमस्त्रं चिक्षेप स तस्मिन्मानुषे बले ॥६१॥

(तेन मानुषसैन्यविमोहनम्)

तेनैव मोहिता सर्वा श्रुतकीर्तिवरूथिनी ।
गान्धर्वास्त्रप्रभावेण तिष्ठत्येव च संयुगे ॥६२॥
सुदर्शनप्रभावेण दिव्यास्त्रं नाप तं नृपम् ।

(तत्प्रतीकाराशक्तस्य श्रुतकीर्तेः पुरोधसि स्ववृत्तनिवेदनम्)

श्रुतकीर्तिस्तदाऽस्त्रेषु दिव्येष्वनभियोगतः ॥६३॥
न शशाक प्रतीकर्तुं स्वपुरोधसमभ्ययात् ।
वृत्तं विज्ञापयामास नृपस्तस्मै पुरोधसे ॥६४॥

(पुरोधसा सुदर्शनशरणवरणोपदेशपूर्वकं निखिलास्त्रमन्त्रोपदेशनम्)

सोऽभ्यभाषत धर्मज्ञः[1] परमास्त्रविशारदः ।
श्रुतकीर्तेऽत्र मा भैषीस्तमेव शरणं व्रज ॥६५॥
प्रणतार्तिहरं देवं सुदर्शनवपुर्धरम् ।
दिव्यास्त्राणामशेषाणां प्रसूतिं[2] परमेश्वरम् ॥६६॥

---

1. सर्वज्ञः A B E F.
2. प्रसृतिं A B D.

एवंभूते महाचक्रे चतुःषष्ठ्यरसंयुते ।
नेमिद्वयान्विते देवं मध्ये ध्यायस्व[1] भूपते ॥६७॥
द्विषष्टिभुजमत्युग्रं संहारास्त्रधरं परम् ।
एवं ध्यात्वा च जस्वैतं मन्त्रं सेनां विलोकय ॥
इत्यस्त्रमन्त्रानखिलांस्तस्मा उपदिदेश सः ।

(तेन जातबलस्य श्रुतकीर्तेः पुनर्युद्धायागमनम्)

प्रतिगृह्याखिलान्मन्त्रान्प्रवर्तकनिवर्तकान् ॥६९॥
पुनरेत्य च संग्रामं स राजा समितिंजयः ।

(तेन स्वसैनिकमोहविमोचनम्)

ध्यात्वा[2] देवं जपन्मन्त्रं स्वसेनां समलोकयत् ॥
ततः संज्ञामवाप्यासौ प्रावर्तत महाहवे ।

(पुनर्युद्धे श्रुतकीर्तेर्विजयो गन्धर्वलोकवशीकरणं च)

पुनः प्रववृते युद्धं सेनयोरुभयोरपि ॥७१॥
दिव्यास्त्रैः समरे राजा जित्वा वीणाविनोदनम् ।
तल्लोकं स्ववशं चक्रे चक्रवर्ती बलान्वितः ॥७२॥

(ततः स्वपुरप्रत्यागमनम्)

सत्कृतः सिद्धगन्धर्वैः किंनरैश्चारणैरपि ।
भद्रशालां पुनः प्राप स्वपुरीं विजयश्रिया ॥७३॥

---

1. आत्मनेपदमार्षम्.
2. ध्यायन् A B E F.

समेयिवाञ्छशासोर्वीं दिवं सुरपतिर्यथा ।

(सुदर्शनप्रभावाद्विस्मितस्य पुनः पुरोधसा सह मन्त्रणप्रकारः)

सुदर्शनप्रभावस्य स्मृत्वा विस्मितमानसः ॥७४॥
पुरोधसमुपागम्य ज्वलन्तमिव पावकम् ।
मन्त्रयामास तेनैवं राजा राजीवलोचनः ॥७५॥

(स्वसंपदो भगवत्प्रसादहेतुकत्वकथनम्)

देवप्रसादाज्जगती ममेयं
समुद्रनेमिर्वशमागताऽद्य ।
लोकान्तरं चापि तथैव मन्ये
मयि प्रसादोन्मुख एव देवः ॥७६॥

(भगवत्प्रसादात्स्वस्य मोक्षलाभे संशयाभावकथनम्)

संसारभीतस्य ममापवर्गं
प्रदास्यते चक्रवपुर्धरोऽयम् ।
इत्यत्र शङ्का मम नास्ति काचि-
दतः परं देवमुपास्महे तु ॥७७॥

(राजानं प्रति पुरोधसा सुदर्शनप्रतिष्ठापनाद्युपदेशः)

इत्युक्तवन्तं नृपतिं पुरोधाः
कृताञ्जलिं प्राह महानुभावः ।

---

1. पुरम् (?) B.

विमानमध्यं बहुवर्णकूटं
विधाय चक्रोपपदं ससाध्यम् ॥७८॥
इह प्रतिष्ठाप्य सुचक्रमध्ये
द्विषष्टिबाहुं सनिवर्तकास्त्रम् ।
यथोक्तरूपं बहुभूषणाढ्यं
सुदर्शनं पूजय सर्वसिद्ध्यै ॥७९॥

(राज्ञा तथैवानुष्ठानम्)

इत्येवमुक्तः[1] प्रतिगृह्य मूर्ध्ना
स तस्य वाक्यं परमार्थयुक्तम् ।
अकारयत्कारयितव्यदक्ष-
स्तथैव तस्मिन्नगरे स राजा ॥८०॥

(तदर्थं राज्ञा द्विजानां वृत्तिप्रकल्पनम्)

शतं स विंशत्यधिकं द्विजांस्तु
समन्ततो देवनिकेतनात्सः ।
ततः प्रतिष्ठाप्य धनानि दत्वा
बहूनि बह्वीश्च भुवः स तेभ्यः ॥८१॥
विभूतिमन्तं च विधाय देवं
मुमोद राजा समवाप्तकामः ।

1. इत्येवमुक्तं E F.

(ततो भगवत्प्रसादाद्राज्ञः परमपुरुषार्थलाभः)

महालये तत्र समर्च्य देवं
दिनेदिने प्राप्तसमस्तकामः ।
ततोऽचिरेणैव विमुक्तसंगः
परं पदं प्राप च तत्प्रसादात् ॥८२॥

इति श्रीपाञ्चरात्रे तन्त्ररहस्ये अहिर्बुध्न्यसंहितायां

निवर्तकास्त्रप्रयोगावसरवर्णने काशीराज-श्रुतिकीर्त्युपाख्यानवर्णनं नाम

द्विचत्वारिंशोऽध्यायः ।

ओम् ।

(आदितः श्लोकाः २६७३)

ओम् ।

## अथ जगच्चक्रात्मकेन सुदर्शनेन शंकराय स्वस्वरूप-प्रदर्शनवर्णनं नाम त्रिचत्वारिंशोऽध्यायः ।

ध्यातं सकृद्भवानेककोट्यघौघं हरत्यरम् ।
सुदर्शनस्य तद्दिव्यं भर्गो देवस्य धीमहि ॥

(कृत्स्नस्य जगच्चक्रमयत्वकथंताप्रश्नः)

**श्रीनारदः ।**

पृच्छामि त्वां पुनरिदं शंस मे सकलेश्वर ।
प्रोक्तमेतत्पुरा सर्वं जगच्चक्रमयं त्वया ॥१॥
तत्कथं स्पष्टमाचक्ष्व कदा देवेन दर्शितम् ।
[1]वेत्ता त्वमेव नान्योऽस्ति त्वदृते भुवनत्रये ॥२॥

(अध्यायद्वयेन तदुत्तरकथनायाख्यायिकाकथने प्रथमं देवादीनां धर्ममार्गप्रवर्तकत्वनिरूपणम्)

**अहिर्बुध्न्यः ।**

सुराश्च मुनयः सर्वे मनुस्तत्सूनवस्तथा ।

1. वेत्थ D.

राजानः सर्ववर्णाश्च धर्ममार्गप्रवर्तकाः ॥३॥

(दानवादीनां धर्मविघातकत्वम्)

तथैव दानवाः सर्वे भूतवेतालराक्षसाः ।
क्रूरा नराश्च पशवो भीमरूपाश्च दस्यवः ॥४॥
तथैव चासुरीं प्राप्ता योनिमन्ये जना मुने ।
एते सर्वे सदा धर्मविध्वंसं कुर्वते भृशम् ॥५॥

(पापिनां विनाशोपायचिन्तयाऽहिर्बुध्न्यस्य मेरुशिखरगमनम्)

अतस्ते पापकर्माणः केन नश्येयुरित्यहम् ।
परां चिन्तामुपारूढो मेरुकूटमु[2]पागतः ॥६॥

(तत्र समाधिमास्थितस्य तस्य तेजोविशेषदर्शनम्)

तस्मिन्समाधिमास्थाय समासीनस्य मे क्षणात् ।
आविर्बभूव दुर्दर्शं महः परमभास्वरम् ॥७॥

(भीतिवशादाथर्वणमन्त्रोच्चारणपूर्वकं पुनस्तद्दर्शनम्)

ततस्तद्दर्शनान्मन्त्रमाथर्वणमुदैरयम् ।
तमुच्चरन्महामन्त्रमद्राक्षं तन्महः पुनः ॥८॥

(तेजोमध्ये सुदर्शनपुरुषसाक्षात्कारपूर्वकं कस्त्वमित्यादिप्रश्नः)

तस्मिन्विदीते महसि पुरुषं कृष्णपिङ्गलम् ।

---

1. धर्ममात्र° B E F.
2. °मुपागमम् D.

ऊर्ध्वरेतं विरूपाक्षं सहस्रादित्यसंनिभम् ॥९॥
सहस्रारसमायुक्तचक्रमध्यस्थितं परम् ।
ज्वालामालासुदुर्दर्शं सुदर्शनमनाकुलम् ॥१०॥
दृष्ट्वा कस्त्वं कुतः कस्येत्यपृच्छमकुतोभयम् ।

(प्रीतेन भगवता स्वस्वरूपख्यापनम् )

ततः प्रीतः स भगवानवदत्तेजसां निधिः ॥११॥
अहं सुदर्शनो नाम्ना [1]ख्यातोऽद्यप्रभृतीश्वर ।
दुरा[2]लोको महालोको यत्तवाहं सुदर्शनः ॥१२॥

( वैकुण्ठात्स्वागमनस्याहिर्बुध्न्यानुजिघृक्षाहेतुकत्वादिकथनम् )

वैकुण्ठधामनिलयस्त्वां द्रष्टुं समुपागतः ।
त्रिभावभावनायुक्तैरदृष्टचरमद्भुतम् ॥१३॥
नित्यमन्तर्हितं गुह्यं सर्वलोकनमस्कृतम् ।
प्रमथ्य [3]मतिमन्थानादुद्धृतं वेदसागरात् ॥१४॥
पीयूषमिव दुग्धाब्धेर्यत्त्वया परमेश्वर ।
अतो मन्त्रतनुः प्राप्तो भवन्तं किं करोमि ते ॥१५॥
अन्तरं नैव पश्यामि तव दामोदरस्य च ।
अतो यथाऽत्र वर्तेय तथैव त्वयि शंकर ॥१६॥

---

1. विख्यातोऽद्य प्रतीश्वरः (?) A B.
2. ॰लोके B E F.
3. मन्त्र॰ E F.

(ततोऽहिर्बुध्न्येन भगवति स्वाभिप्रेतनिवेदनम्)

इत्युक्त्वा विरते तस्मिन्सहस्रादित्यसंनिभे ।
ततोऽहं विस्मितोऽवोचं तमप्रतिमतेजसम् ॥१७॥
भूयांसो भुवने पापा धर्मव्यासेधकारिणः ।
तेषां निग्रहमाकाङ्क्षन्नुपायैर्नाशयाम्यहम् ॥१८॥
इति चिन्तापरे योगमास्थिते मयि मन्त्रराट् ।
त्वं चाविरासीस्तत्कार्यं निर्वृत्तमिति मे मतिः ॥

(दैत्यादिविनाशनप्रार्थना)

अतस्तैः पीड्यमानेषु साधुषु स्मृतिमात्रतः ।
आगन्तव्यं प्रयत्नेन साध्यं साधय च प्रभो ॥२०॥

(भगवता तथेत्युक्ते स्वस्य कैलासागमनम्)

तथेत्युक्त्वा गतः सोऽहमपि कैलासमन्वगाम् ।

(अत्रान्तरे जलन्धरवधार्थमिन्द्रस्य मन्त्रालोचना)

ततो जलन्धराख्येन दानवेन निपीडितः ॥२१॥
वासवो मन्त्रयाञ्चक्रे सह सर्वैर्मरुद्गणैः ।
शस्त्रैरस्त्रैरजय्यत्वं दानवस्य दुरात्मनः ॥२२॥
निरीक्ष्य केन तं पापं नाशयामीत्यचोदयत् ।

(तत्र वायुना स्वाभिप्रायविनिवेदनम्)

ततो वायुः समुत्थाय पुरन्दरमथाब्रवीत् ॥२३॥

सत्यमन्त्रैस्तथा शस्त्रैरजय्योऽयं महासुरः ।
धात्रा दत्तवरो दृप्तो बलवीर्यसमन्वितः ॥२४॥
दिधक्षति जगत्सर्वं धूमकेतुरिवोत्थितः ।
सर्वलोकेश्वरे श्रीमत्यप्रमेये महाद्युतौ ॥२५॥
देवदेवे महादेवे शंकरे भूतभावने ।
तस्मिन्नत्याहितं तेन नृशंसेन सुरारिणा ॥२६॥
तस्मिन्परमसंक्रुद्धो वर्तते तेन शंकरः ।
अतस्तमभिगच्छामो वधार्थं दुष्टचारिणः ॥२७॥
बृहस्पतिमुखेनैव तं देवं प्रार्थयामहे ।
स एव तत्र वक्तव्यं जानाति भगवानिति ॥२८॥

(वायुवचनमङ्गीकृत्य शंकरं गन्तुं शक्रेण बृहस्पतिप्रचोदनम्)

विरते पवने तस्मिन्बाढमित्याह वासवः ।
बृहस्पतिमथासीनं[1] ज्वलितानलसंनिभम् ॥२९॥
अभ्यगच्छन्महातेजा भगवान्पाकशासनः ।
जलंधरवधार्थं त्वमभिगच्छ पिनाकिनम् ॥३०॥
स तस्मिन्परमक्रुद्धो निहनिष्यत्यसंशयम् ।
सुरकार्येषु सर्वेषु भवानेव परायणम् ॥३१॥
अतोऽभिगम्यतां देवः कैलासे चन्द्रशेखरः ।

1. ॰मुपासीनं D.

(इन्द्रवचनाद्बृहस्पतेः कैलासगमनम्)

इत्युक्तवचने तस्मिन्पुरुहूते सुरेश्वरे ॥३२॥
तथेति तत्प्रतिश्रुत्य वाक्पतिः शक्रपूजितः ।
कैलासशिखरं प्रायात्प्रहृष्टेनान्तरात्मना ॥३३॥

(तत्र शंकरदर्शनम्)

तत्रासीनं सुरैः सार्धमास्थाने सुमनोहरे ।
मामप्सरःप्रयुक्ते तु नृत्ये विस्मितमानसम् ॥३४॥
सोऽपश्यदाराद्भगवानुद्यद्भास्करसंनिभः ।
प्रणिपत्य समुत्थाय मामस्तौषीत्स वाक्पतिः ॥

(जलंधरवधार्थं बृहस्पतिना शंकरस्तुतिः)

प्रसीद देवदेवेश प्रसीद जगतः पते ।
प्रसीद सर्वगीर्वाणपालनान्तकर प्रभो ॥३६॥
प्रसीद [1]भगवन्देव प्रसीद सुरवन्दित ।
प्रसीद विश्वविज्ञानवारिधे परमेश्वर ॥३७॥
नमस्ते व्योमनिलय [2]नमस्ते नागभूषण ।
नमः परमकल्याण नमस्त्रिपुरदारण ॥३८॥
त्वं धाता त्वं वषट्कारस्त्वं हविस्त्वं हुताशनः ।
सदसत्त्वं त्वमोंकारस्त्वमिन्द्रस्त्वं यमस्तथा ॥३९॥

---

1. भगवन्रुद्र E F.
2. नमो नागविभूषण D.

त्वं पाशपाणिस्त्वं सोमो निर्ऋतिस्त्वं मरुत्तथा ।
त्वमादित्यो वसुश्च त्वं त्वं विश्वं विश्वतोमुखे[1] ॥
त्वमव्यक्तं महांश्च त्वं त्वमहंकार एव च ।
भूतानि त्वं सुसूक्ष्माणि विद्याविद्ये तथा भवान् ॥
किमत्र बहुनोक्तेन [2]चराचरमिदं जगत् ।
त्वमेव भूतनाथेश सर्वकारणकारण ॥४२॥

क्षितिसलिलसमीरव्योमतेजःसहस्र-
द्युतिशशियजमानैः पूर्णदेहाय तुभ्यम् ।
परममुनिमनोभिर्मृग्यमाणाय नित्यं
भवभयविनिहन्त्रे विश्वमूर्ते नमस्ते ॥४३॥

इति श्रीपाञ्चरात्रे तन्त्ररहस्ये अहिर्बुध्न्यसंहितायां
जगच्चक्रात्मकेन सुदर्शनेन शंकराय स्वस्वरूपप्रदर्शनवर्णनं नाम
त्रिचत्वारिंशोऽध्यायः ।

ओम् ।

(आदितः श्लोकाः २७१६)

---

1. विश्वतोमुखम् A B D F.
2. परावरम् D.

ओम् ।

## अथ जगच्चक्रात्मकेन सुदर्शनेन बृहस्पतये स्वस्वरूप-प्रदर्शनवर्णनं नाम चतुश्चत्वारिंशोऽध्यायः ।

ध्यातं सकृद्भवानेककोट्यघौघं हरत्यरम् ।
सुदर्शनस्य तद्दिव्यं भर्गो देवस्य धीमहि ॥

(स्तुतिप्रीतेन शंकरेणागमनकारणप्रश्नः)

अहिर्बुध्न्यः ।

इति स्तुवन्तं कुशलमाभाष्येदमवादिषम् ।
किमागमनकार्यं ते वद वाचस्पते इति ॥१॥

(बृहस्पतिना शंकराय सुरकार्यनिवेदनम्)

इत्युक्तः सकलं प्राह समागमनकारणम् ।
शंभो कृपानिधे देव श्रूयतामिदमादरात् ॥२॥
सर्वलोकेषु सर्वेश तव सानुग्रहं मनः ।
अतस्त्रिदशकार्यार्थं त्वामहं शरणं गतः ॥३॥
जलंधर इति ख्यातो दानवो दुष्टचेष्टितः ।
अनिशं बाधते देवान्ब्रह्मदत्तवरो बली ॥४॥

अशक्तास्तद्वधे सर्वे सुराः सुरपतिस्तथा ।
मन्त्रयाञ्चक्रिरे सर्वे संभूयैतन्मरुद्गणाः ॥५॥
वरेण महता दृप्तो दुर्वारो रणमूर्धनि ।
महासुरो महादेवादृते नासौ विनश्यति ॥६॥
एवं संमन्त्र्य शक्रो मामवादीत्समरुद्गणः ।
महासुरवधोपायं भगवन्तं त्रिलोचनम् ॥७॥
अन्तरेण न पश्यामि [1]तं गच्छ शरणं शिवम् ।
सुरकार्यार्थमेतत्त्वं प्रार्थयेथाः पिनाकिनम् ॥८॥
इत्युक्तः पुरुहूतेन त्वत्सकाशमिहागतः ।
तद्यथैते सुराः सर्वे सुखिनो निरुपद्रवाः ॥९॥
भवेयुः पार्वतीनाथ तथैवाशु विधीयताम् ।

(शंकरेण जलंधरवधप्रतिज्ञा)

इत्युक्तोऽहं तदा तेन चिन्तारूढोऽभवं मुने ॥१०॥
तदेतदभिवीक्ष्याहमवोचं वचसांपतिम् ।
जलंधरमहं क्रूरं हनिष्ये पाप[2]कारिणम् ॥११॥

(स्वस्य दैत्यनिग्रहसामर्थ्ये सुदर्शनप्रसादस्य हेतुत्वख्यापनम्)

समाधिस्थस्य मे दृष्टः [3]सुदर्शनवपुर्धरः ।
मन्त्रो मन्त्रविदां श्रेष्ठ सर्वमन्त्रसमुद्भवः ॥१२॥

1. तद्गच्छ D.
2. ॰चारिणम् D.
3. सूक्ष्मः सौदर्शनः परः A B F.

[1]सर्वार्थसाधको नित्यः सर्वदुष्टभयंकरः ।
सर्वत्राणप्रवीणोऽयं चतुर्वर्गफलप्रदः ॥१३॥
स्वविद्यारक्षणरतः परविद्यानिवारणः ।
[2]आथर्वणोऽपि षट्कार्णः षट्कर्णश्रुत्यगोचरः ॥१४॥
अदृश्यं महसः [3]पुञ्जं दुर्निरीक्षं तदा मया ।
मन्त्रमुच्चरता तस्मिंश्चक्रवर्ति सुदर्शनम् ॥१५॥
दृष्टं तेनैवमुक्तं च प्रीतोऽहं मनुदर्शनात् ।
परमव्योमनिलयो भगवन्नित्यकिंकरः ॥१६॥
कार्यं तवांशेनागत्य करिष्ये मन्त्रतः स्मृतः ।
इत्युक्त्वाऽसौ गतो देवः सुदर्शनवपुर्धरः ॥१७॥
तेनैव तं दुरात्मानमपनेष्यामि मा चिरम् ।

(सौदर्शनविद्याग्रहणाय शंकरं प्रति बृहस्पतेः प्रार्थना)

इत्युक्तः परमप्रीतो बृहस्पतिरपि [4]त्वरन् ॥१८॥
प्रणम्य च पुनः प्राह यदि सानुग्रहो मयि ।
सौदर्शनीमिमां विद्यां देहि मे भगवन्निति ॥१९॥

(शंकरेण तस्मै तदुपदेशः)

ततोऽहं महते तस्मै विद्यां प्रादां महात्मने ।

---

1. सारार्थ° E F.

2. आथर्वणो द्विषट्कार्णषट्कर्णश्रुतिगोचरः (?) E F; अत्र पाठद्वयमपि चिन्त्यम्.

3. पुञ्जशब्दस्य नपुंसकत्वं चिन्त्यम्.

4. त्वरतेः परस्मैपदत्वं छन्दोनुरोधात्.

(लब्धविद्येन बृहस्पतिना हिमवत्तटे तत्पुरश्चरणम्)

तां लब्ध्वा परमप्रीतो जगाम हिमवद्गिरिम् ॥
तस्मिन्जजाप भगवान्मन्त्रमेतदनुत्तमम् ।

(ततस्तस्य सुदर्शनसाक्षात्कारः)

ततोऽस्य संनिधिं चक्रे परमाश्चर्यरूपधृत् ॥२१॥
चक्रवर्ती स भगवान्सौम्यरूपः सुदर्शनः ।

(अद्भुतरूपदर्शनाद्विस्मितेन बृहस्पतिना तस्य द्विभुजत्वकारणप्रश्नः)

तं दृष्ट्वा दीप्तवपुषं प्रसन्नं कुङ्कुमप्रभम् ॥२२॥
द्विभुजं सर्वभूतानामनुग्रहकरं परम् ।
शङ्खचक्रधरं देवं दिव्यमाल्यविभूषितम् ॥२३॥
पीतकौशेयवसनं नेत्रद्वयविराजितम् ।
आधारं सर्वशक्तीनामस्त्राणां च परंतपम् ॥२४॥
तं दृष्ट्वा विस्मयाविष्टः पप्रच्छ प्रणिपत्य सः ।
किमिदं भगवँल्लोके प्रथितोऽष्टभुजो भवान् ॥२५॥
मनुष्यरूपसंस्थानः प्रादुरासीः पुरो मम ।

(सुदर्शनेन भगवता तत्प्रतिवचनम्)

श्रूयतामित्युपामन्त्र्य प्रत्युवाच सुदर्शनः ॥२६॥

---

1. एवमेव सर्वत्र.

(अनन्तेषु सौदर्शनव्यूहेषु चतुर्णां प्राधान्यम्)

व्यूहाः सहस्रशः सन्ति मम तेष्वपि [1]तेजितम् ।
तेषां प्रधानतो व्यूहाश्चत्वारो मम वाक्पते ॥२७॥

(तेषां परिगणनम्)

द्विभुजं प्रथमं विद्धि ततोऽष्टभुजमेव माम् ।
ततः षोडशहस्तं तु मां द्विषष्टिभुजं ततः ॥२८॥

(व्यूहान्तराणामुपासकानुग्रहार्थत्वम्)

व्यूहान्तराण्यनेकानि तान्युपासककामतः ।

(व्यूहचतुष्टयस्य स्वाभाविकत्वं नित्यत्वं सात्त्विकत्वं च)

स्वाभाविकमिदं रूपं नित्यमत्यन्तसात्त्विकम् ॥२९॥

(तस्यैव षड्भावविकारराहित्यम्)

अपक्षयविनाशादिरहितं परमं [2]मम ।

(अन्येषामुपासकानुग्रहार्थत्वनिगमनम्)

अन्यान्यनुग्रहार्थानि मच्चित्तानामिति स्थितिः ॥

(स्वस्यात्यद्भुतरूपान्तरास्तित्वप्रतिपादनम्)

[3]अन्यद्विश्वमयं रूपमदृष्टं देवदानवैः ।

---

1. ते ततः (?) D ; अत्र पाठद्वयमपि चिन्त्यम्.
2. मतम् A B E F.
3. अद्य विश्वमयं (?) B E F.

अमीमांस्यममर्यादमचक्षुर्गोचरं स्वतः ॥३१॥
यथा देवो हृषीकेशस्तथाऽहमपि नारद[1] ।

(बृहस्पतिना तद्रूपदर्शनप्रार्थना)

इत्युक्तवन्तं तं देवं सुदर्शनवपुर्धरम् ॥३२॥
प्रणिपत्याब्रवीदेनं वाक्पतिर्वदतां वरः ।
यत्ते [2]विश्वमयं रूपमचाक्षुषमसीम ते[3] ॥३३॥
योगदृष्ट्या प्रपश्यामि तन्मे दर्शय सांप्रतम् ।

(प्रीतेन भगवता बृहस्पतये जगच्चक्रात्मकस्वस्वरूपप्रदर्शनम्)

भगवानपि विश्वात्मा स्वकीयं रूपमूर्जितम् ॥३४॥
दर्शयामास गुरवे योगारूढाय नारद ।
स विस्मितमना देवं वीक्षाञ्चक्रे पुरःस्थितम् ॥

(तद्रूपवर्णनम्)

विश्वोदराक्रान्तसुभीमदेह-
मपूर्वरूपं [4]करणादिदूरम् ।
समुद्यदूर्जस्करभृङ्गसङ्गि-
परःसहस्राद्भुतचक्र[5]मालम् ॥३६॥

---

1. अस्य च संबोधनस्योत्तरेणान्वयः.
2. विश्वमिदं D.
3. इत्थमेव सर्वत्र पाठः.
4. करुणादिरूपम् A B E F.
5. °माल्यम् A B E F.

पदावलम्बिस्फुरदण्डमाला-
विराजमानं [1]स्थितमात्मभूम्नि ।
युगान्तकालज्वलितार्कजाल-
रुचिप्रभोत्तुङ्गकिरीट[2]शोभम् ॥३७॥
महार्णवावर्तविघूर्णमान-
पिशङ्गनेत्रं सुरसंघजुष्टम् ।
विशुद्धदंष्ट्रान्तरलग्नलोकं
जगद्ग्रसन्तं भ्रुकुटीकरालम् ॥३८॥
शशाङ्कतारागणकीर्णविष्णु-
पदाभ[3]हाराङ्कितवक्षसं तम् ।
समुद्यदुज्जृम्भितदीप्तिमालं
महास्त्रजालं धृतसर्वशस्त्रम् ॥३९॥
तेजोमयं दीप्तिकणायमान-
युगान्तकालार्कशशाङ्कवह्निम् ।
स्वदेहसंपूर्णदिगन्तराल-
मलक्षितव्योममहीतलं च ॥४०॥

---

1. स्थिर° A B E F.
2. °वेहम् E.
3. °भाराङ्कित° E F.

(अदृष्टपूर्वरूपदर्शनाद्बृहस्पतेर्मोहाधिगमः)

झणज्झणत्कारितनूपुरादि-
विभूषणारावविकीर्णविभ्रम् ।
अदृष्टपूर्वं परमप्रमेयं
निरीक्ष्य चामूमुहदादिदेवम् ।

(लब्धसंज्ञेन तेन सुदर्शनस्तुतिः)

ततः स संज्ञां प्रतिलभ्य कृच्छ्रा-
त्तुष्टाव देवं धिषणो महात्मा ॥४१॥
ओं ! नमो नमस्ते भगवन्नजय्य
सुदर्शन ज्ञानमयस्वरूप ।
सदा स्फुटाशेष समस्तशक्ते
धृताखिलस्थावरजङ्गमाय ॥४२॥
अवार्यवीर्याय च भूरिधाम्ने
समस्तकल्याणगुणार्णवाय ।
विशुद्धतेजोमयमूर्तये ते
नमो नमश्चक्रवपुर्धराय ॥४३॥

---

1. रण॰ A B.
2. सोमं महदादि॰ D.
3. ॰अजेय D.
4. सहजशक्ते A B E F.
5. ॰स्थायिपरेशयाय (?) D.
6. अपारवीर्याय A B.

नमो जयायातुलविक्रमाय
समाश्रितत्राणनदीक्षिताय ।
सहस्रचक्राय सहस्रनाम्ने
नमः सहस्रारवपुर्धराय ॥४४॥
जगज्जनिंस्थितिहरणैकहेतवे
भवार्णवोत्तरणसुनाविकाय ते ।
मरुद्गणप्रतिभटदैत्यदानव-
प्रमाथिने निभृतसुतेजसे नमः ॥४५॥
मधुरिपुमनसो यथा यथा
प्रथमत एव मनीषितं विभो ।
तव पदसरसीरुहं यतो
जगति करोति मनीषितं तथा ॥४६॥
स्मृतिध्वस्ताशेषाश्रितजनमहापापनिचय-
प्रवाहागाधाब्धिप्लवचरणपङ्केरुहयुग ।
त्वदीयार्चिर्वारांनिधिकणकृतात्माङ्गदिनकृ-
च्छशाङ्कस्वाहेशस्तुतपरमधाम्ने नम इदम्॥
जगत्कालसंवर्तचक्रात्मने ते
चतुर्वक्त्रमुख्यामरेड्याय नित्यम् ।
नमो नित्यगोविन्दसेवारसाप्ता-
तुलानन्दसंदोहपूर्णात्मने स्तात् ॥४८॥

1. इदं च षष्ठ्यन्तं; आश्रितस्येत्यर्थकम् .

सकलसुराग्रमुख्यसततस्मृतनैकजनि-
प्रभृतिमहापदाननिकरश्रुतिहृष्टमनः ।
सकलसुरासुरेशमणिमौलिमरीचिघटा-
घटितपदारविन्दयुगलाय नमो भवते ॥
कलामुहूर्तनाडिकाद्युपाधिकालहीन ते ।
नमः क्षयर्द्धिजन्मनाशवर्जितात्ममूर्तये ॥५०॥
वन्दे वरेण्यमपि वाङ्मनसातिभूमि-
मस्पृष्टहेयगुणमाश्रितवत्सलं त्वाम् ।
अक्षीणपुण्यजनलभ्यमशेषवन्द्यं
विद्यामयं परमभौतिकदिव्यदेहम् ॥५१॥

(तद्रूपोपसंहरणप्रार्थना)

त्वां तत्त्वतो न विदुरीश जगत्यमुष्मि-
न्मर्त्येषु नैव विबुधेषु न चापरेषु ।
वेदाः परं विदुरतोऽप्युपसंहराद्य
रूपं भयावहमदृष्टचरं प्रसीद ॥५२॥

(ततः सुदर्शनेनाष्टभुजेन भूत्वा बृहस्पतिं प्रति स्वस्वरूपस्यातिगुह्यत्वकथनम्)

इत्युक्तस्तेन गुरुणा भगवांश्चक्ररूपधृत् ।
आविर्बभूव तस्याग्रे तदा ह्यष्टभुजः प्रभुः ॥५३॥
प्रसन्नवदनः श्रीमान्व्याजहार गुरुं तदा ।
तदेतद्दर्शितं रूपमदृष्टं देवदानवैः ॥५४॥

---

1. स तदाऽष्टभुजः D. 2. तवेदं दर्शितं D.

सत्यं मां न परो वेत्ति विना देवं जनार्दनम् ।

(स्वस्य भगवत्क्रियाशक्तिस्वरूपत्वनिरूपणम्)

गुह्यमेतत्क्रियाशक्तिरहं देवस्य शार्ङ्गिणः ॥५५॥
अतस्तत्कार्यमखिलं मयैव क्रियते मुने ।
जगज्जन्मादि सकलमित्युक्त्वाऽन्तरधीयत ॥५६॥

इति श्रीपाञ्चरात्रे तन्त्ररहस्ये अहिर्बुध्न्यसंहितायां

जगच्चक्रात्मकेन सुदर्शनेन बृहस्पतये स्वस्वरूपप्रदर्शनवर्णनं नाम

चतुश्चत्वारिंशोऽध्यायः ।

ओम् ।

(आदितः श्लोकाः २७७२)

---

ओम् ।

## अथ सुदर्शनप्रभावेण प्रारब्धकर्मणामपि नाश्यत्वं वक्तुं कुशध्वजोपाख्यानवर्णनं नाम पञ्चचत्वारिंशोऽध्यायः ।

ध्यातं सकृद्भवानेककोट्यघौघं हरत्यरम् ।
सुदर्शनस्य तद्दिव्यं भर्गो देवस्य धीमहि ॥

(अध्यात्मविद्या-ऽविद्या-परविद्यानां साध्य-निवर्त्य-विषयकः प्रश्नः)

**श्रीनारदः ।**

भगवन्निदमाख्यातं पुरस्तात्परमेश्वर ।
अध्यात्मविद्याऽविद्या च परविद्या स्वरूपतः ॥१॥
ताभिः किं साध्यते देव ताभिः किं वा निवर्त्यते[1] ।
त्वमेवैतद्विजानासि तन्ममाचक्ष्व विस्तरम् ॥२॥

(तत्र प्रथममविद्याया हेयत्वज्ञापनायाविद्यासाध्यनिवर्त्ययोर्निरूपणम्)

**अहिर्बुध्न्यः ।**

परमं गुह्यमेतत्ते कथयामि यथा शृणु ।

---

1. निर्वर्तते (?) D.

अविद्यया परं रूपं जीवात्मपरमात्मनोः ॥३॥
संछाद्यते तयोस्तत्त्ववेदनं तु निवर्त्यते ।

(अथ कैवल्यस्य नित्यत्वज्ञापनायाध्यात्मविद्यासाध्य-निवर्त्य-निरूपणम्)

अध्यात्मयोगाधिगमात्परं ज्ञानं प्रजायते ॥४॥
निवर्त्यते तथाऽनादिः संसारो बन्धनात्मकः ।

(अथ परविद्याया उपादेयतमत्वज्ञापनाय तत्साध्यनिरूपणम्)

परस्वरूपविज्ञानादपुनर्भवलक्षणा ॥५॥
साध्यते परमा मुक्तिः सदानन्दफलाऽनघ ।

(प्रारब्धेतरपूर्वोत्तराघानां तन्निवर्त्यत्वनिरूपणम्)

अनादिकालसिद्धानि प्राक्तनान्यमुना मुने ॥६॥
भविष्याणि च कर्माणि निरस्यन्ते सवासनम् ।

(प्रारब्धकर्मणां भोगैकनाश्यत्वम्)

न विनश्यति भोगेन विना प्रारब्धकर्म यत् ॥७॥
एतत्सर्वं समासेन भवतः कथितं मया ।

(प्रारब्धकर्मविनाशककर्मविशेषसदसद्भावप्रश्नः)

श्रीनारदः ।

प्रारब्धकर्म भगवन्नाश्यते केन कर्मणा ॥८॥
न विनश्यति वा किंस्विदेतत्केनापि कर्मणा ।

---

1. विद्यया परमं रूपं (?) D.

(तत्प्रतिविवक्षया कुशध्वजेतिहासोदाहरणम्)

अहिर्बुध्न्यः ।

त्रेतायुगे पुरावृत्तमितिहासमिमं शृणु ॥९॥

आसीत्कुशध्वजो नाम जनकेषु महीपतिः ।

ब्रह्मवित्परमोदारः प्रजापालनतत्परः ॥१०॥

(तस्यापि प्रारब्धकर्मफलतया महामोहेन भृशं पीडा)

तस्य भूमण्डलं सर्वं शासतः पृथिवीपतेः ।

एकदा तु महामोहः प्रादुरासाङ्गतापनः ॥११॥

कल्पान्तरं भृशं तेन पीडितोऽपि महीपतिः ।

यास्यतीति स्वयं नैनं व्यजीगणदमित्रहा ॥१२॥

(तत्रोदासीनस्यापि तस्य मुहुर्मुहुः पीडातिशयः)

पुनश्च पीडितस्तेन वारंवारं विशांपतिः ।

(नितरां पीडितस्य तस्य चिन्ताप्रकारः)

अचिन्तयत्तदा चेत्थमयमाकस्मिको बली ॥१३॥

मुहुरध्यात्मनिरतं बाधते मामनाथवत् ।

न शाम्यति स्वयं केन कारणेनैतदागतम् ॥१४॥

(ततः कृतनिश्चयस्य तस्य स्वकुलगुरुयाज्ञवल्क्याभिगमनम्)

इति चिन्तापरो राजा जगाम गुरुमन्दिरम् ।

ब्रह्मघोषयुतं पुण्यं हविर्धूमाधिवासितम् ॥१५॥
प्रविश्यान्तः समासीनमभ्यगारे तपोनिधिम् ।
ब्रह्मविद्भिः परिवृतं विवस्वन्तमिवापरम् ॥१६॥
याज्ञवल्क्यं कुलगुरुं ददर्श विनयान्वितः ।

(प्रणामपूर्वं तत्र स्ववृत्तनिवेदनम्)

तं प्रणम्य महात्मानमिदं वचनमब्रवीत् ॥१७॥
त्वत्त एव मया विद्या परा प्राप्ता तथाऽपरा ।
परविद्यानलेनैव दग्धं कर्माखिलं मम ॥१८॥
पूर्वापरं, विना कर्म प्रारब्धमिति च श्रुतम् ।
राज्यलाभः फलं प्राप्तं प्रारब्धस्य तु कर्मणः ॥
इति मे वर्तमानस्य दुःसहः स्मृतिभञ्जनः[2] ।
प्रावर्तत महामोहो मद्गात्रपरितापनः ॥२०॥
केनैतदागतं कष्टं केन वा शंस शाम्यति ।

(याज्ञवल्क्यस्य प्रतिवचनम्)

तेनैवमुक्तो भगवान्व्याजहार कुशध्वजम् ॥२१॥

(शरीरसृष्टेः फलभोगार्थत्वम्)

सुखदुःखोपभोगाय देहिनां देहकल्पनम् ।

(ब्रह्मविच्छरीरस्यापि तथात्वम्)

अपि ब्रह्मविदां देहास्तथैवेत्यवधारय ॥२२॥

---

1. हविर्धूपा° B E F.
2. °भञ्जकः D.

तत्तवापि शरीरेण भोक्तव्यं कर्मणः फलम् ।
क्रियन्ते यानि कर्माणि शरीरेण तवापि तु ॥२३॥
तेषां फलानि भुज्यन्ते केवलं न कदाचन ।

(महामोहस्य पापफलत्वम्)

अतः पापफलं विद्धि प्राप्तमेतन्महीपते[1] ॥२४॥

(तत्कारणभूतपापनिरूपणप्रतिज्ञा)

शृणु येनागतो मोहस्तत्त्वतः[2] कथयाम्यहम् ।

(उन्मादादयोऽष्टौ दोषा महापापजन्याः)

उन्मादश्च महोन्मादश्चित्ताक्षेपश्च मूर्छना ॥२५॥
संज्ञान्तकारी विक्षोभः प्रलापी स्मृतिभञ्जकः ।
अष्टौ दोषा महापापैर्जायन्ते प्राणिहिंसकाः ॥२६॥

(राज्ञामुन्मादादिदोषोत्पत्तिकारणनिरूपणम्)

ब्रह्मघ्नादण्डनविधेरसत्ये सत्यतामतेः ।
स्वाराध्यदेवताबिम्बोपेक्षणान्नृपतेर्वधात् ॥२७॥
ब्रह्मदेयापहारेण ब्राह्मणातङ्कनिर्मितेः ।
मर्यादाभङ्गकरणादगम्यागमनादपि ॥२८॥
एतैर्नृपाणां जायन्ते दोषास्ते कारणैर्नृप ।

---

1. प्राप्तमेनं A.
2. तव तत्कथयाम्यहम् D.

(युद्धादन्यत्र राजवधात्कुशध्वजस्य महामोहप्राप्तिकथनम्)

अयुद्धे न्यवधीः पूर्वं महाराजं सुधार्मिकम् ॥२९॥
एतद्देहोपभोग्येन पापेनानेन भूपते ।
प्राप्तेयं मूर्छना पापा भवन्तं भयदायिनी ॥३०॥

(सुदर्शनमहिम्नाऽष्टानामपि दोषाणां निश्चयेन नाश्यत्वम्)

सौदर्शनप्रभावेण दोषाश्चाष्टविधा अमी ।
विनश्यन्ति न संदेहस्तेन तच्च प्रणश्यति ॥३१॥

(सुदर्शनप्रसादसंपादनयत्नोपदेशः)

अतस्तत्साधने यत्नं कुरुष्वाङ्गाविचारयन्[1] ।

(तत्र प्रथमं मण्डपादिनिर्माणम्)

प्रथमं मण्डपं तुङ्गं सर्वमङ्गलसंयुतम् ॥३२॥

(मण्डपलक्षणम्)

बहुस्तम्भसमाकीर्णं तुङ्गतोरणमण्डितम् ।
शुक्लक्षौमवितानाढ्यं किङ्किणीजालभूषितम् ॥
बहुध्वजसमाकीर्णं पताकाभिरलंकृतम् ।
मुक्तादामसमाकीर्णं बहुमाल्यपरिष्कृतम् ॥३४॥
क्षौमाभिवेष्टितस्तम्भं दीपिकासमलंकृतम् ।
षट्त्रिंशत्पदविस्तारं चतुःपञ्चाशता पदैः ॥३५॥

---

1. ०ङ्ग विचारयन् इति सर्वत्र.

आयामैः संमितं रम्यं मङ्गलाष्टकसंयुतम् ।
चन्दनागरुधूपेन वासितं विश्वतः शिवम् ॥३६॥

(सरस्वतीतीरे उक्तलक्षणमण्डपनिर्माणविधिः)

एवमेव सरस्वत्यास्तटे शुद्धे पुराद्बहिः ।
शीघ्रं कारय [1]कल्याण मा भैषीर्मा [2]विचारय ॥

(तत्रैव स्वागमनप्रतिज्ञा)

तत्रैव चागमिष्यामि करिष्ये कर्म शान्तिकम् ।

(यथोपदेशं राज्ञोऽनुष्ठानम्)

एवमुक्तवति प्राज्ञे गुरौ राजा विनिर्ययौ ॥३८॥
ततः स परमप्रीतः समाहूय च किंकरान् ।
यथोक्तलक्षणं तत्र मण्डपं समकारयत् ॥३९॥

(शुक्लपक्षे याज्ञवल्क्यस्य तन्मण्डपगमनम्)

स्वप्रभावेण तद्दोषं शक्तः शमयितुं मुनिः ।
तथाऽपि राजधर्मोऽयमिति बुद्ध्या विचिन्त्य सः ॥
जगाम मण्डपं तत्र शुक्लपक्षे शुभे दिने ।

(त्रिधा विभक्तस्य मण्डपस्य पश्चिमभागे राजासनकल्पनम्)

शिल्पिनः स समाहूय राजासनमकल्पयत् ॥४१॥

---

1. कल्याणं इति सर्वत्र.
2. विचारणा इति सर्वत्र.

अस्य पश्चिमदिग्भागे तृतीये समलंकृते ।

(प्राग्भागद्वयमध्ये होमकुण्डकल्पनम्)

प्राग्भागद्वयमध्येऽस्य होमकुण्डान्यकारयत् ॥४३॥
विमानलक्षणोपेतवेदिकास्थलमूर्धसु ।
चक्राकृतीनि कुण्डानि कल्पयामास सादरम् ॥

(मध्ये अष्टदिक्षु च कुण्डकल्पना)

तादृशं कुण्डयुग्मं तु मध्ये कृत्वा ततो बहिः ।
अष्टासु दिक्षु कुण्डानि तथैव समकारयत् ॥४४॥

(प्रतिकुण्डमेकैकस्य, मध्ये द्वयोश्च कुम्भयोः स्थापनम्)

प्रतिकुण्डं परिस्तीर्य कलमान्भारसंमितान् ।
स्थापयामास कुण्डानां पूर्वपार्श्वेषु सर्वतः ॥४५॥
कुम्भानि[1] राजतान्यष्टौ सौवर्णे मध्यमे उभे ।

(सरत्नगन्धतोयेन कुम्भपूरणम्)

गन्धतोयेन पूर्णानि नवरत्नयुतानि च ॥४६॥

(याज्ञवल्क्येन स्वयं कुम्भार्चनम्)

ततः स्वयं मुनिः सार्धं शतानन्देन धीमता ।
क्षौमैस्तन्तुभिरावेष्ट्य गन्धपुष्पैस्तथाऽक्षतैः ॥४७॥
अलंकृत्य च[2] कुम्भेषु देवमावाह्य सादरम् ।

---

1. कुम्भशब्दस्य क्लीबत्वं चिन्त्यम्.
2. जलैः पुष्पैर्देव° A B E F.

अर्चयामास मन्त्रेण धूपदीपप्रसूनकैः ॥४८॥

(यन्त्रप्रतिष्ठा-तद्विलेखनादि)

महायन्त्रं प्रतिष्ठाप्य मध्येकुम्भद्वयं गुरुः ।
देवं विना महायन्त्रं सर्वमन्त्रसमन्वितम् ॥४९॥
पटे विलिख्य पूर्वोक्तं सर्वदिव्यास्त्रसंयुतम् ।
राजासने विकीर्यैतत्ततस्तत्सोत्तरच्छदम् ॥५०॥
आरोपयामास तदा राजानममितौजसम् ।
स यन्त्रपटसंयुक्तं वितानं तस्य चाकरोत् ॥५१॥
निर्माय च सुवर्णेन मणिजालपरिष्कृतम् ।
यथोक्तलक्षणं यन्त्रं दर्पणे च [1]न्यवेशयत् ॥५२॥
तथैव गोरोचनया भूर्जपत्रे [2]सुसंस्कृते ।
सुवर्णसूच्या संलिख्य [3]यन्त्रं दिव्यास्त्रवर्जितम् ॥
शिरस्यधारयद्राज्ञो यन्त्रमेतत्सुमन्त्रितम् ।
सौदर्शनेन तिलकं भस्मना चाप्यकारयत् ॥५४॥
ततश्चाष्टौ समाहूय ऋत्विजो मन्त्रनिष्ठितान् ।
संयतान्वैष्णवान्विप्रान्दिशाकुण्डेष्वयोजयत् ॥

---

1. न्यवेदयत् D.
2. सुसत्कृते A B E F.
3. मन्त्रं D.

ततो यवनिकां कृत्वा मण्डपस्य समन्ततः ।
अलंकृतेषु कुण्डेषु सौवर्णैश्च परिच्छदैः ॥५६॥
[1]विधाय विहितं पूर्वमृत्विग्भिः सहितो गुरुः ।
शतानन्देन सहितो जुहाव ज्वलितेषु सः ॥५७॥
नृत्तवादित्रसंयुक्तं ब्रह्मघोषसमायुतम् ।
पुण्याहं पूर्वमकरोद्धोमकर्म समाहितः ॥५८॥
प्रधानकर्मणो [2]युक्तौ शतानन्दो गुरुस्तथा ।
दिशाहोमेषु संयुक्ता ऋत्विजः सर्व एव ते ॥५९॥
आज्यैर्विशुद्धैर्नियुतं होमान्संकल्प्य सादरम् ।
अकरोद्युतं नित्यमेवं दशदिनं कृतम् ॥६०॥
गुरुणाऽनुदिनं स्नातो मन्त्रितैः कुम्भवारिभिः ।
मुक्तग्रहो विशुद्धात्मा विज्वरः प्रीतमानसः ॥६१॥
पूर्णे दशदिने राजा रत्नैर्बहुसुवर्णकैः ।
आराधयामास गुरुं मण्डपं सपरिच्छदम् ॥६२॥
निवेद्य गुरवे सर्वानृत्विजः समतर्पयत् ।
धनैश्च बहुभिर्धान्यैः प्रतिष्ठाभिः समाहितः ॥६३॥
प्रशशास महीमेनां दिवि देवेन्द्रवत्[3]सुधीः ।

---

1. वितानसहितां भूमिमृत्विग्भिः A B E F.
2. आयुक्तावित्यर्थः.
3. सुखी A B E F.

अन्येषामपि भूतानामयमेव विधिः स्मृतः ॥६४॥
पञ्चाशन्नियुतैर्होमैर्द्वापरे स विधीयते ।
कलौ च कोटिहोमेन विधिरेष महीक्षिताम् ।
प्रारब्धमेवं भोक्तव्यं कर्म ब्रह्मविदामपि ॥६५॥

इति श्रीपाञ्चरात्रे तन्त्ररहस्ये अहिर्बुध्न्यसंहितायां

सुदर्शनप्रभावेण प्रारब्धकर्मणामपि नाश्यत्वं वक्तुं कुशध्वजोपाख्यानवर्णनं

नाम पञ्चचत्वारिंशोऽध्यायः ।

ओम् ।

(आदितः श्लोकाः २८३७)

---

1. भूपानाम् D.

ओम् ।

## अथ सुदर्शनहोमाङ्गद्रव्यादीनां परिमाणादिनिरूपणं नाम षट्चत्वारिंशोऽध्यायः ।

ध्यातं सकृद्भवानेककोट्यघौघं हरत्यरम् ।
सुदर्शनस्य तद्दिव्यं भर्गो देवस्य धीमहि ॥

(तत्र राज्ञो होममण्डपानागमन इतिकर्तव्यताप्रश्नः)

श्रीनारदः ।

दैवाद्वा मानुषाद्वाऽपि भूतादिभिरथापि वा ।
दर्पात्प्रतिबलाद्वाऽन्यैरन्तरायैर्महीपतिः ॥१॥
यदि न प्राप्नुयादेव होममण्डपमादितः ।
ततः कथं महीभर्तुर्निवर्त्यन्ते महाग्रहाः ॥२॥

(तदा पुरोधसो राजप्रतिनिधित्वकथनम्)

अहिर्बुध्न्यः ।

शृणु राजा न चेत्कुर्यात्पुरोधाः कुरुतात्कृती ।
स एव राज्ञः सर्वस्वमदृष्टार्थोपपादने ॥३॥

(पुरोहितलक्षणम्)

धार्मिकः श्रुतिसंपन्नः सुशीलः सत्यवाक्छुचिः ।
अभिजातोऽनहंकारस्तितिक्षुः स्मृतिमान्वशी ॥
देशकालविभागज्ञः शास्त्रदृष्टिरतन्द्रितः ।
अप्रधृष्योऽप्रमादी च वदान्यो नयकोविदः ॥५॥
उपायोपेयविन्मन्त्री यायजूको ह्यलोलुपः ।
दैववित्प्रियवादी च वैदिकः सत्त्ववान्प्रभुः ॥६॥
विष्णुभक्तस्तपस्वी च कार्यवित्कर्मठोऽनघः ।
हिताहितावितिहानेच्छुर्नृपाणां सर्वसंमतः ॥७॥

(उक्तलक्षणस्य पुरोधस एव सर्वकार्यक्षमत्वम्)

ईदृशो दुर्लभो राज्ञां गुरुकल्पः पुरोहितः ।
ईदृशो हि क्षमो राज्ञामघौघविनिवारणे[1] ॥८॥
अतः स एव राज्ञां हि रक्षाविधिमथार्हति ।

(उक्तलक्षणपुरोहितसद्भावे राज्ञः सर्वाभीप्सितसिद्धिः)

एवंविधो गुरुर्यस्य स सम्राण्नृपतिर्भवेत् ॥९॥
दीर्घायुर्निःसपत्नः स्यादरोगः परवीरहा ।
अवग्रहाद्या जायन्ते पीडास्तद्विषये न हि ॥१०॥

(तादृशपुरोहिताभावे राज्ञोऽनिष्टप्रतिलम्भकथनम्)

तं विनाऽन्यो भवेद्राज्ञो गुरुर्वाथ पुरोहितः ।

---

1. °मघौघस्य नि° A B E F.

विपरीतं भवेत्तस्य महीभर्तुर्न संशयः ॥११॥

(कुम्भादीनां परिमाणादिप्रश्नः)

श्रीनारदः ।

परिमाणं च कुम्भानां स्रुक्स्रुवाणां च लक्षणम् ।
ऋत्विजः कीदृशो ह्यस्य प्रकारश्चाखिलं वद ॥१२॥

(उत्तमकुम्भपरिमाणम्)

अहिर्बुध्न्यः ।

शुद्धैर्गन्धोदकैर्भारपरिमाणैः सुपूरितान् ।
सौवर्णराजतान्कुम्भान्कारयेदिदमुत्तमम् ॥१३॥

(मध्यमकुम्भपरिमाणम्)

अर्धभारभृतान्कुम्भान्मध्यमोऽयं विधिः स्मृतः ।

(अधमकुम्भपरिमाणम्)

तदर्धेनाधमे पक्षे पूरयेदेष निर्णयः ॥१४॥

(यथाविधि स्रुगादिनिर्माणम्)

यथाविधि विधेयौ तु स्रुक्स्रुवौ मुनिसत्तम ।

(ऋत्विक्संख्या)

ऋत्विजः सात्त्विकानष्टौ वृणुयाद्वैष्णवांस्ततः ॥१५॥

---

1. कीदृशोऽन्यस्य D.
2. शुद्धै° A B E F.
3. °भार° D.

(अङ्गमन्त्रादिविधिः)

अङ्गमन्त्रैश्च गायत्र्या वह्निप्राकारकेण च ।
प्रधानकुण्डयोश्चापि गुरुकल्पौ समाहितौ ॥१६॥
शृणुयान्मूलमन्त्रेण सर्वे [1]रक्षामनो रताः ।
शमीसमिद्भिर्दूर्वाभिस्तिलैराम्रदलैस्तथा ॥१७॥
चरुणा पायसापूपैः पालाशैर्जुहुयात्क्रमात् ।
शुद्धेन सर्पिषा मध्यकुण्डयोर्हावयेद्गुरुः ॥१८॥
अथवा सर्वकुण्डेषु शुद्धेनाज्येन [2]हावयेत् ।
गुरुणैवाभिनिर्वर्त्ये प्रतीकारविधाविह ॥१९॥
शयनासनयानादौ राज्ञः स्वैरविधावपि ।
पूर्वोक्तेन विधानेन वितानादिकमाचरेत् ॥२०॥

(होमान्ते राज्ञोऽभिषेकः)

होमावसानसमये प्रयोगेऽप्यत्र तद्गुरुः ।
तत्र राजानमाहूय पूर्ववन्मन्त्रितासने ॥२१॥
स्थापयित्वाऽभिषेकादिसंस्कारं गुरुराचरेत् ।

(गुर्वादिप्रीणनम्)

ततः स्वस्थमनाः सद्यो विमुक्तग्रहबन्धनः ॥२२॥

---

1. रक्षामनो° (?) D.
2. भावयेत् D.

यथार्हं गुरवे दद्यात्स्वचिह्नानि प्रणम्य च ।
भूषणानि महार्हाणि मुक्तामणिमयानि च ॥२३॥
मणिपीठसुवर्णानि रत्नानि विविधानि च ।
भुवश्च भूयसीर्दत्वा ऋत्विजस्तर्पयेत्ततः ॥२४॥
एकैकमृत्विजः सर्वे शतेनार्च्याः सुवर्णकैः ।
प्रत्येकं दशभिर्गोभिर्वासोभिर्विविधैरपि ॥२५॥

(प्रधानहोमकर्त्रे विशेषतो दक्षिणादानम्)

प्रधानहोमकर्त्रे तु देशिकाय विशेषतः ।
दद्याद्बहुधनं पूर्णमेकमश्वं सवाहनम् ॥२६॥
अलंकारेण सहितं मण्डपं सपरिच्छदम् ।

(ततो ब्राह्मणतर्पणम्)

ब्राह्मणानां ततस्तृप्तिं कुर्यात्प्रीतमना नृपः ॥२७॥
राज्ञा स्वेनाभिनिर्वृत्ते कर्मण्यस्मिन्यथोदिते[1] ।
प्रयोगे[2] देशिकायैव दद्यान्मन्त्रविदे वसु ॥२८॥
पुरोधसा कृतं सर्वमेष धर्मः सनातनः ।
राजोदाहरणे तावत्सविशेषमितीरितम्[3] ॥२९॥

---

1. यथोदितम् B E F.
2. "प्रयोगदेशिकायैव" इति सर्वत्र.
3. °मुदीरितम् इति सर्वत्र.

अन्येषामपि सर्वेषामेष एव विधिः स्मृतः ।
पूर्णाहुतिं ततः कुर्याद्वैष्णव्यर्चा समाहितः ।
राज्ञोऽभ्युदयमाकाङ्क्षन्देशिको मन्त्रवित्तमः ॥३०॥

इति श्रीपाञ्चरात्रे तन्त्ररहस्ये अहिर्बुध्न्यसंहितायां

सुदर्शनहोमाङ्गद्रव्यादीनां परिमाणादिनिरूपणं नाम षट्चत्वारिंशोऽध्यायः ।

ओम् ।

(आदितः श्लोकाः २८६७)

---

1. एवमेव विधिक्रमः D.

ओम् ।

## अथ महाशान्तिविधानं नाम सप्तचत्वारिंशोऽध्यायः ।

ध्यातं सकृद्भवानेककोट्यघौघं हरत्यरम् ।
सुदर्शनस्य तद्दिव्यं भर्गो देवस्य धीमहि ॥

(ऐहिकामुष्मिकसर्वफलसाधकैकोपायप्रश्नः)

**श्रीनारदः ।**

भगवन्पञ्चमन्त्राङ्ग पशुपाशहर प्रभो ।
स्वतः साक्षात्कृताशेषविशेष व्योममन्दिर ॥१॥
ऐहिकामुष्मिकं शश्वन्मन्त्रेणानेन लभ्यते ।
उभयेऽपि तथा दोषा नाश्यन्ते नात्र संशयः ॥२॥
इत्युक्तं तेन पृच्छामि येनैकेनैव कर्मणा ।
उभयी सिद्धिरुभयानिष्टनाशो भवेत्तथा ॥३॥
ईदृशं कर्म चेदस्ति तन्मे कथय शंकर ।
[1]ईदृग्ग्रहस्य त्वत्तोऽन्यो न कश्चिद्वक्तुमर्हति ॥४॥

---

1. ईदृग्ग्रहस्य ईदृक्प्रश्नस्येत्यर्थः.

(तदुत्तरकथनारम्भः)

अहिर्बुध्न्यः ।

तदेतत्कथयिष्यामि सर्वशान्तिकरं परम् ।

(वक्ष्यमाणे कर्मविशेषे राज्ञामधिकारः)

महाराजैर्महाभागैः प्रयोज्यं व्यस्तजातिभिः ॥५॥

(तस्य निखिलदुःखनिवर्तनपूर्वकमीप्सितफलसाधनत्वम्)

आध्यात्मिकादिदुःखानां त्रयाणामपि नाशनम् ।
आधीनां चाप्यशेषाणां नाशनं शुभलक्षणम् ॥
सर्वारिनाशनं शान्तं महाविजयकारणम् ।
रक्षोहणं पुष्टिकरं सर्ववश्यकरं मुने ॥७॥
परमायुःप्रदं पुण्यं पूर्वैर्नृपतिभिः कृतम् ।

(अम्बरीषप्रभृतीनामेतदनुष्ठानाद्यथोक्तफललाभः)

अम्बरीषः शुकोऽलर्को मांधाता च पुरूरवाः ॥८॥
राजोपरिचरो धुन्धुः शिबिश्च श्रुतकीर्तनः ।
कृत्वैतच्चक्रवर्तित्वं पुरा प्रापुरमी नृपाः ॥९॥
निरामया निःसपत्ना विस्तीर्णामलकीर्तयः ।

(तत्र राज्ञामधिकारनिगमनम्)

अतो मानुषमानन्दं काङ्क्षन्तो भुवि भूभुजः ॥१०॥

---

1. श्रुति° E F.

कुर्युरेतन्महाशान्तिलक्षणं कर्म सादरम् ।

(तत्र देशविशेषविधिः)

पुराद्बहिर्महानद्यास्तटे देवालयेऽथवा ॥११॥
असंबाधे शिवे देशे विविक्ते सजलाशये ।
पूर्वोक्तलक्षणयुतान्मण्डपादधिकं मुने ॥१२॥
कुर्यादायामविस्तारौ तथा राजासनान्वितम् ।
तत्तत्समन्ततः कुर्याद्देवंलक्षणमुत्तमम् ॥१३॥

(तत्र मण्डपनिर्माणक्रमः)

बहुस्तम्भसमाकीर्णं मणिकाञ्चनमण्डितम् ।
तुङ्गतोरणसंयुक्तं दीपिकाशतशोभितम् ॥१४॥
किङ्किणीजालसंयुक्तं पताकाभिरलंकृतम् ।
सवितानं ससोपानं सर्वालंकारसंयुतम् ॥१५॥
चन्दनागुरुकर्पूरधूपमालाधिवासितम् ।
तुङ्गसालसमायुक्तं होमशालाभिवेष्टितम् ॥१६॥

(तत्र कुण्डकल्पनाक्रमः)

एवं मनोज्ञं कृत्वैतत्तत्र कुण्डानि कल्पयेत् ।
प्राग्भागे मण्डपस्यास्य चतुर्दिक्षु प्रकल्पयेत् ॥
चतुर्व्यूहाभियोगार्थं चतुरश्राणि कारयेत् ।
प्राच्याद्यान्यथ कुण्डानि केशवादीनथो यजेत् ॥

1. कृत्वैतत्तत्कुण्डानि कारयेत् A B; तत्र कुण्डानि कारयेत् E F.

चतुर्णां केशवादीनां विकोणेषु प्रकल्पयेत् ।
कुण्डानि शेषमूर्तीनां तच्छिद्रेषु यथाक्रमम् ॥१९॥
त्र्यश्रं षडश्रम[1]र्धेन्दुं योनिं पद्माकृतिं क्रमात् ।
वृत्तं पद्माभमष्टाश्रं वज्राकृति धनुःप्रभम् ॥२०॥
शूलाभं शूर्पकल्पं च कुण्डान्येतानि कारयेत् ।
[2]मध्ये देवं प्रतिष्ठाप्य यन्त्ररूपधरं प्रभुम् ॥२१॥
विमानलक्षणोपेतं कुण्डं कुर्यात्तदग्रतः ।

(अस्त्रकुण्डकल्पना)

समन्ताद्धोमशालाया[3]मस्त्रकुण्डान्यनुक्रमात् ॥२२॥
शतं तथाऽधिकं कुर्याच्चत्वारिंशदतन्द्रितः ।
यथार्हमस्त्रलिङ्गानि मण्डितान्यथ कारयेत् ॥२३॥

(षोडशर्त्विग्वरणम्)

अन्तर्मण्डपकुण्डेषु ऋत्विजः षोडश क्रमात् ।
ऋग्भिः पुरुषसूक्ता[4]भिर्वृणुयाद्वैष्णवान्सतः ॥२४॥

(अस्त्रकुण्डेषु ऋत्विगन्तरवरणम्)

ततः स्वनामभिश्चान्ते वृणुयाद्वेदपारगान् ।
बाह्यास्त्रकुण्डशालायां ब्रह्मास्त्रप्रमुखेष्वपि ॥२५॥

---

1. ष्मर्धेन्दुयोनिपद्माकृतिं D.
2. मध्येकुण्डं D.
3. इतःप्रभृति द्वादशपादाः A B E F पुस्तकेषु लेखकेन भ्रान्त्या त्यक्ताः.
4. इत्थमेवात्र पाठ उपलभ्यते ; स्त्रीत्वं तु चिन्त्यम्.

ऋत्विजो वृणुयात्सर्वान्कुशलाञ्शान्तिकर्मणि[1] ।
ब्रह्मजज्ञानमित्यादिऋग्भिः पञ्चाशतं[2] क्रमात् ॥
स्वनामभिश्च विदुषो ब्रह्मास्त्रादिकृतादिकान्[3] ।
त्रिशतं वृणुयाद्ब्रह्मसूक्तैः सद्भिरनुक्रमात्[3] ॥२७॥
तत्रैवाथ भवा मित्र इति पञ्चभिरन्वितः[3] ।
परो मात्रादिभिश्चर्ग्भिस्त्रयोदशभिरेव च[4] ॥२८॥
विष्णुसूक्तगताभिश्च अस्य वामेति पञ्चभिः ।
अतो देवेति षड्भिश्च दशभिश्चक्षुरित्यपि[5] ॥२९॥
षड्भिः प्रति[6] व एनेति वृणुयात्स्वस्वनामभिः ।
सौवर्णान्राजतान्वाथ कुर्याद्धोमपरिच्छदान् ॥३०॥

(कुम्भस्थापनम्)

पूर्वभागेषु कुण्डानां स्थापयेत्तोयपूरितान् ।
सौवर्णान्राजतान्कुम्भान्यद्वा ताम्रमयानिह ॥३१॥
कुम्भान्पूर्ववदेकैकं कलमान्भारसंमितान् ।

---

1. शान्तकर्मणि A B.
2. पञ्चशतान् (?) A.
3. इत्थमेव सर्वत्र पाठः.
4. °मात्रादिभिष्षड्भिः A B E F.
5. संचिदित्यपि (?) D.
6. प्रतिपथेयैन्ते (?) A B; प्रतिप एतेति D; प्रतीप एवैते E F.

(होमार्थमृत्विगन्तरवरणविधिः)

वृणुयादृत्विजः शिष्टान्यज्वनो होमकर्मसु ॥३३॥
प्रवर्तयेत स्वैः स्वैस्तु मन्त्रैर्मन्त्रविदुत्तमः ।

(मध्यमकुण्डे आचार्यकर्तृकहोमविधिः)

देशिको मध्यमे कुण्डे सामध्वनिसमन्वितम् ॥
हुनेद्वादित्रसंयुक्तं पुण्याहनिनदैर्युतम् ।

(होमसंख्याविशेषविधिः)

प्रत्येकं कोटिहोमेन शान्तिकर्म [2]समारभेत् ॥३४॥

(तत्तत्कुम्भेषु तत्तद्देवताभ्यर्चनविधिः)

तत्तद्देवांस्[3]समावाह्य कुम्भेषु च पृथक्पृथक् ।
स्वैः स्वैरभ्यर्चयेन्मन्त्रैर्धूपदीपादिभिस्तथा ॥३५॥

(होमान्ते कुम्भोदकेन राज्ञोऽभिषेकः)

होमकर्मणि निर्वृत्ते तत्तत्कुम्भोदकैस्ततः ।
यन्त्रपीठे समारोप्य राजानमभिषेचयेत् ॥३६॥

(अस्त्रकुण्डेषु होमविधिः)

अस्त्रमन्त्रेषु येष्वेव नियुक्ता ये द्विजातयः ।
तत्तत्कुण्डेषु तैर्मन्त्रैर्जुहुयुः शान्तमानसाः ॥३७॥

---

1. याज्यया (?) A B.
2. रभतेः परस्मैपदत्वं छन्दोऽनुरोधात्.
3. "समाहूय" इति सर्वत्र.

(उत्तममध्यमाधमभेदेन होमसंख्याविकल्पः)

प्रत्येकं कोटिहोमस्तु मुख्यस्तस्यार्धमन्यतः।[1]
अधमं नियुतं ज्ञेयं

[2](आकर्मसमाप्ति अप्रमादानालस्यविधिः)

यावदेतत्समाप्यते ॥३८॥
कालेन तावता कार्यमप्रमत्तैरतन्द्रितैः।

(नारायणीयाद्यस्त्रवर्गे होमसाधनतया घृतद्रव्यविधिः)

नारायणीयं ब्राह्मं च विमलं क्रौञ्चमेव च ॥३९॥
धर्मपाशं च लक्ष्याक्षं संवर्तं सत्यमुत्तमम्।
दुन्दुनाभं च शीतेषुं विष्णुचक्रं च मानवम् ॥४०॥
ऐन्द्रं ज्यौतिषमित्येतमस्त्रवर्गं घृतैर्हुनेत्।

(कालचक्रादिवर्गे चरुविधिः)

कालचक्रं धर्मचक्रं वज्रास्त्रं च गदाह्वयम् ॥४१॥
ब्राह्मं शिरस्तथैषीकं त्रिशूलमशनिद्वयम्।
कालपाशं च पैनाकं पाशं वारुणमेव च ॥४२॥
आग्नेयं दयितं चापि तथा पाशुपतं परम्।
[3]एष वर्गस्तु होतव्यश्चरुणैव यथाविधि ॥४३॥

1. ॰मध्यमः A B.
2. इतःप्रभृति श्लोकत्रयं भ्रान्त्या त्यक्तं A B पुस्तकयोः.
3. एवं D.

(कङ्कालादिवर्गे दधिविधिः)

कङ्कालं मुसलं चापि वायव्यमथ कङ्कणी ।
असिरत्नं च कापालं शक्तिर्वैद्याधरं तथा ॥४४॥
प्रस्वापनप्रशमने दर्पणं शोषणं तथा ।
संतापनं च गान्धर्वं पैशाचं च विलापनम् ॥४५॥
एतानि दध्ना होतव्यान्यस्त्राणि परमास्तिकैः ।

(मदनादिवर्गे पयोविधिः)

मदनं तामसं चैव कन्दर्पदयितं परम् ॥४६॥
सौमनं मुसलं चैव संवर्तं घोरमेव च ।
मायाधरं च सोमास्त्रं वारुणं त्वाष्ट्रमेव च ॥४७॥
प्रस्वापनं भगास्त्रं च रौद्रस्त्रष्टं[1] पराङ्मुखम्[2] ।
पयसाऽमूनि जुहुयुस्तदस्त्रध्यानतत्पराः ॥४८॥

(रभसादिवर्गे पायसविधिः)

रभसं सत्यकीर्तिं च प्रतिहारतरं तथा ।
अवाङ्मुखं च विषमं दृढनाभं सुनाभकम् ॥४९॥
दशाक्षं शतवक्त्रं[3] च शतशीर्षं शतोदरम् ।
पद्मनाभं महानाभं नैराश्यक्रथने अपि ॥५०॥
वर्गोऽयं पायसेनैव होतव्यः शुद्धमानसैः ।

---

1. रौद्रदृष्टम् A B E F.
2. पराङ्करम् D.
3. शतपत्रं च दशशीर्षम् D.

(योगंधरादिवर्गे तिलविधिः)

योगंधरं विनिद्रं च [1]नैद्रं सौमनसं तथा ॥५१॥
धृतिमाली प्रमथनं विधूतं वृत्तिमानपि ।
महार्चिमाली मकरं रुचिरं करवीरकम् ॥५२॥
अमीषां च कृते कार्यस्तिलैर्होमो यथाविधि ।

(धनादिवर्गे मधुविधिः)

धनधान्ये कामरूपं मोहः कामरुचिस्तथा ॥५३॥
[2]वैरणावरणे चैव परमास्त्रे उभे अपि ।
जृम्भकं सर्वनाभं च भृशाश्वतनयो महान् ॥५४॥
संदानं परशुं चैव प्रीणीयान्मधुना भृशम् ।

(अन्येष्वस्त्रेषु शालितण्डुलविधिः)

अपराण्यप्यनुक्तानि जुहुयाच्छालितण्डुलैः ॥५५॥

(होमान्ते मन्त्रविशेषेण सुदर्शनतर्पणविधिः)

हुत्वा यथोक्तं स्वैर्मन्त्रैः सर्वास्त्रप्रभवं विभुम् ।
सुदर्शनाकृतिं विष्णुं सर्वयन्त्रमयं विभुम् ॥५६॥
[3]ऋग्भिर्यन्त्रनियुक्ताभिः शान्तिकर्म [4]समारभेत् ।

---

1. नैष्ठम् (?) A B.
2. वरुणावरुणे A B E F.
3. ऋग्भिर्यजुर्भिरुक्ताभिः A B E F.
4. रभतेः परस्मैपदत्वं छन्दोऽनुरोधात्.

(नारायणीयादितर्पणे मन्त्रविशेषविधिः)

नारायणीयमुख्यास्त्रजातं प्रत्येकमादरात् ॥५७॥
शान्तिं कुर्यात्परो मात्रेत्येतत्सूक्तेन सादरम् ।

(कालचक्रादिवर्गे मन्त्रविशेषविधिः)

कालचक्रादिवर्गस्थं[1] प्रत्येकं जातवेदसम् ॥५८॥
प्रीणीयाच्चैव

(कङ्कालाद्यस्त्रवर्गे मन्त्रविशेषविधिः)

कङ्कालमुख्यवर्गस्य शान्तये ।
दिवस्परीति सूक्तेन जुहुयाज्ज्वलितेऽनले ॥५९॥

(मदनादिवर्गे मन्त्रविशेषविधिः)

मदनाद्यस्त्रवर्गस्य शान्तिं कुर्यात्समाहितः ।
अतो देवेति सूक्तेन [2]तथा विष्णोर्नुकं त्विति ॥६०॥

(रभसादिवर्गे मन्त्रविशेषविधिः)

रभसाद्यस्त्रजातानि भवा मित्रेति पञ्चभिः ।
प्रत्येकं शमयेद्दग्भिरिति वैदिकशासनम् ॥६१॥

(योगंधरादिवर्गे मन्त्रविशेषविधिः)

योगंधरादेरस्त्रस्य शान्तिः कार्या समाहितैः ।
सूक्तेनानेन चैकैकमतो देवा अवन्त्विति ॥६२॥

---

1. °वर्गस्थः A B E F.
2. ततो D.

(धनादिवर्गे मन्त्रविशेषविधिः)

धनधान्यादिवर्गस्थं[1] मन्त्रजातं विचक्षणः ।
जुषस्व [2]नेति सूक्तेन शमयेत्परमेण तत् ॥६३॥

(अन्येष्वस्त्रेषु मन्त्रविशेषविधिः)

अस्त्राण्यन्यान्यनुक्तानि विष्णुसूक्तेन [3]तर्पयेत् ।
सूक्तैरेतैर्[4]महायन्त्रविनियुक्तैश्च पावनैः ॥६४॥
सर्वयन्त्रमयं देवं स्तुतिहोमैः समर्चयेत् ।

(तर्पणान्ते सहस्रब्राह्मणभोजनविधिः)

ततो देवान्समभ्यर्च्य ब्राह्मणांस्तदनन्तरम् ॥६५॥
सहस्रं भोजयेच्छुद्धैरोदनैः पायसैरपि ।

(ततोऽस्त्रमन्त्रजलै राज्ञोऽभिषेकविधिः)

ततो राजासनारूढं राजानं शान्तमानसम् ॥६६॥
ऋत्विग्भिराहृतैः सर्वै[5]रस्त्रमन्त्रजलैः शुभैः ।
गुरुस्तन्मूलमन्त्रेण मन्त्रितैरभिषेचयेत् ॥६७॥

(रुग्णस्य तु राज्ञः प्रोक्षणविधिः)

प्रोक्षयेदामयाविष्टो यदि राजा भवेन्मुने ।

---

1. °वर्गस्थः A B.

2. °सेति (?) A B; अत्र "न इति" इति भाव्ये "नेति" इति संधिश्छन्दोऽनुरोधात्कृतः । मन्त्रवर्णस्तु "जुषस्व नः समिधमग्ने अद्य" इत्यादिः.

3. कारयेत् A B. 4. महायज्ञ° A B.

5. अस्त्रकुम्भ° D.

(मण्डपान्तःस्थकुम्भतोयाभिषेचनावश्यकता)

अवश्यं मण्डपान्तःस्थकुम्भतोयाभिषेचनम् ।
कुर्यान्निरामयोऽनाधिर्विजयी भवति क्षणात् ॥६८॥

(यथोक्तमहाशान्तिजन्यफलविशेषकीर्तनम्)

आरोग्यमायुर्विजयो विभूति-
वशित्वमास्तिक्यममर्त्यता च ।
सर्वार्थसिद्धिर्वसुधाधिपत्यं
भवन्ति निःसंशयमेव राज्ञः ॥६९॥

इति श्रीपाञ्चरात्रे तन्त्ररहस्ये अहिर्बुध्न्यसंहितायां

महाशान्तिक्रियाविधिर्नाम सप्तचत्वारिंशोऽध्यायः ।

ओम् ।

(आदितः श्लोकाः २९३६)

---

ओम् ।

## अथ श्रीसुदर्शनमहायन्त्रघटितासनाङ्गुलीय-दर्पण-प्रभाववर्णनं नामाष्टाचत्वारिंशोऽध्यायः ।

ध्यातं सकृद्भवानेककोट्यघौघं हरत्यरम् ।
सुदर्शनस्य तद्दिव्यं भर्गो देवस्य धीमहि ॥

(इष्टार्थसाधने जपादिव्यतिरिक्तोपायसद्भावासद्भावप्रश्नः)

श्रीनारदः ।

कथितं भगवन्सर्वं जपहोमार्चनादिकम् ।
अभिषेको महाशान्तिर्महाशान्तिक्रियाविधिः[1] ॥१॥
सर्वार्थसाधकत्वेन चक्ररूपस्य शार्ङ्गिणः ।
एतैर्विना किमिष्टार्थसाधनं विद्यते न वा ॥२॥

(तत्रासनादीनामुपायत्वकथनम्)

अहिर्बुध्न्यः ।

विनैतान्यप्यभीष्टार्थमलभन्त परे नृपाः ।
आसनेनाङ्गुलीयेन दर्पणेन ध्वजेन च ॥३॥

---

1. इदमर्धं सर्वत्रैवमेवोपलभ्यते.

वितानेन च विस्तीर्णभूतयो देवसंनिभाः ।
मुक्तापीडो [1]विशालश्च सुनन्दश्चित्रशेखरः ॥४॥
कीर्तिमाली च भूपालाः पालयन्तोऽखिलां भुवम् ।

(आसनादिभिर्मुक्तापीडादीनां स्वस्वेष्टसिद्धिः)

आसनेनैव वसुधां मुक्तापीडोऽजयत्पुरा ॥५॥
विशालोऽप्यजयन्मृत्युमङ्गुलीयेन भूपतिः ।
सुनन्दो दर्पणेनैव नागलोकं महीपतिः ॥६॥
ध्वजेनासुरसंग्राममजयच्चित्रशेखरः ।
कीर्तिमाली वितानेन त्रिदिवं प्राप भूपतिः ॥७॥

(केवलासनादीनामिष्टसाधनत्वकथंताप्रश्नः)

श्रीनारदः ।

केवलान्यासनादीनि साधनत्वं कथं ययुः ।
साध्यं प्रति विभो तन्मे कथयेदं महाद्भुतम् ॥८॥

(तत्रासनप्रभाववर्णनाय मुक्तापीडोपाख्यानकथनम्)

अहिर्बुध्न्यः ।

हारापीडो महातेजा राजा [2]सुश्रवसः सुतः ।

---

1. विलासश्च D.
2. मित्रवतः A B E F.

पितर्युपरते पृथ्वीं बुभुजे सागराम्बराम् ॥९॥

(हारापीडस्य राज्ञो विषयासक्ततया राज्ये धर्मविच्युतिः)

निजान्तःपुरयोषित्सु विषयासक्तमानसः ।
अनालोचितसप्ताङ्गो राजा राजीवलोचनः ॥१०॥
प्रजास्तद्विषये तेन धर्मविच्युतिमाचरन् ।

(अत एव राज्यक्षोभश्च)

बलिभिर्दस्युभी राज्यं क्षुभितं च हृतं च तत्[1] ॥
तस्मै प्रकृतयः सर्वा राज्ञे क्षोभं व्यजिज्ञपन् ।
बुबुधे न स तेनापि मधुमैथुनविह्वलः ॥१२॥

(तदानीं सपुरोधसाममात्यानां मन्त्रणप्रकारः)

ततः पुरोधसा सार्धममात्याः संन्यमन्त्रयन् ।
राजा तु विषयासक्तो राज्यं दस्युभिराप्लुतम् ॥
इति संचिन्त्य ते सर्वे गुरुं प्राप्य महाद्युतिम् ।
भवत्प्रसादाज्जेष्यामो नान्या काप्यस्ति नो गतिः[2] ॥

(पुरोधसा वसिष्ठोपदिष्टोपायानुष्ठानम्)

इत्युक्तस्तैः पुरोधास्तु तथैवेत्याह तान्प्रति ।

---

1. राज्यक्षोभं D.

2. अत्र श्लोके "इत्यूचुः" इति पदद्वयमध्याहार्यम्; अन्यथा ते सर्वे इति प्रथमातन्पदानन्वयप्रसंगात्.

इत्युक्त्वा यन्त्रघटितं [1]विष्टरं रत्नमण्डितम् ॥१५॥
वसिष्ठोक्तेन मार्गेण चकारास्मै महाद्भुतम् ।
तस्मिन्नारोपयामास राजानमबलारतम् ॥१६॥

(पुरोधसा राजानं प्रति कृत्यविशेषानुशासनम्)

[3]वेदशाखाश्चतुर्दिक्षु वाचयेच्च क्रमेण तु ।
[4]आशीर्मङ्गलयुक्तानि गीतवादित्रनर्तकान् ॥१७॥
कलशोदकमक्षय्यममृतं भावयेद्बुधः ।
तन्मध्यादुत्थिते पद्मे सौवर्णे चाष्ट[5]पत्रके ॥१८॥
चतुर्बाहुं त्रिणेत्रं च पद्महस्तं हिरण्मयम् ।
सर्वाभरणसंछन्नं मुक्ताहारविराजितम् ॥१९॥
किरीटहारकेयूरकटकादिविभूषितम् ।
पीताम्बरधरं सौम्यं प्रसन्नवदनं [6]शुभम् ॥२०॥

---

1. विस्तरं A B; विस्तारं (?) D.
2. ०मण्डपम् D.
3. अत्र पूर्वप्रक्रान्तश्लोकद्वयानुगुण्यादुत्तरेषामपि वाक्यानां पुरोधःकर्तृकतत्तद्व्यापारविशेषानुवादपरत्वं न्याय्यमिति पूर्वत्रेवोत्तरत्राप्यनुवादत्वद्योतकलिडादिलकारप्रयोगस्यैवोचिततया वाचयेदित्यादिविध्यर्थकलिङादिप्रयोगानुपपत्तिर्यद्यपि हृदये स्फुरति । तथाऽपि 'वेदशाखाः' इत्यारभ्याष्टाचत्वारिंशश्लोकान्तानां चतुर्विंशतिश्लोकानां पुरोधःकर्तृक-राजकर्मक-कृत्यविशेषविषयकानुशासनपरत्वेन पूर्वतनश्लोकद्वयवदनुवादपरत्वाभावान्न लिङादिप्रयोगानुपपत्तिः । अत एवैकोनपञ्चाशश्लोके "तेनैवमनुशिष्टोऽयं" इतिग्रन्थस्याप्याञ्जस्यं भवतीति ध्येयम्.
4. इदमर्धं सर्वत्रैवमेवोपलभ्यते.
5. ०यन्त्रके D.
6. विभुम् A B E F.

कटिसूत्रसमायुक्तं कुण्डलाभ्यां विराजितम् ।
श्रीवत्सवक्षसं श्रीशं श्रीकरं श्रीनिकेतनम् ॥२१॥
श्रिया जुष्टं सदा सम्यक्ताम्रपद्मनिभेक्षणम् ।
पद्मनाभमुदाराङ्गं भक्तार्तिशमनं हरिम् ॥२२॥
तस्याङ्कं दक्षिणे लक्ष्मीं समासीनां[1] विचिन्तयेत् ।
मन्त्रमूर्त्यात्मको देवो[2] मन्त्रवाच्यस्तु स प्रभुः ॥
प्रविशन्तं ततस्तं तु भावयेन्मन्त्ररूपिणम् ।
एवं संचिन्तयन्मन्त्रं जपेत्कलशमामृशन् ॥२४॥
अष्टोत्तरायुतं जप्त्वा अभिषिञ्चन्स्वकां तनुम् ।
ग्रहाणां नैवकानां[3] च सद्यः शान्तिकरो भवेत् ॥
आयुः श्रियं च यस्येच्छेत्तं च तेनाभिषेचयेत् ।
अर्चयेदृत्विजः[4] सर्वान्पूर्वमेव बुधो नरः ॥२६॥
ब्राह्मणांस्तर्पयेच्चैव दक्षिणामुत्तमां ददेत्[5] ।
एवं स्वस्यापरस्यापि हितं कुर्यात्तथात्मनः ॥२७॥
दक्षिणा चात्र देया स्यात्सुवर्णं शतमेव वा ।

---

1. समं E F.
2. देव्या D.
3. स्वार्थे कप्रत्यय इति कथंचिद्योज्यम्.
4. अर्चयेच्च ग्रहान्सर्वान् E F.
5. भौवादिकात् " दद-दाने " इतिधातोर्विधौ लिङि रूपमिदम्। परस्मैपदत्वं तु व्यत्ययात्.

केशान्धुनेन्न न वपेन्न स्पृशेत्स्नानशाटिकाम् ॥२८॥
नातिष्ठेत्स्नानसलिलमलंकुर्यात्ततो बुधः ।
मङ्गलानि च पश्येत्तु ऋषभं मङ्गलाः स्त्रियः ॥२९॥
आत्मनो जन्मनक्षत्रे शुक्लवासा भवेत्तथा ।
शुक्रवारेषु कुर्वीत[2] सप्तशः कुर्वतस्तथा ॥३०॥
कामाः संकल्पितास्तस्य ध्रुवं सिद्ध्यन्ति नान्यथा ।
उद्वहन्वारि[3] कुर्वीत श्रीकामः पापनाशनम्[4] ॥३१॥
तिष्ठन्नञ्जलिभिः प्रातरष्टोत्तरशतं पुनः ।
अभिमन्त्र्य जलं मूर्ध्नि क्षिपेत्पापप्रणाशनम् ॥३२॥
जुहुयाद्वस्त्रकामस्तु कुसुमैः कुमुदादिभिः ।
यद्वर्णं जुहुयात्पुष्पं तद्वर्णं वस्त्रमाप्नुयात् ॥३३॥
वृष्टिकामः शुचौ देशे गोमयेनोपलेपिते ।
रक्तद्रव्येण तत्रैव मण्डलं परिकल्पयेत् ॥३४॥
मण्डलस्य पुरस्तात्तु नवकुम्भं निधापयेत् ।
तन्तुना वेष्टितं सम्यक्पूरितं[5] गन्धवारिणा ॥३५॥
आवाहयेत्ततः सूर्यं कुम्भे शुभ्रे समाहितः ।
तत्रस्थमर्चयेद्विष्णुं[6] पूर्ववत्साधकोत्तमः ॥३६॥

---

1. नाधितिष्ठेत्स्नानजलम् D.
2. अत्र योग्यताबलात् 'पूर्वोक्तं कृत्यजातं' इति कर्मवाचिपदमध्याहार्यम्.
3. वाऽपि D.
4. ०नाशनः D.
5. सम्यक्संपूर्णं A B E F.
6. सिंहं D.

पायसं जुहुयात्तत्र शतमष्टोत्तरं बुधः ।
ध्यायन्नेकाग्रधीः सिंहं जपेन्मन्त्रं सहस्रशः ॥३७॥
एवं कुर्वीत सप्ताहं द्वादशाहमथापि वा ।
ततः प्रसन्नो भगवान्महावृष्टिं विमुञ्चति ॥३८॥
वैतसेनैव होमेन वृष्टिर्भवति सर्वथा ।
अनश्नन्नार्द्रवासस्को वृष्टिकामः सदा जपेत् ॥३९॥
सप्ताहाज्जायते वृष्टिर्महती दिव्यशासनात् ।
भस्महोमेन वा सम्यग्लवणेनाथवा पुनः ॥४०॥
वृष्टिं निवारयेद्भूयः शान्तिः कार्या मनीषिणा ।
यस्तु मन्त्रं जपेन्नित्यं प्रातः स्नात्वा सहस्रशः ॥
श्रीरारोग्यं च तेजश्च वर्धते तस्य सर्वदा ।
सर्वाहःसु जपेद्यस्तु क्षीराहारो जितेन्द्रियः ॥४२॥
अर्चनं च यथाशक्ति कुर्वन्नियुतमन्वहम् ।
संसिद्धिमतुलां गच्छेदणिमादिगुणैर्युताम् ॥४३॥
अहोरात्रोषितो यस्तु पञ्चगव्यं पिबेत्ततः ।
नित्यमष्टसहस्रं तु सर्वपापप्रणाशनम् ॥४४॥
पञ्चगव्यं तु संपीय जपेत्पञ्च दिनानि वै ।

---

1. घृतम् A B E F.
2. शरीरारोग्यतेजश्च वर्तते (?) A B.
3. 'संपीत्वा' इति सर्वत्र.

ब्रह्महत्यादिभिः सद्यो मुच्यते सर्वपातकैः ॥४५॥
वापयेत्सर्व[1]बीजानि ह्यभिमन्त्र्य सहस्रकम् ।
महती सस्यसंपत्तिर्जायते नात्र संशयः ॥४६॥
घृतेन पयसा चापि स्नापयेद्देवमुत्तमम् ।
ततः प्रसन्नो भगवान्ददाति मनसेप्सितम् ॥
अश्नीयादन्वहं विद्वानन्नं सप्ताभिमन्त्रितम् ।
[2]परकर्माचरन्नस्मिन्नासीनः कुरु सर्वदा ॥४८॥

(यथोपदिष्टानुष्ठानेन राज्ञो निष्कण्टकभूमिलाभः)

[3]तेनैवमनुशिष्टोऽयं मासमात्रमथाकरोत् ।
तेनास्य शत्रवः सर्वे विनष्टा व्याधिभिर्बलैः ॥४९॥
तेन निष्कण्टका भूमिर्वश्याभूत्तस्य सार्णवा ।

(अथाङ्गुलीयप्रभाववर्णनाय विशालोपाख्यानारम्भः)

विशालो नाम राजाऽयं विशालाख्ये पुरे वसन् ॥
पालयामास धर्मात्मा मेदिनीं साब्धिपत्तनाम् ।

(विशालगुणवर्णनम्)

सत्यवादी समो बन्धुर्दैष्टिको धर्मवत्सलः ॥५१॥
वसन्विं[4]शतिमे वर्षे ब्राह्मणानामुपासकः ।

---

1. °बीजान्यभिमन्त्र्याष्टसहस्रकम् D.
2. हरिकर्मा° A B.
3. तेनेत्थमनु° A B.
4. 'विंशतिमे' इतिरूपं चिन्त्यम्.

प्रजानुरञ्जको धीरो दैवे पित्र्ये च निष्ठितः ॥५२॥

(तज्जनन्याः स्वपुत्रमरणसूचकाकाशवाणीश्रवणाद्विलापः)

बाल्ये पित्रा वियुक्तस्य तस्येत्थं वसतो मुने ।
जननी वाचमश्रौषीदाकाशे ह्यशरीरिणीम् ॥५३॥
आगामिनि चतुर्थेऽह्नि पञ्चत्वं ते गमिष्यति ।
पुत्र इत्यादि[1] सा श्रुत्वा विललापाकुला भृशम् ॥

(मातृमुखाद्विलापकारणं श्रुतवतो राज्ञस्ततसमाश्वासनपूर्वकं पुलहाश्रमगमनम्)

तच्छ्रुत्वा जननीमार्तामुवाच सुसमाहितः ।
किमर्थं रोदिषीत्येवं पृष्टा निर्बन्धतः सती ॥५५॥
तत्त्वतो वृत्तमाचख्यौ स तच्छ्रुत्वा महामनाः ।
मा भैषीरिति तामुक्त्वा निर्ययौ पुलहाश्रमम् ॥

(पुलहं प्रति स्ववृत्तनिवेदनम्)

तपस्यन्तं मुनिं दृष्ट्वा प्रणिपत्येदमब्रवीत् ।
अश्रृणोज्जननी चैवमशरीरां सरस्वतीम् ॥५७॥

(मुनिना तत्प्रतीकारोपायोपदेशनम्)

इत्थं तेनैवमुक्तोऽसौ मुनिराह पुरोहितः[2] ।
सौदर्शनमहायन्त्रघटितं चाङ्गुलीयकम् ॥५८॥
धारयैनमनेनैव मृत्युर्नश्यत्यसंशयम् ।

---

1. इत्यादिकां श्रुत्वा A B.
2. पुरोहितम् (?) A B E F.

(राज्ञो यथोपदिष्टानुष्ठानम्)

इति शिष्टोऽङ्गुलीयं स आहूयैनमधारयत् ॥५९॥

(ततश्च राज्ञो यमकिंकरैः समागमः)

विशालेन धृते तस्मिन्नङ्गुलीये सुयन्त्रिते ।
ततः कालेन संदिष्टाः किंकरा भीमदर्शनाः ॥६०॥
प्राणानादातुमाजग्मुस्तस्यान्तिकमवारिताः ।

(अङ्गुलीयप्रभावात्किंकराणां तत्समीपगमनासामर्थ्यं दूरात्पलायनं च)

पार्श्वं न शेकुस्ते गन्तुमङ्गुलीयप्रभावतः ॥६१॥
संरब्धोर्ध्वकरास्तस्मिन्यावत्पाशान्न चिक्षिपुः ।
तावच्चक्रमहानेमिनिःसृतैर्विविधायुधैः ॥६२॥
प्रदुद्रुवुस्ते नितरां पीड्यमाना यथागतम् ।

(राज्ञोऽपमृत्युजयाद्यमादीनां विस्मयः)

ततः सहैव कालेन सुरा विस्मयमागमन् ॥६३॥
सुदर्शनप्रभावेण तीर्णमृत्युरसाविति ।

(अथ दर्पणप्रभाववर्णनाय सुनन्दोपाख्यानम्)

तथैव दर्पणस्यापि शृणु वीर्यं महामुने ॥६४॥
[1]सुनीतिरिति राजाऽऽसीच्छृङ्गाराख्ये पुरे पुरा ।
त्रेतायुगावसानेऽसौ पालयामास मेदिनीम् ॥६५॥

---

1. इदमर्धं विनष्टं A B पुस्तकयोः ; सुनीतेरेव 'सुनन्दः' इत्यपि नामान्तरं, इदं चाग्रे व्यक्तीभविष्यति.

(सुनन्दस्य चिरेण सुमतिनामकतनयलाभः)

लेभे चिरेण तनयमयमिष्ट्वा शतक्रतुम् ।
चकार सुमतिं नाम्ना वर्धमानं दिने दिने ॥६६॥
जनकस्तं

(प्राप्तयौवनस्य राजपुत्रस्य रमाख्यया नागकन्यया मोहनपूर्वकं नागलोके नयनम्)

ततः श्रीमान्कालेन प्राप्तयौवनः ।
सोऽभूदनल्पकालेन प्राप्तविद्योऽस्त्रकोविदः ॥६७॥
एकदा मृगयां कर्तुं बाह्योपवनमभ्यगात् ।
तत्रापश्यन्मनोज्ञाङ्गीं रूपयौवनशालिनीम् ॥६८॥
अदृष्टपूर्वां तां दृष्ट्वा मुमोह मदनातुरः ।
सुमतिं तं समादाय सा जगाम स्वमालयम् ॥
मायया मोहयित्वैनं नागलोकं विवेश सा ।

(तत्रानङ्गमञ्जरीं वासुकितनयां परिणीतवतस्तस्य तत्रैव चिरकालनिवासः)

तस्मिन्भोगवतीं रम्यां नागराजपुरीं तदा ॥७०॥
प्रविश्यानङ्गमञ्जर्यै प्रायच्छत्सुमतिं रमा ।
तं दृष्ट्वा परमप्रीता सा वव्रे सुमतिं पतिम् ॥७१॥
तं लोकं तां पुरीं तां च नागकन्यां मनोहराम् ।
विलोक्य विस्मयं प्राप स तां चानङ्गमञ्जरीम् ॥

---

1. तां चैवानङ्गमञ्जरीम् D.

गान्धर्वेण विवाहेन परिगृह्य तया सह ।
रेमे विस्मृतसर्वस्वपुरीपितृपरिग्रहः ॥७३॥

(पुत्रविरहात्खिद्यतो राज्ञश्चारैः सर्वत्र पुत्रान्वेषणम्)

एतस्मिन्नन्तरे राजा शुश्रावानागतं सुतम् ।
त्वरया परयाऽऽविष्टः सचिवांश्चेदमब्रवीत् ॥७४॥
कृच्छ्राल्लब्धः प्रियः पुत्रो ममैकोऽद्य प्रवेश्यताम् ।
तेन सार्धं तु भुञ्जीय न भोक्ष्येऽद्येत्यचोदयत् ॥
इति तस्य वचः श्रुत्वा निर्ययुः सर्वतो दिशः ।
सचिवैः प्रेषिताश्चारा दूताश्चान्ये जवान्विताः ॥
विदिक्षु दिक्षु कोणेषु गिरिष्वप्सु सरित्सु च ।
ग्रामेषु नगरेष्वेते चेरुश्चैत्येषु शाखिषु ॥७७॥
पत्तनेष्वप्यरण्येषु तीर्थेष्वन्विष्य सर्वतः ।
नापश्यन्सुमतिं सर्वे तथैवोचुर्नृपाय वै ॥७८॥

(अन्ततोऽप्यलब्धपुत्रवृत्तान्तेन राज्ञाऽनशनव्रतस्वीकरणम्)

तच्छ्रुत्वा शोकसंतप्तो विलप्य बहु भूपतिः ।
अनश्नन्नशयिष्टान्तःशोकेन महताऽऽवृतः ॥७९॥

---

1. °ऽपराजिताः A B E F.
2. क्षोणीषु D.

(अत्रान्तरे पुरोधसा कण्वाश्रमगमनपूर्वकं तस्मिन्राजवृत्तनिवेदनम्)

एवं शोकाभिभूतेऽस्मिन्महाराजे पुरोहितः।
स्वगुरुं कण्वमासाद्य तमसातीरवासिनम् ॥८०॥
वृत्तं विज्ञापयामास राजपुत्रस्य तादृशम्।

(योगबलात्सर्वमध्यक्षयता मुनिना राजकुमारवृत्तान्ताविष्करणम्)

तच्छ्रुत्वा स मुनिर्युक्तो बभूव कृपया पुनः ॥८१॥
दृष्ट्वा कुमारवृत्तान्तं योगेनास्मात्समुत्थितः।
स तस्मै कथयामास तद्वृत्तमखिलं मुनिः ॥८२॥
आसीद्भोगवती नाम पुरी परमशोभना।
पाताले नागराजस्य वासुकेरमितद्युतेः ॥८३॥
अनङ्गमञ्जरी नाम तस्यां तस्याभवत्सुता।
रूपलावण्यसंपन्ना कालेन प्राप्तयौवना ॥८४॥
अस्या यस्मिन्वरे लिप्सा तस्मै दास्यामि तामिति।
संकल्पं वासुकेर्मत्वा चेव्यश्चेरुरितस्ततः ॥८५॥
तस्याः सदृशमन्वेष्टुं वरं तं नैव लेभिरे।
नागलोके तथा भूम्यां व्यचरन्वरवाञ्छया ॥८६॥
तत्रैवं सुमतिं दृष्ट्वा राजपुत्रं मनोहरम्।

---

1. भामिनीम् D.

प्रोचुस्तस्या महाराजतनयो मदनोपमः ॥८९॥
तवैव सदृशो भूम्यां पुरुहूतसमः श्रिया ।
न च सामादिभिश्शक्यः समानेतुमसाविति ॥
तदाकर्ण्य तमत्रैव क्षिप्रमानयतेति ताः ।
उक्ता तत्संगमौत्सुक्यात्परां चिन्तामुपागता ॥
ततः संमन्त्र्य ताः सख्यो रमां मायाविशारदाम् ।
मायया मोहयित्वैनमिहानय मनोरमम् ॥९०॥
इत्यूचुः सा तथोक्तैनमानयामास मायया ।
सुमतिस्तामथोद्वाह्य रमते तत्र सांप्रतम् ॥९१॥

(कुमारप्रत्याहरणे सुदर्शनयन्त्रघटितदर्पणस्यैव साधनत्वोपदेशः)

सुदर्शनप्रभावेण विनाऽऽहरणकर्मणि ।
नास्त्युपायान्तरं तस्य ततस्तेनाहराम्यहम् ॥९२॥
सुदर्शनमहायन्त्रं दर्पणीकृत्य हाटकैः ।
पूर्वोक्तवर्त्मना तेन तमानयत मा चिरम् ॥९३॥
इत्युक्त्वा स पुनश्चक्रे तपः परमदारुणम् ।

(यथोपदिष्टानुष्ठानाद्राज्ञो नागलोकगमनसामर्थ्यसिद्धिः)

पुरोहितो विनिष्क्रम्य राज्ञे सर्वं न्यवेदयत् ॥९४॥
राजा च परमप्रीतः कृत्वा यन्त्रितदर्पणम् ।
रथे पुरस्तात्संस्थाप्य बिलद्वारं तदा ययौ ॥९५॥
तेनाभिगन्तुं शक्तोऽभूत्सुनन्दो दर्पणौजसा ।

(अत्यद्भुतनागलोकदर्शनाद्राज्ञो विस्मयातिशयः)

प्रविश्य लोकं नागानां स्वर्गलोकमिवापरम् ॥९६॥
विस्मयं परमं प्राप तत्समृद्धिविलोकनात् ।

(भोगवतीस्थस्य कुमारस्य सदारस्य स्वपुरीं प्रति प्रत्यानयनम्)

तस्मिन्भोगवतीं रम्यां नागराजपुरीमसौ ॥९७॥
[1]प्रविश्याथानयामास पुत्त्रं परमवत्सलः ।
सदारः पितरं द्रष्टुं शुद्धान्तात्सुमतिस्तदा ॥९८॥
निर्ययौ वनितालोकसहितो मदनो यथा ।
तं ताभिर्नागकन्याभिः सह स्यन्दनमुत्तमम् ॥
आरोप्य स्वपुरीं राजा प्रतस्थे परवीरहा ।

(अत्रान्तरे क्रुद्धस्य वासुकेर्युद्धसमुद्योगः)

तव जामातरं पुत्त्रीं स्वावरोधान्महीपतिः ॥१००॥
कश्चित्स्यन्दनमारोप्य यातीत्याकर्ण्य वासुकिः ।
निर्ययौ परमक्रुद्धः फणिसेनापरीवृतः ॥१०१॥
स दृष्ट्वा राजशार्दूलं तिष्ठ तिष्ठेति चाब्रवीत् ।
क्व गम्यते समादाय वधूं वरमितस्त्वया ॥१०२॥

(सुदर्शनयन्त्रघटितदर्पणप्रभावाद्राज्ञो विजयलाभः)

सुनन्दोऽथ समाकर्ण्य निवर्त्य स्यन्दनोत्तमम् ।

---

1. प्रविश्य चानयामास D.

वत्रे दर्पणमद्यैव शत्रुसेनां जहीति वै ॥१०३॥
ततः [1]प्रस्वापनाग्नेये दिव्यास्त्रे निःसृते क्षणात् ।
प्रस्वापनं नागसेनां विवेशानेन साऽस्वपत् ॥१०४॥
आग्नेयमस्त्रमारब्धं तां पुरीं दग्धुमोजसा ।

(पराजितेन वासुकिना शरणागतिपूर्वकं राजाभ्यर्हणम्)

तद्दृष्ट्वा नागराजस्तं शरणं समुपागमत् ॥१०५॥
[2]नाज्ञायि सर्वमस्माभिस्तदेतत्क्षम्यतां विभो ।
अत्याहितमिदं स्त्रीणामिति मत्वा शमं व्रज ॥
गृहाणेमानि रत्नानि महार्हाणि महाद्युते ।
इमां च कन्यामन्याश्च सहस्रं नागयोषितः ॥
आदाय प्रतिसंहृत्य दिव्यास्त्रे गन्तुमर्हसि ।

(शरणागतवासुकिमनोरथपूरणपूर्वकं राज्ञः सपरिकरस्य स्वपुरप्रवेशः)

सुनन्दोऽपि तथेत्युक्त्वा संहृत्यास्त्रे समाहितः ॥
ततः स्वपुत्रं रत्नानि महान्ति वरयोषितः ।
आदायामन्त्र्य तं राजा जगाम [3]स्वपुरीं कृती ॥१०९॥

इति श्रीपाञ्चरात्रे तन्त्ररहस्ये अहिर्बुध्न्यसंहितायां
श्रीसुदर्शनमहायन्त्रघटितासना-ङ्गुलीय-दर्पण-प्रभाववर्णनं नाम
अष्टाचत्वारिंशोऽध्यायः ।

ओम् ।

(आदितः श्लोकाः ३०४५)

---

1. प्रस्वा° D. 2. न ज्ञातं A B E F.
3. स्वपुरं प्रति A B E F.

ओम् ।

## अथ श्रीसुदर्शनमहायन्त्रघटितध्वजवैभवनिरूपणाय चित्रशेखरोपाख्यानवर्णनं नामैकोनपञ्चाशोऽध्यायः ।

ध्यातं सकृद्भवानेककोट्यघौघं हरत्यरम् ।
सुदर्शनस्य तद्दिव्यं भर्गो देवस्य धीमहि ॥

(तत्र सुदर्शनमहायन्त्रघटितध्वजवैभवनिरूपणप्रतिज्ञा)

अहिर्बुध्न्यः ।

सुदर्शनमहायन्त्रघटितस्य ध्वजस्य तु ।
प्रभावः श्रूयतां सम्यग्याथातथ्येन नारद ॥१॥

(भद्रवाटीनगरवर्णनम्)

सरस्वत्यास्तटे रम्ये भद्रवाटीति विश्रुता ।
परःसहस्रैः प्रासादैर्जातरूपमयैश्चिता ॥२॥
पुरी विविधकामाढ्या [1]हेमसालसमन्विता ।
समृद्ध्या त्रिदिवप्रख्या बभूव भुवि दुर्लभा ॥३॥

---

1. हेमजाल॰ E F.

(तत्र चित्रशेखरस्य राज्ञो निवासः)

तामध्यास्ते महावीर्यो राजोपरिचरात्मजः ।
पालयन्नव वर्षाणि चित्रशेखरसंज्ञितः ॥४॥

(तत्पित्रोपरिचरेण कदाचिद्द्वन्द्वयुद्धे शङ्कुकर्णाख्यासुरहननम्)

पितर्यस्य[1] पुरा दिव्यमिन्द्रदत्तं क्रमागतम् ।
रथमारुह्य देवानां कार्यार्थं याति खे बली ॥५॥
शङ्कुकर्ण इति ख्यातो दानवो भीमलोचनः ।
दिदृक्षुस्तद्रथं मार्गे तस्य[2] कूबरमग्रहीत् ॥६॥
उवाच च मया सार्धं युध्यस्व यदि वा रथम् ।
जहि वेत्युक्तवत्यस्मिन्स तथेत्यग्रहीद्धनुः ॥७॥
ततस्तेन महायुद्धे दिनमेकं प्रवर्तिते ।
अथास्त्रजालमुत्सृज्य द्वन्द्वयुद्धे हतोऽसुरः ॥८॥

(अमर्षणनाम्ना शङ्कुकर्णसुतेन चित्रशेखरपीडनम्)

जित्वा तमसुरं राज्ञि कालेनास्तं गते मुने ।
तत्पुत्रं शङ्कुकर्णस्य सुतः परमरोषणः ॥९॥
अमर्षण इति ख्यातो मायावी चित्रशेखरम् ।
जिघांसुस्तद्बलं राज्ञः पुरं चापीडयत्सदा ॥१०॥

---

1. इदं च सप्तम्यन्तं, पितरि याति सतीत्यन्वयः.
2. रथकूबर° B E F.

(वैरशुद्धिं कामयमानेन तेन कदाचिद्भद्रवाट्युपरोधः)

एकदाऽमर्षणः क्रुद्धो भद्रवाटीमुपागमत् ।
पितृहन्तृसुतं योद्धुं ससैन्यं चित्रशेखरम् ॥११॥
निहत्य चैनमादास्ये सर्वं तत्स्यन्दनोत्तमम् ।
इत्युक्त्वा नगरीं रम्यां रुरोध बलदर्पितः ॥१२॥

(संनद्धस्य राज्ञस्तेन सह घोरयुद्धप्राप्तिः)

निर्ययौ महतीं सेनां संनह्य नृपतिः पुरात् ।
तत्र युद्धं समभवद्राज्ञस्तेन दुरात्मना ॥१३॥
सरणैश्चापि चरणैः कचाकचि भयावहम् ।
गजाश्वरथपादातं प्रभग्नरथमाकुलम् ॥१४॥
प्रवृत्तासृक्सरित्सार्धं कृत्तच्छत्रध्वजाचितम् ।
नृत्यत्कबन्धमुत्कृत्तदष्टाधरशिरश्चितम्[1] ॥१५॥

(दिनत्रयं युध्यतोऽपि विजयालाभः)

एवं दिनत्रयं युद्धं प्रवृत्तं रोमहर्षणम् ।
न लेभे विजयं तस्मिन्नाहवे चित्रशेखरः ॥१६॥

(श्रान्तसेनयोर्द्वयोरपि युद्धात्प्रतिनिवृत्तिः)

श्रमान्निववृते सेनाद्वयी तस्माद्द्वयोरपि ।
तावुभौ जग्मतुः स्वं स्वं पुरं विश्रान्तवाहनौ ॥

---

1. °शिरश्शतम् D E F.

(एवं सप्तदशवारं युध्यतोऽपि विजयासिद्धिः)

वारान्सप्तदशैतेन युयुधे चित्रशेखरः ।
एवमेव जयं प्राप न क्वचित्पृथिवीपतिः ॥१८॥

(खिन्नस्य तस्य चिन्ताप्रकारः)

अथ दुर्जयमालोच्य महासुरममर्षणम् ।
केनोपायेन जेतव्य इति चिन्तापरोऽभवत् ॥१९॥
महादेवप्रसादेन विना नैव जयो मम ।
अतस्तं तपसा देवं तोष्यामीति[1] मनो दधे ॥२०॥

(कृतनिश्चयस्य कैलासगमनम्)

कृती निश्चित्य मनसा राज्यं संन्यस्य[2] मन्त्रिषु ।
जगाम तपसे राजा रथमारुह्य कामगम् ॥२१॥
कैलासशिखरं रम्यं नभसा वसुधाधिपः ।

(गगने गच्छतोऽस्य मन्दरोपरि स्यन्दनगतिप्रतिरोधः)

तेनैव गच्छतस्तस्य स्यन्दनं मन्दरोपरि ॥२२॥
अतिष्ठत्प्रेर्यमाणेषु वराश्वेष्वपि नारद ।

(तत्कारणजिज्ञासया संचरतस्तत्र कुबेरदर्शनम्)

रथः कस्मादकस्मान्मे विष्टब्ध इति विस्मितः ॥

---

1. तोषयामीति णिजर्थे तोष्यामीति रूपमार्षम्.
2. संनद्य B.

रथादवातरच्छृङ्गे तस्य रम्ये महीपतिः ।
अवतीर्य रथात्तस्माच्चचार गिरिमूर्धनि ॥२४॥
तत्रापश्यत्सरस्तीरे तरुणं दिव्यलक्षणम् ।
उपास्य पश्चिमां संध्यामवस्थितमनाकुलम् ॥२५॥
तरुणादित्यसंकाशं ज्वलन्तं प्रभया स्वया ।

(तेन समं सँल्लापः)

तं प्रणम्य महाबाहुः कृताञ्जलिरभाषत ॥२६॥
कस्त्वं पुराणपुरुषो यदि वा कमलोद्भवः ।
उमेश्वरो दिशेशानां यदिवाऽन्यतमो भवान् ॥
इत्युक्तस्तेन भगवान्प्राह गम्भीरया गिरा ।
किंनामकोऽसि कथय किमागमनकारणम् ॥२८॥
एकाकिना त्वया देशः कथं प्राप्तोऽयमित्यपि ।

(कुबेरे स्ववृत्तान्तनिवेदनम् )

अथ न्यवेदयत्सर्वं राजोपरिचरान्वयः ॥२९॥
चित्रशेखरनामानमात्मानमवनीपतिम्[1] ।
महासुरप्रवृत्तिं च स्वस्य तेन च पीडनम् ॥३०॥
तज्जयायेशतुष्ट्यर्थं तपश्चरण[2]कारणात् ।
स्यन्दनेनाभिगमनं निरोधं तत्र तस्य तु ॥३१॥

1. °पतिः A B D.
2. पुरश्चरण° E F.

(कुबेरवचनात्तत्र गिरौ लक्ष्मीनिवासपरिज्ञानम्)

इत्युक्तस्तेन सोऽप्याह विद्धि मां गुह्यकेश्वरम् ।
अत्रैवास्ते महालक्ष्मीः सर्वकारणकारणम् ॥३२॥
तत्सेवार्थमिह[1] प्राप्तः[2]

(कुबेरेण संक्षेपतो लक्ष्मीमहिमानुवर्णनम्)

सा हि सर्वगतिः परा ।
तदाज्ञयैव चरतश्चन्द्रसूर्यौ विहायसि ॥३३॥
तत्प्रभावेण ते भग्नं गमनं स्यन्दनस्य तु ।

(लक्ष्मीप्रसादस्याभीष्टसाधनत्वोपदेशपूर्वकं कुबेरान्तर्धानम्)

तां दृष्ट्वा साधयाभीष्टमित्युक्त्वाऽन्तरधीयत ॥३४॥

(राजसाहाय्यार्थं कुबेरप्रहितपुरुषसमागमः)

तस्य साहाय्यकामोऽन्यस्तन्निदेशादुपागमत् ।
[3]प्रणम्य भूपतिं प्राह गुह्यकोऽहं तदाज्ञया ॥३५॥
साहाय्यकामस्ते प्राप्तो वसावोऽत्रैव शर्वरीम् ।
प्रत्यूषेऽपेक्षितं यत्स्यात्तत्करिष्यामि नान्यथा ॥

(तद्वचनात्तत्रैव स्थाने तद्रात्रियापनम्)

परस्परप्रणयिनौ तां रात्रिं तत्र [4]चोष्य तु ।

---

1. तां संप्राप्तमिह प्राप्तः (?) A B ; तं सर्वार्थमिह (?) D.
2. अहमिति शेषः.
3. स प्रविश्य पतिं प्राह A B E F.
4. चोषतुः A B E F.

देव्याः सदसि गन्धर्वगीतवादित्र[1]निःस्वनम् ॥३७॥
शृण्वन्तौ तत्कथाभिश्च निन्यतुस्तां [2]सरस्तटे ।

(प्राभातिकक्रियान्ते लक्ष्मीनिवासस्थानजिज्ञासया गुह्यकं प्रति प्रश्नः)

प्रत्यूषसमये संध्यामुपास्य प्रथमां नृपः ॥३८॥
गुह्यकं प्राह शैलेऽस्मिन्देवी सा कुत्र वर्तते ।
केनाध्वना वा तद्धाम याम तद्दर्शनं कदा ॥३९॥

(गुह्यकस्य प्रतिवचनम्)

गुह्यकः प्रत्युवाचेदं क्रोशे तन्मन्दिरं परम् ।
यतो गीतमृदङ्गानां निःस्वनः श्रूयते महान् ॥
कंचित्कालमुपास्यैनां धनदो यास्यति क्षणात् ।
तस्मिन्गते प्रविश्यैनां नमस्यसि सनातनीम् ॥

(ततो गुह्यकेन सह लक्ष्मीमन्दिरगमनम्)

[3]प्रस्थापयामास ततो याममात्रं प्रतीक्ष्य ताम्[4] ।
राजाऽपि स्वरथं तत्र संस्थाप्यैनमथान्वगात् ॥४२॥

---

1. °वादित्रजं स्वनम् E F.
2. सरित्तटे A B E F.
3. प्रस्वापयामास A B.
4. इदमर्धं सर्वत्रैवमेवोपलभ्यते । तत्र कथंचिदध्याहारेण वाक्यं योजनीयम् तद्यथा—" इति, उक्त्वा, राजानं," इति पदत्रयमध्याहार्यम् । ततश्चायमर्थः—गुह्यकः " नमस्यसि सनातनीम् " इत्यन्तमुक्त्वा, तां लक्ष्मीमुद्दिश्य, लक्ष्मीदर्शनायेति यावत्, याममात्रं प्रतीक्ष्य, राजानं प्रस्थापयामासेति,

(गुहाद्वारदेशे गुह्यकस्यावस्थानम्)

ततो महागुहापार्श्वे मन्दिरं समदृश्यत ।
तद्गुहाद्वारि सोऽतिष्ठत्पालयन्बलकुञ्जरम् ॥४३॥

(एकाकिनो राज्ञो मन्दिरान्तःस्थरत्नमण्डपप्रवेशः)

अतीत्य[1] च ततः कक्ष्याश्चतस्रो मणिगोचराः ।
ततो रत्नमयं दिव्यं विवेशास्थानमण्डपम् ॥४४॥

(मण्डपवर्णनम्)

मणिस्थूणासहस्राढ्यं मण्डपं समदृश्यत ।
परःशतमहारत्नपर्यङ्कसमलंकृतम् ॥४५॥
रत्नमङ्गलदीपैश्च मण्डितं तुङ्गतोरणम् ।
अनेककल्पकाकीर्णं मणिपीठपरिष्कृतम् ॥४६॥
मन्दारकुसुमामोदैर्मृगनाभिमदैरपि ।
कस्तूरिकोत्थसौरभ्यैर्वासितान्तरमूर्जितम् ॥४७॥
अत्यादित्यप्रभं पुण्यं मुक्तादामविभूषितम्[2] ।
हेमपङ्कजमालाढ्यं पताकाध्वजशोभितम् ॥४८॥
धूपैः कालागरूद्भूतैः समन्तादधिवासितम् ।
कर्पूरमिश्रकालेयक्षोदपङ्कपरिष्कृतम् ॥४९॥

---

1. व्यतीत्य E F.
2. °विराजितम् A B E F.

इतस्ततश्चरन्तीनां शक्तीनां भूषणारवैः ।
झणज्झणितमञ्जीरनिनदैर्नादितान्तरम् ॥५०॥

(मण्डपमध्यस्थरत्नपर्यङ्के अब्जासनस्थमहालक्ष्मीदर्शनम्)

तन्मध्ये रत्नपर्यङ्के संस्कृताब्जासनाश्रिताम् ।
महालक्ष्मीं महानन्दां संश्रितां सर्वशक्तिभिः ॥
सर्वाभरणसंयुक्तां सर्वालंकारशोभिताम् ।
लावण्यामृतकल्पाङ्गीं शशिबिम्बनिभाननाम् ॥
संवीतदिव्यकौशेयां दिव्यचन्दनमालिकाम् ।
विलोक्य प्रणतो भूत्वा विस्मयस्तिमितोऽभवत् ॥

(तत्पादोदकप्राशनपरिपूतेन राज्ञा तत्स्तुतिकरणम्)

तत्पादाम्बु समादाय रतिरेनमपाययत् ।
सोऽथ तुष्टाव सुप्रीतस्तां देवीं शुभलोचनाम् ॥

(तत्र लक्ष्म्या उभयविभूतिमत्ताप्रतिपादनम्)

महालक्ष्मि भद्रे परव्योमवासि-
न्यनन्ते सुषुम्नाह्वये सूरिजुष्टे[2] ।
जये सूरितुष्टे शरण्ये सुकीर्ते[3]
प्रसादं प्रपन्ने मयि त्वं कुरुष्व ॥५५॥

---

1. क्वणत्क्वणितमञ्जीर° B E F.
2. सूर्य° B E F.
3. सुवर्णे E F.

सति स्वस्ति ते गौरि गायत्रि गार्गि
  ध्रुवे कामधेनो सुराधीशवन्द्ये ।
सुनीते सुपूर्णेन्दुशीते कुमारि
  प्रसादं प्रपन्ने मयि त्वं कुरुष्व ॥५६॥

सदा सिद्धगन्धर्वयक्षेशविद्या-
  धरैः स्तूयमाने रमे रामरामे ।
प्रशस्ते [1]समस्तामरीसेव्यमाने
  प्रसादं प्रपन्ने मयि त्वं कुरुष्व ॥५७॥

(लक्ष्म्या एव निर्व्याजपुरुषकारत्वसमर्थनम्)

दुरितौघ[2]निवारणे प्रवीणे
  विमले [3]भासुरभागधेयलभ्ये ।
प्रणवप्रतिपाद्यवस्तुरूप-
  स्फुरणाख्ये हरिवल्लभे नमस्ते ॥५८॥

सिद्धे साध्ये [4]मन्त्रमूर्ते वरेण्ये
  गुप्ते [5]तृप्ते नित्यमुद्गीथ[6]विद्ये ।

---

1. समस्तामरैः स्तूयमाने B E F.
2. ०निवारणप्रवीणे E F.
3. भार्गव० B E F.
4. मन्त्ररूपे A B E F.
5. दृप्ते A B E F.
6. ०त० A B.

व्यक्ते विद्वद्भाविते भावनाख्ये
भद्रे भद्रं देहि मे संश्रिताय ॥५९॥

सर्वाधारे सद्गतेऽध्यात्मविद्ये
भाविन्यार्द्रे निर्वृतेऽध्यात्मवह्नि ।
विश्वाध्यक्षे मङ्गलावासभूमे
भद्रे भद्रं देहि मे संश्रिताय ॥६०॥

(लक्ष्म्याः पारमार्थिकमङ्गलगुणाकरतया श्रुतिशिरोभूषणत्वम्)

अमोघसेवे निजसद्गुणौघे
[1]विदीपितानुश्रवमूर्धभागे ।
अहेतुमीमांस्यमहानुभावे
[2]विलोकने मां विषयीकुरुष्व ॥६१॥

(उमाशचीप्रभृतीनां महालक्ष्मीविभूतित्वम्)

उमाशचीकीर्तिसरस्वतीधी-
स्वाहादिनानाविधशक्तिभेदे ।
अशेषलोकाभरणस्वरूपे
[2]विलोकने मां विषयीकुरुष्व ॥६२॥

---

1. अत्रानुश्रवशब्दो वेदपरः । श्रुतिसीमन्तिनीसीमन्तस्य विशेषेण दीपितत्वं निरुपाधिकमङ्गलगुणयुक्तभवत्स्वरूपप्रतिपादकत्वाधीनामिति भावः.
2. विलोकनैर्मा A B E F.

(स्तुतिप्रीतया लक्ष्म्या राजाभीष्टप्रश्नः)

इति स्तुतिं निशम्यैषा प्रसन्ना प्राह पार्थिवम् ।
प्रार्थितं ते ददाम्यद्य किं तत्कथय भूपते ॥६३॥

(राज्ञा तस्यां स्वाभीष्टनिवेदनम्)

राजा च स्वान्वयं स्वं च महासुरनिपीडनम् ।
आचख्यौ सर्वमेवास्यै

(अभयप्रदानपूर्वकं लक्ष्म्या राज्ञे सुदर्शनयन्त्रघटितध्वजार्पणम्)

मा भैषीरिति साऽब्रवीत् ॥
अहमाधारभूताऽपि शक्तीनां जगतस्तथा ।
सुदर्शनप्रभावेण करोम्याश्रितरक्षणम् ॥६५॥
अनेन जहि ते शत्रुमिति ध्वजमथार्पयत् ।

(यथोक्तध्वजमहिम्ना शत्रुजयपूर्वकं राज्ञो निष्कण्टकराज्यलाभः)

यन्त्रितं तं ध्वजं लब्ध्वा जगाम स्वपुरं नृपः ॥
जिगाय तेन महतीमासुरीं स वरूथिनीम् ।
तं च हत्वा[1] सुखं राज्यमकरोच्चित्रशेखरः ॥६७॥

इति श्रीपाञ्चरात्रे तन्त्ररहस्ये अहिर्बुध्न्यसंहितायां
श्रीसुदर्शनमहायन्त्रघटितध्वजवैभवनिरूपणाय चित्रशेखरोपाख्यानवर्णनं नाम
एकोनपञ्चाशोऽध्यायः ।

ओम् ।

(आदितः श्लोकाः ३११२)

---

1. जित्वा A B E F.

ओम् ।

## अथ सुदर्शनमहायन्त्रघटितवितानवैभववर्णनाय कीर्तिमाल्युपाख्यानवर्णनं नाम पञ्चाशोऽध्यायः ।

ध्यातं सकृन्द्भवानेककोट्यघौघं हरत्यरम् ।
सुदर्शनस्य तद्दिव्यं भर्गो देवस्य धीमहि ॥

(तत्र प्रथमं श्रोतुर्नारदस्य सुखप्रतिपत्त्यर्थं वक्ष्यमाणार्थसूचनम्)

अहिर्बुध्न्यः ।

इदं तु शृणु देवर्षे कीर्तिमाली वितानतः ।
अजयत्त्रिदिवं पूर्वं येनैव विधिना बली ॥१॥

(भद्रश्रृङ्गस्य राज्ञो धर्मेण चिराय भूमण्डलपरिपालनम्)

भद्रश्रृङ्ग इति ख्यातो राजा परमधार्मिकः ।
आसीदुदारचरितो विशालाख्ये पुरे पुरा ॥२॥
तस्य स्वपुरवत्पृथ्वीं सप्तद्वीपवतीमपि ।
शासतः शक्रकल्पस्य शरदामयुतं गतम् ॥३॥

1. ष E F.

(तत्पुत्रस्य कीर्तिमालिनो गुणवर्णनम्)

तस्य दीर्घायुषः पुत्रः कीर्तिमाली मदोद्धतः ।
शूरः कमलपत्राक्षः कन्दर्प इव रूपवान् ॥४॥
बलवानप्रतिद्वन्द्वः सर्वशास्त्रविशारदः ।
विनयज्ञो महोदारः प्रतापी सत्यसंगरः ॥५॥
समरेष्वपरावर्ती गम्भीरो[1] धनदर्पितः ।
मेघगम्भीरनिर्ह्रादी[2] जिगीषुः शत्रुतापनः ॥६॥
मत्तद्विप इव स्वैरं चचार जगतीमिमाम् ।

(पितुरनन्तरं तेनापि धर्मतो राज्यपालनम्)

तस्यैवं वर्तमानस्य पिता मृत्युमुपागतः ॥७॥
पितर्युपरते श्रीमाञ्छशास पितृवद्भुवम् ।
जगत्याः सर्ववृत्तान्तं चारैः कैश्चिद्विवेद सः ॥८॥
स्वपुरे स्वयमङ्गेषु चरितं वेद सत्सु ।

(कदाचिन्निशीथे निगूढं संचरतस्तस्य पुराद्बहिर्विप्रप्रवरदर्शनम्)

एकाकी चैकदा धन्वी नृपः स्वैरकथा नृणाम् ॥
श्रोतुं निशीथे निर्गत्य सर्वतो व्यचरत्पुरम् ।
आपणेषु च रथ्यासु चत्वरेषु गृहेषु च ॥१०॥

---

1. बलदर्पितः B E F.
2. धीरो गभीर° D ; धीरगम्भीर° E F.

सर्वद्वारेषु वप्रेषु सरसीषु वनेषु च[1] ।
उपकार्यासु चैत्येषु देवतायतनेषु च ॥११॥
शस्त्रशालासु तीर्थेषु वनेषूद्यानभूमिषु ।
संचरन्विप्रमासीनं शमीमूले पुराद्बहिः ॥१२॥
ददर्श राजा निर्भीको ज्वलन्तमिव पावकम् ।
प्रसाधिततनुं शान्तं साक्षात्कृतसुदर्शनम् ॥१३॥
संप्राप्तसर्व[2]कामं तं योगारूढमकल्मषम् ।
[3]प्रश्रयावनतो भूत्वा पप्रच्छेदं महीपतिः ॥१४॥

(तद्वृत्तान्तजिज्ञासो राज्ञस्तं प्रति प्रश्नः)

कस्त्वं किमर्थमधुना वृक्षमूलमुपाश्रितः ।
[4]कस्मादुपागतः सर्वमाचक्ष्वानघ पृच्छते ॥१५॥

(योगारूढस्य तस्य राजप्रश्नमजानतो मौनीभावः)

एवमुक्तोऽपि योगस्थो न वेदैतदुदीरितम् ।
तथा पुनःपुनश्चोक्तो राजानं नाभ्यभाषत ॥१६॥

(बलाद्ग्रहीतुमुद्युक्तस्य राज्ञो विप्रप्रभावात्स्तम्भीभावः)

बलाद्ग्रहीतुमारेभे ब्राह्मणं कुपितो नृपः ।
ततस्तस्य प्रभावेण स्तब्धचेष्टोऽभवत्तदा ॥१७॥

---

1. वनेषूपवनेषु च E F.
2. ०कामान्तं A B E F.
3. प्रस्तूयावनतो D.
4. याथातथ्येन तत्सर्वमाचक्ष्वानघ पृच्छतः A B F.

(विस्मितेन राज्ञा स्तुतिभिर्विप्रप्रसादनम्)

स्तब्धमात्मानमालक्ष्य विस्मयं परमं ययौ ।
स्तुतिभिस्तोषयामास[1] तं प्रणम्य ततस्ततः ॥१८॥

(प्रसन्नेन विप्रेण स्ववृत्तान्ताविष्करणम्)

तुष्टः स योगादुत्थाय जगादेदं वचो नृपम् ।
सालग्राम[2] इति ख्यातं विष्णुस्थानमनुत्तमम् ॥
नित्यं संनिहितस्तत्र चक्ररूपी जगत्पतिः ।
तत्र चक्राङ्कितं सर्वं स्थावरं जङ्गमं च यत् ॥२०॥
तत्र प्रवेशमात्रेण जन्तवो वीतकल्मषाः ।
तत्र त्यक्तशरीरास्तु यान्ति निर्वाणमुत्तमम् ॥२१॥
तस्मिन्देशे समुत्पन्नो ब्राह्मणः शिष्टसंमतः ।
सुदर्शनप्रभावेण साधिताखिलसाधनैः[3] ॥२२॥
गम्यते पौष्करं तीर्थं मयाऽद्य जगतीपते ।
निशि मार्गवशात्प्राप्तः[4] पुरमेतत्तवर्धिमत् ॥२३॥
पिहितद्वारमालक्ष्य शमीमूलमिह श्रितः[5] ।

(विदितवृत्तान्तेन राज्ञा स्वपुरे ब्राह्मणानयनम्)

एवमुक्तस्ततो राजा सत्कृत्यैनमनिन्दितम् ॥२४॥

---

1. चाटुभिः A B E F.
2. सालग्राममिति D.
3. भाविता° A B.
4. अहमिति शेषः.
5. °मूलमुपाश्रितः B E F.

प्रावेशयत्पुरीं रम्यां तत्राप्यायतनं हरेः ।
तत्रोषितस्तु तां रात्रिं सर्वसत्कारपूर्वकम् ॥२५॥
अपरेद्युर्द्विजो गन्तुमारेभे पुष्करं प्रति ।

(स्वस्मै हितमुपदेष्टुं ब्राह्मणे राजप्रार्थना)

राजा तु कृतपूर्वाह्णकर्माणं तमभाषत ॥२६॥
साधूनां दर्शनं पुण्यं समस्ताभीष्टसाधनम्[1] ।
इति श्रुतमतो भाषे भगवन्किं हितं मम ॥२७॥
यथेह विन्देय सुखं परत्राप्यसपत्नकम्[2] ।
तथा प्रसादं कुरु मे करुणार्द्रमना ह्यसि ॥२८॥

(प्रसन्नेन तेन राज्ञे साङ्गसौदर्शनमहामन्त्रोपदेशः)

ततः प्रसन्नो राजानमुपसन्नं[3] मुने द्विजः ।
सौदर्शनं महामन्त्रं षड्वर्णं सर्वसाधकम् ॥२९॥
सत्कारपूर्वकं तस्मै नृपायोपादिशत्तदा ।
साङ्गमन्त्रं तथा ध्यानं साधनं यन्त्रमेव च ॥३०॥
अस्त्रमन्त्रांस्तथा सर्वान्प्रवर्तकनिवर्तकान् ।

---

1. °साधकम् E F.

2. °कः A B F.

3. अत्र अभिलक्ष्येति पदमध्याहृत्य वाक्यं योजनीयम् । उपसन्नपदं च "तस्मै स विद्वानुपसन्नाय सम्यक्प्रशान्तचित्ताय शमान्विताय" इत्यादि श्रुतिप्रतिपादितानामवश्यं-भाविनां शिष्यगुणान्तराणामुपलक्षकम् । तथा च स द्विजः प्रश्रयमृदुवचनादिभिर्लिङ्गै राजानं प्रशान्तचित्तत्वादिगुणयुक्तं ब्रह्मविद्योपदेशयोग्यमभिलक्ष्य साङ्गं सौदर्शनमहामन्त्रं तस्मा उपादिशदिति संबन्ध इति.

परिच्छदानि पञ्चाशद्यन्त्रितानि महामुने ॥३१॥
सर्वं तस्मै प्रदायासौ गन्तुं समुपचक्रमे ।

(राज्ञा गुरवे बहुदक्षिणाप्रदानम्)

राजा च परमप्रीतो द्रव्यजातमुपानयत् ॥३२॥
गवां सहस्रं कोटिं च सुवर्णानां तथा मुने ।
रत्नपूर्णानि हैमानि पात्राण्यन्यानि सप्त च ॥३३॥
तथा भूयांसि वासांसि महार्हाणि च भूपतिः ।
ग्रामानष्टौ च गुरवे प्रादात्परमधार्मिकः ॥३४॥

(गुरुणा तद्द्रव्याग्रहणपूर्वकं स्वाभिमतदेशगमनम्)

न चैच्छद्ब्राह्मणस्तत्र [2]दक्षिणाः समुपाहृताः ।
किं कार्यमेभिर्नृपते सर्वं संकल्पिते भवेत् ॥३५॥
यथेष्टं विनियुङ्क्ष्वैतदित्युक्तः प्राह भूपतिः ।
अवश्यं गृह्यतामेतन्न चेन्नैवास्मि साधकः ॥३६॥
त्यज्यतां वा यथेष्टं भो मद्दत्तं दत्तमेव हि ।
इत्युक्तो ब्राह्मणोऽप्याह राजानममितौजसम् ॥
मदर्थमर्थजातं तद्ब्राह्मणेभ्यः प्रदीयताम् ।
इत्युक्त्वा प्रययौ विप्रो भूपतिश्चैनमन्वयात् ॥३८॥
निवर्तितः स गुरुणा ब्राह्मणेभ्यो धनं ददौ ।

---

1. परिच्छन्दानि पक्वानि यन्त्रितानि (?) D ; अत्र पाठद्वयमपि चिन्त्यम्.
2. दक्षिणार्थमुपाहृतम् D.

(गुरुवचनात्तद्वनं विप्रसात्कृतवतो राज्ञो धर्मतो राज्यप्रशासनम्)

तस्मिन्गते महाराजो विप्रसात्कृत्य तद्वनम् ॥
अन्वशात्पृथिवीमेतां त्रिदिवं मघवानिव ।
नक्तंदिवं विभज्यैव धर्माधर्मावविरोधिनौ ॥४०॥
अर्थकामौ यथाकालमसेवत महीपतिः ।
राजधर्मेषु चान्येषु नात्यवर्तिष्ट [1]किंचन ॥४१॥
एवं च मानवं मार्गमनुतिष्ठन्महीपतिः ।
धर्म्येण पालनेनैव प्रजा रञ्जयति स्म सः ॥४२॥

(वश्यावश्यपरराष्ट्रादिबुभुत्सया कदाचिदमात्यान्प्रति राज्ञः प्रश्नः)

एकदा मन्त्रिणः सर्वानाहूयास्थानमण्डपे ।
पप्रच्छ पृथिवीपालः के च वश्या उतेतरे ॥४३॥
देशेषु भूमिपालेषु प्रकृतिष्वथवा मम ।
ब्रूत सर्वं हि जानन्ति भवन्तश्चारचक्षुषः ॥४४॥

(मन्त्रिणां प्रतिवचनम्)

इति प्रतिसमादिष्टास्ते सर्वे मन्त्रिणोऽवदन् ।
देव त्वयि महीमेतां शासत्येव परंतपे ॥४५॥
प्रतिपक्षाः प्रलीयन्ते तपत्यर्के यथा तमः ।

(तत्र कृत्स्नस्यापि भूमण्डलस्य वश्यत्वप्रतिपादनम्)

साऽधुना पृथिवी वश्या सशैलाम्बुधिपत्तना ॥

---

1. कश्चन D.

दिवीव देव राजानः सर्वे द्वारि निवारिताः ।
तव प्रकृतिवर्गेषु का कथा जगतीपते ॥४७॥

(देवादीनां वश्यत्वाभावप्रतिपादनम्)

न च देवा न गन्धर्वा नासुरा न च पन्नगाः ।
यथा वयं ते सेवन्ते भवन्तं परमेश्वरम् ॥४८॥
देवः प्रमाणमिति ते विज्ञाप्यार्थमुपारमन् ।

(पुनरमात्यान्प्रति राज्ञो देवादिविजयोपायप्रश्नः)

कीर्तिमाली च तच्छ्रुत्वा देवादीनां जिगीषया ॥
व्यजृम्भत तदा सर्वान्मन्त्रिणश्चाब्रवीदिदम् ।
कथमेतान्विजेष्यामो बलिनो वीर्यशालिनः ॥५०॥
विचित्रयोधिनो दृप्ता मायाबलसमन्विताः ।
अनुकूला विशिष्टाश्च लोकान्तरमुपाश्रिताः ॥५१॥
यथा भवन्ति ते वश्यास्तथा वदत मा चिरम् ।

(तेषां प्रतिवचनम्)

इत्युक्तास्ते महाराजमूचुः संमन्त्र्य मन्त्रिणः ॥
एतानद्यैव यास्यामो विजेष्यामश्च संयुगे ।

(स्वपक्षे बलसमृद्धिनिरूपणपूर्वकमभिषेणनोद्योगजननम्)

अस्मद्वरूथिनी सर्वा चतुरङ्गबलान्विता ॥५२॥

---

1. ततः A B E F.

मेरुमन्दरसंकाशा गजाः परमदुर्जयाः ।
एकैकमेव पर्याप्तं शत्रुसैन्यप्रमर्दने ॥५४॥
एवंविधानां नागानां नियुतानि दशाभवन् ।
मत्तानां तुरगाणां च पञ्चकोट्यः परंतप ॥५५॥
तिस्रः कोट्यश्च संपूर्णाः स्यन्दनानां तथाऽभवन् ।
बद्धापदानमानानां शूराणामनिवर्तिनाम् ॥५६॥
चतुर्विधपदातीनामक्षौहिण्यश्चतुर्दश ।
निशितास्त्राणि नः संख्ये यान्यसंख्यानि भूपते ॥
एकतः सर्वमेतच्च एकतः केवलो बली ।
अतिरिक्तो भवान्वीर्यादिति मन्यामहे वयम् ॥
किंच दिव्यानि चास्त्राणि लब्धवानसि भूसुरात् ।
एभिः परिवृतस्यैवं कस्तिष्ठेत्संमुखे तव ॥५९॥
संवर्तवर्तिनः शंभोर्भूतानीव दिधक्षतः ।
यत्र यत्र जिगीषा ते वर्तते तत्र मा चिरम् ॥
नियुङ्क्ष्वास्मान्महाबाहो जयं विद्धि करे स्थितम् ।

(मन्त्रिवचनात्प्रथमं राज्ञो नागलोकाभिषेणनम्)

इत्युक्तः परमप्रीतः कीर्तिमाली महाबलः ॥६१॥
सर्वानमात्यानाहूय तत्तत्सेना मया हृता ।
नागलोकं प्रयात्वद्य युध्यतामद्य पन्नगैः ॥६२॥

1. ०द्रुर्मदाः D.
2. बलप्रधानमानानां A B E F.

अहं चाद्यैव यास्यामि समूलबलवाहनः ।
इत्युक्त्वा तैः परिवृतो जगाम स महीपतिः ॥६३॥

(गारुडास्त्रप्रभावेण तत्र राज्ञो विजयप्राप्तिः)

तत्र तैः पन्नगैर्युद्धमभवद्रोमहर्षणम् ।
ततोऽचिरेण कालेन दिव्यास्त्रेण गरुत्मतः ॥६४॥
विजयं प्राप्तवांस्तत्र तेभ्यो रत्नादिकं करम् ।
गृहीत्वा दैत्यनाशाय मनश्चक्रे महात्मना ॥६५॥

(तथा दैत्यविजयः)

तैर्युद्धमभवत्तीव्रं चिरकालं महामुने ।
नाशयित्वा तु तत्सैन्यं विजयं परमं ययौ ॥६६॥

(यक्षगन्धर्वादिजयपूर्वकं राज्ञः स्वनगरगमनम्)

ततश्च यक्षगन्धर्वान्सिद्धविद्याधरानपि ।
निर्जित्य समरे सर्वान्किंकरानकरोद्बली ॥६७॥
एतान्विजित्य समरे स्वपुरं पुनराययौ ।

(तत्र स्वपरिवारेषु देवानामदर्शनादिन्द्रं प्रति संदेशप्रेषणम्)

आस्थानसद्मन्यासीनो राजभिः परिवारितः ॥६८॥
तथा गन्धर्वयक्षैश्च दानवैः पन्नगेश्वरैः ।
चक्रवर्ती निजास्थाने नामरान्ददृशे तदा ॥६९॥
ततो मनोजवं नाम गन्धर्वमिदमूचिवान् ।
अद्य त्रिदिवमभ्येत्य वचनान्मम वासवम् ॥७०॥

ब्रूया ऐरावतं नागं कुलिशं कल्पकं तथा ।
अष्टौ चाप्सरसः क्षिप्रं मदर्थं विसृजेति वै ॥७१॥

(राजसंदेशान्मनोजवनाम्नो दूतस्यामरावतीगमनम्)

मनोजवस्तथेत्युक्त्वा शिरसा चक्रवर्तिनः ।
मालामिवाज्ञां संगृह्य प्रययावमरावतीम् ॥७२॥

(तत्रास्थानमण्डपे वासवदर्शनम्)

प्रविश्य तत्पुरं रम्यमुपमानं परं पुराम् ।
वासवं वसुभी रुद्रैरादित्यैश्च समावृतम् ॥७३॥
आस्थानमण्डपासीनमप्सरोगणसेवितम् ।
विश्वावसुमुखैः सिद्धैः स्तूयमानं शचीपतिम् ॥
ददर्श स तदा देवं नाट्यदर्शनलालसम् ।
दृष्ट्वा प्रणम्य तुष्टाव विरते नृत्यकर्मणि ॥७५॥

(वासवेन दूताभिनन्दनम्)

[1]ततः प्रीतः सुरपतिर्मनोजवमवैक्षत ।

(दूतेनेन्द्राय राजसंदेशनिवेदनम्)

[2]विमलीकृतमात्मानं मन्यमानः स वीक्षितैः ॥
व्यजिज्ञपद्यथावृत्तं वृत्रहन्त्रेऽविलम्बितम् ।
देव भूमण्डले कश्चित्कीर्तिमालीति विश्रुतः ॥

1. "दृष्ट्वा प्रीतः" इति सर्वत्र पाठः.
2. विषयीकृत° A B E F.

चक्रवर्ती सुरपते देवायैतन्न्यवेदयत् ।

(दूतेन राजोक्तसंदेशप्रकारानुवादः)

विनिर्जिता मया लोकाः सर्वे त्रिदिवमन्तरा ॥
भवन्तं द्रष्टुमिच्छामि सांप्रतं [1]त्रिदिवेश्वर ।
आरोहणार्थं नागेन्द्रमैरावतमवारितम् ॥७९॥
कल्पकं कुलिशं चाष्टौ योषितो विसृजेह नः ।
इत्थमाज्ञापितं तेन महाराजेन गोपते ॥८०॥
देवः प्रमाणमत्रेति विरराम मनोजवः ।

(संदेशश्रवणात्कुपितस्येन्द्रस्य तत्प्रतिक्रियाचरणम्)

ततो विहस्य मघवानास्थाने देवसेविते ॥८१॥
प्राह गम्भीरया वाचा विज्ञायैतां विडम्बनाम् ।
वज्रमैरावतं नागं प्रेषयाम्यद्य ते उभे ॥८२॥
आगत्य स्वयमन्यांस्तु समाहृत्य प्रयात्वसौ ।
इत्युक्त्वा प्रेषयामास वज्रमैरावतं गजम् ॥८३॥

(सवज्रेणैरावतेनादृश्येन सता राजसैन्यविनाशनम्)

निष्क्रम्योभौ विविशतुः [2]कीर्तिमालेर्महापुरीम् ।
प्रविश्यैरावतो नागो वज्रमादाय वाहिनीम् ॥

---

1. त्रिदशेश्वरम् A B E F.
2. कीर्तिमालिशब्दस्येकारान्तत्वमार्षम्.

अदृष्टेनैव रूपेण जघानैनां महामुने ।

(भीतैर्जानपदै राज्ञे तद्वृत्तान्तनिवेदनम्)

हन्यमानेषु सैन्येषु गजवाजिभटात्मसु ॥८५॥
सर्वे जानपदा भीता भूपायैतन्न्यवेदयन् ।
देव सामोद्भवा नागा निहता भुवि शेरते ॥८६॥
तथा हयोत्तमाः शूरा भटाः परमशोभनाः ।
अकस्मादेव दृश्यन्ते निहता जगतीपते ॥८७॥

(सैन्यविनाशश्रवणादुःखितस्य राज्ञो गुरुसंनिधौ तत्कारणप्रश्नः)

एतच्छ्रुत्वा महाराजः शोकेन महता वृतः ।
पुरोधसं समाहूय वचनं चेदमब्रवीत् ॥८८॥
वारणा वाजिनो योधा हन्यन्ते कारणादृते ।
न रोगो दृश्यते चैषु न तापः कालकल्पितः ॥
नाभिचारः परकृतो दृश्यते सुनिरूपितः ।
किमेतच्चिन्त्यतां ब्रह्मन्भ्रमतीव च मे मनः ॥९०॥

(गुरुणा देवकोपस्यैव तत्कारणत्वेन निवेदनम्)

इत्युदीरितमाकर्ण्य पुरोधाश्चाप्यचिन्तयत् ।
चिन्तयित्वा जगादैतद्देवकोपादुपागतम् ॥९१॥
इति शङ्के न शोकस्य वशमागाः परंतप ।

---

1. °कोपादिनाऽऽगतम् E F.

(अत्रान्तरे मनोजवसमागमः)

इति चिन्तयतोरेव तयोरागान्मनोजवः ॥९२॥
प्रणतः प्राञ्जलिस्तस्थौ महाराजस्य पार्श्वतः ।

(मनोजवं प्रति राज्ञः प्रश्नः)

मनोजव किमानीतमुक्तरत्नचतुष्टयम्[1] ॥९३॥
किमाह वासवः सर्वं कथयाद्याविलम्बितम् ।

(मनोजवेन राज्ञे वासवकृतव्यापारनिवेदनम्)

इत्युक्तस्तेन सकलं पृष्टमस्मै न्यवेदयत् ॥९४॥
राजवाक्यस्य कथनमतो मघवतः स्मयः ।
वज्रैरावतयोस्तेन प्रेषणं तद्वचस्ततः ॥९५॥

(स्वसैन्यविनाशमैरावतकृतं ज्ञातवता राज्ञा वारणास्त्रेणैरावतस्तम्भनम्)

एवं तेनेरितो राजा निश्चित्यैरावतक्रियाम् ।
पुरोधसा प्रतीकारं तस्य संमन्त्र्य तत्क्षणात् ॥
व्यसृजद्वारणाख्यास्त्रं दिव्यं वारणवारणम् ।
तदस्त्रं तु गजं प्राप्तं निश्चेष्टः सोऽभवत्तदा ॥९७॥

(तच्छ्रुतवता वासवेन युद्धार्थं देवसैन्यप्रेषणम्)

स्तब्धमैरावतं वज्रं तेनास्त्रेण महात्मना ।
व्यजिज्ञपुर्मघवते सुराश्चैरावतानुगाः ॥९८॥

---

1. °मुत्तरं तु चतुष्टयम् (?) A B; अत्र रत्नशब्दः स्वजातिश्रेष्ठपरः । रत्नचतुष्टयं च एकसप्ततितमश्लोकोक्तप्रकारेण ऐरावत-कुलिश-कल्पवृक्षा-प्सरोरूपं बोध्यम्.

तच्छ्रुत्वा परमक्रुद्धो मघवान्समनह्यत ।
संनद्धमिन्द्रमालक्ष्य सुराश्चुक्षुभिरे तदा ॥९९॥
प्रेषितास्तेन ते सर्वे सैनिकास्तत्पुरं ययुः ।
प्रलयोज्जृम्भिताम्भोधिकल्पं सैन्यं शतक्रतोः ॥

(ततो देवमानुषसेनयोर्घोरयुद्धप्रवृत्तिः)

विलोक्य त्वरितो राजा ससैन्यो निर्ययौ पुरात् ।
ततः प्रववृते युद्धं देवमानुषसेनयोः ॥१०१॥

(प्रवृत्तयुद्धक्रमवर्णनम्)

अदृष्टचरमाश्चर्यं हाहाकारि भयावहम् ।
दिव्यदुन्दुभिनिर्घोषैः शङ्खभेरीरवैरपि ॥१०२॥
क्ष्वेलितैस्तलशब्दैश्च विहायः समपूर्यत ।
नागा युयुधिरे नागैः पत्तिभिः पत्तयस्तथा ॥१०३॥
स्यन्दनैः स्यन्दनाश्चाश्वैरश्वाश्चैवं[1] परस्परम् ।
नाराचैः परिघैः शूलैः पट्टसैर्मुद्गरैरपि[2] ॥१०४॥
कार्मुकैः शक्तिभिः खड्गैः[3] प्रासैः कुन्तैः परश्वधैः ।
एवं नानाविधैः शस्त्रैर्[4]निजघ्नुस्ते परस्परम् ॥१०५॥

---

1. ॰वं D.
2. मुसलैरपि D.
3. मुद्गरैः A B.
4. अस्त्रैः D.

केचिन्निकृत्तशिरसः केचिच्छिन्नोरसः परैः ।
केचिदुत्कृत्तशस्त्रास्तु विद्धवक्षांसि[1] कानि च ॥१०६॥
छिन्नहस्ता गजाः केचित्खड्गनिर्भिण्णमस्तकाः ।
भल्लैर्निर्भिण्णहृदया दृश्यन्ते तुरगास्तथा ॥१०७॥
[2]प्रवृत्ता रक्तसरितो [3]हस्तिस्यन्दनवाजिनाम् ।
निपतच्छत्त्रसंभिन्ना दृश्यन्ते रणभूमयः ॥१०८॥

(तत्र जिगीषुणेन्द्रेण स्वसेनाधिपतीनां प्रचोदनम्)

एवं प्रवृत्ते संग्रामे जयार्थी पाकशासनः ।
देवसेनापतीन्सर्वांश्चोदयामास सत्वरः ॥१०९॥

(देवसेनापतीनां तात्कालिकजयप्राप्तिः)

तेन प्रवर्तिता देवा विद्राव्य नृपतेर्बलम् ।
विजयं लेभिरे सद्यः

(क्रुद्धेन राज्ञा दिव्यास्त्रविमोचनम्)

ततः क्रुद्धोऽभवन्नृपः ॥११०॥
विनष्टे स्वबले सोऽथ दिव्यास्त्राणि मुमोच ह ।
आग्नेयादीनि चास्त्राणि प्रवृत्तानि महामुने ॥१११॥

---

1. अत्र उरोवक्षःपदयोर्बाह्याभ्यन्तररूपप्रदेशभेदविवक्षयाऽपौनरुक्त्यम्.

2. इदमर्धं न दृश्यते A B E F पुस्तकेषु.

3. स्यन्दनानां वाजिनः स्यन्दनवाजिन इति प्रथमं षष्ठीतत्पुरुषः; ततो हस्तिनश्च स्यन्दनवाजिनश्चेति द्विपदघटितो द्वन्द्वः; न तु हस्तिनश्च स्यन्दनाश्च वाजिनश्चेति त्रिपदघटितः; अचेतनानां स्यन्दनानां रक्तसरित्संबन्धित्वायोगेन स्यन्दनपदस्य द्वन्द्वघटकत्वासंभवात्, इति ध्येयम्.

(तेषामपीन्द्रेण निवारणान्निर्विण्णेन राज्ञा सुदर्शनयन्त्रघटितवितान-
समाश्रयणम्)

निवृत्य बलभित्क्रुद्धः प्रत्यस्त्रैस्तान्यवारयत् ।
ततो निर्वेदमापन्नः कीर्तिमाली द्विजोत्तमात् ॥
लब्धं विमानं सस्मार तत्तथाऽकारयत्ततः ।
सुदर्शनमहायन्त्रयन्त्रितं सवितानकम् ॥११३॥
कृत्वा निषेदिवांस्तस्य छायायां स महीपतिः ।

(राजप्रयुक्तेन वैष्णवचक्रेण देवसैन्यप्रतिहतिः)

प्राहिणोद्विष्णुचक्रं तु[1] महास्त्रप्रभवं परम् ॥११४॥
तेजसा विश्वमापूर्य विरराज विहायसि ।
तस्यैव तेजसा सर्वे सुराः प्रतिहता रणे ॥११५॥
विनिघ्नाश्चेष्टितुं नैव शेकुर्देवगणा मुने ।

(वासवप्रयुक्तानां दिव्यास्त्राणामपि तस्मिन्विष्णुचक्रे प्रविलयः)

ततः क्रुद्धः स मघवान्दिव्यास्त्राणि व्यसर्जयत् ॥
तानि सर्वाणि निर्गत्य विष्णुचक्रे निलिल्यिरे ।
सर्वास्त्रप्रकृतौ तस्मिञ्छलभा इव पावके ॥११७॥
ततश्चिक्षेप शस्त्राणि सर्वाण्यपि पुनःपुनः ।
तानि तत्रैव लीनानि सरितः सागरे यथा ॥११८॥

1. स महास्त्रप्रवरं वरम् A B E F.
2. ताम्यप्यत्रैव D.

(अन्ततो वज्रस्याप्यकिंचित्करत्वम्)

ततश्च परमक्रुद्धो वज्रं सुरसुपूजितम् ।
चिक्षेप तच्च तत्रैव तथैवान्तरधीयत ॥११९॥

(स्वपराजयाद्विस्मितस्य शक्रस्य राज्ञा सह सँल्लापः)

तद्दृष्ट्वा विस्मितः शक्रो राजपार्श्वमुपाययौ ।
कीर्तिमाली च देवेन्द्रं [1]वितानस्थः पुरःस्थितम् ॥
उत्थाय प्रणतो भूत्वा तुष्टाव शुभया गिरा ।
ततस्तुष्टः शचीनाथो राजानमिदमब्रवीत् ॥१२१॥
पुरा विमुक्तान्यस्त्राणि विफलानि तवाभवन् ।
अधुना विपरीतानि दृश्यन्ते कारणं वद ॥१२२॥

(राज्ञा सुदर्शनयन्त्रघटितवितानप्रभावात्स्वस्याजय्यत्वप्रख्यापनम्)

सुदर्शनमहायन्त्रयन्त्रितस्य प्रभावतः ।
वितानस्य [2]हरे प्राप्तमजय्यत्वमवेहि नः ॥१२३॥

(राजशक्रयोः सख्यकरणपूर्वकं स्वस्वस्थानगमनम्)

अतः परं महाराज सख्यं भवतु चावयोः ।
यन्मे तत्तव यत्ते स्यात्तन्मम स्यादिति ब्रुवन् ॥

1. 'विमानस्थं' इति सर्वत्र.
2. इन्द्रं प्रति संबोधनम्.

स ययौ त्रिदिवं देवः सबलायुधवाहनः ।
कीर्तिमाली च संतुष्टो विजयी स्वपुरं ययौ ॥१२५॥

इति श्रीपाञ्चरात्रे तन्त्ररहस्ये अहिर्बुध्न्यसंहितायां

सुदर्शनमहायन्त्रघटितवितानवैभववर्णनाय कीर्तिमाल्युपाख्यानवर्णनं नाम

पञ्चाशोऽध्यायः ।

ओम् ।

(आदितः श्लोकाः ३२३७)

---

ओम् ।

## अथ तारादिबीजाक्षरस्वरूप-तदर्थ-वर्णनं नाम

## एकपञ्चाशोऽध्यायः ।

ध्यातं सकृद्भवानेककोट्यघौघं हरत्यरम् ।
सुदर्शनस्य तद्दिव्यं भर्गो देवस्य धीमहि ॥

(उक्तार्थानुभाषणपूर्वकं तारादिमन्त्रार्थप्रश्नः)

श्रीनारदः ।

भगवन्भूतभव्येश भगनेत्रनिपातन ।
साधकानां हितार्थाय यन्त्रं नानाविधात्मकम् ॥१॥
नानामन्त्रमयं प्रोक्तं नानाशक्त्युपबृंहितम् ।
प्रदर्शितानि चास्त्राणि [1]द्वितयानीह शंकर ॥२॥
विधानमपि च प्रोक्तं दिव्यं माहाभिषेचनम् ।
उक्ता चोच्चावचा [2]शान्तिरियं ग्लपितयातना ॥३॥

---

1. विविधानीह A B C.
2. शान्तिर्दुरितग्लपितात्मना (?) D.

ऋग्भिरप्युदिता सम्यगस्त्रशक्तिरनेकधा ।
[1]नानाफला महावीर्या मन्त्रा एवात्र कारणम् ॥४॥
उक्ता भगवता पूर्वं मन्त्रास्ते तारकादयः ।
एषामर्थकृतं भावं वक्तुमर्हसि शंकर ॥५॥
[2]यत्तज्ज्ञानं महत्प्रोक्तं सर्वशास्त्रार्थसंभवम् ।
तत्ते मनोमयं सर्वं सर्वज्ञो ह्यसि शाश्वत ॥६॥

(मन्त्रार्थज्ञानप्रशंसापूर्वकं पृष्टार्थोत्तरकथनारम्भः)

अहिर्बुध्न्यः ।

शृणु नारद तत्त्वेन मन्त्राणामर्थजं यशः ।
यद्विज्ञानान्नरः शश्वत्सर्वज्ञत्वमवाप्नुयात् ॥७॥

(तत्र तारकस्य सर्वश्रैष्ठ्यप्रतिपादनम्)

तारको नाम यो भावः सारः सर्वगिरामयम् ।
प्रभवन्ति ह्यतः शब्दा अपियन्ति च तं पुनः ॥
अनेनाप्यायिताः शब्दा भावं पुष्णन्ति च स्वकम् ।

(मन्त्रसामान्येऽप्यर्थस्य त्रैविध्यम्)

स्थूलः सूक्ष्मः परश्चेति भावो मन्त्रे त्रिधा स्थितः ॥

---

1. नानाबला° D; नानाफलमहावीर्याः सर्वाः सर्वफलप्रदाः B C.
2. यत्र ज्ञानम् D.

(तत्र स्थूलादीनां सामान्यतो लक्षणम्)

स्थूलः संसर्गजो योऽर्थः सूक्ष्मः पदविभावितः ।
अप्रमेयादिभिर्भावैरक्षरस्थः परः स्मृतः ॥१०॥

(पुनः स्थूललक्षणम्)

संस्तुतैरन्वितैर्योगैः स्वस्ववाच्याभिधानतः ।
पुरुषार्थोऽविभागात्मा संसर्गो नाम भाव्यते ॥

(अथ सूक्ष्मलक्षणम्)

स्वरूपालोचनेनैव यः प्रतीतः पदे पदे ।
योगेन जन्यते भावः स सूक्ष्म उदितो बुधैः ॥

(अथ परलक्षणम्)

अप्रमेयादिभिर्भावैर्भावो यो वर्णसंश्रयः ।
स परः कथ्यते सद्भिरिति त्रेधाऽर्थसंस्थितिः ॥

(तत्र तारस्य स्थूलार्थप्रदर्शनम्)

ओतमस्मिन्मितं सर्वमित्यर्थः स्थूल उच्यते ।
ओकारेण मकारेण संसर्गस्तारकाश्रयः ॥१४॥

---

1. संस्कृतै° A B C E F.  2. योग्यैः E.

3. इत आरभ्य पञ्चचत्वारिंशश्लोकं यावत् प्रणवस्य स्थूलसूक्ष्मरूपार्थद्वयप्रदर्शन-व्याजेन माण्डूक्योपनिषन्निगूढः परमरहस्यार्थो विशदीक्रियते । अत एव वासुदेवादिव्यूह-चतुष्टयस्वरूप-तद्गुण-तत्कृत्यादिनिरूपणपरस्य कृत्स्नस्यापि पाञ्चरात्रवचनसंदर्भस्य माण्डूक्योपनिषदुपबृंहणरूपतया तन्मूलकत्वं श्रुतिमूर्धप्रसिद्धस्वतस्सर्वज्ञवासुदेवभाषिततया तद्वदेव वा स्वातन्त्र्येण प्रामाण्यं त्रय्यन्तनिष्णाताः संगिरन्ते.

द्वौ वर्णौ गमकावेतावोतस्य च मितस्य च ।
यत्किंचिद्भगवत्तोऽन्यत्तन्मितं सर्वमिष्यते ॥१५॥
शक्तिमान्भगवान्वाच्यस्तच्छक्तेः प्रविजृम्भणम् ।
संकल्पनीयः संकल्प इति यत्ते पुरोदितम् ॥१६॥
तत्र संकल्पनीयोऽर्थो भूतिः शुद्धेतरात्मिका ।
अव्याहता तु तत्प्रेक्षा संकल्पस्तत्सुदर्शनम् ॥
कल्प्यकल्पात्मकं सर्वं तदेतन्मितमिष्यते ।
मितं तदोतं सूत्रे[1] हि मणिवद्भगवत्यजे ॥१८॥
अवतिस्तु[2] प्रवेशार्थो गतिर्व्याप्तिः प्रवेशनम् ।
मितं प्रविष्टं देवेशे पुष्करे परमाणुवत् ॥१९॥
ओतो मिते च देवेशः प्रविष्टः सूत्रवन्मणौ ।
स्थूलोऽयं प्रणवस्यार्थः

(अथ सूक्ष्मार्थनिरूपणप्रतिज्ञा)

सूक्ष्मो[3]ऽथार्थो निरूप्यते ॥

(तत्रानिरुद्धप्रद्युम्नसंकर्षणानामखण्डभगवच्छक्त्यंशत्वकथनम्)

सृष्टि[4]स्थित्यन्तकारिण्यः शक्तयस्तिस्र ऊर्जिताः ।

---

1. सूत्रेण A B C D.
2. अवतिस्तत्प्रवेशार्थः D.
3. सूक्ष्मश्चार्थो A B C.
4. एवं स्थूलार्थनिरूपणद्वारा समस्तप्रणवप्रतिपाद्यब्रह्मस्वरूपात्मकं माण्डूक्यप्रथमखण्डार्थं प्रदर्श्य व्यस्तप्रणवप्रतिपाद्यानिरुद्धादिव्यूहचतुष्टयात्मको माण्डूक्यस्य द्वितीयादिखण्डत्रयार्थः सूक्ष्मार्थनिरूपणद्वाराऽत्र स्पष्टीक्रियत इति ज्ञेयम्.

पूर्णाया भगवच्छक्तेरेकस्या अंशतां गताः ॥२१॥

(क्रमेण तेषां प्रणवाक्षरत्रयप्रतिपाद्यत्वम्)

अकाराद्यक्षरै[1]स्त्रेतारूपिण्यः परमाद्भुताः ।

(तेषामेवैकैकस्य विश्व-तैजस-प्राज्ञरूपैकैकसंज्ञाभागित्वम्)

अकारशक्तिर्विश्वाख्या [2]उकारोत्था तु तैजसी ॥

मकारशक्तिः प्राज्ञाख्या

(अनिरुद्धादिरूपप्रदर्शनप्रतिज्ञा)

तासां रूपं पुनः शृणु ।

(तत्र विश्वाख्यानिरुद्धरूपप्रदर्शनम्)

[3]एकोनविंशतिमुखा [4]विश्वाख्या विश्व[5]धारिणः ॥

(अनिरुद्धस्यैव स्थानविशेषनिर्देशपूर्वकं भोग्यविशेषनिरूपणम्)

नानास्त्रष्टिमयी विश्वा भुङ्क्ते स्थूलानि [6]जाग्रती ।

---

1. °त्रेधा° A.

2. उकारार्था A B C.

3. मध्यमं तु मुखं गजमुखाकारं, पार्श्वद्वयेऽपि नव नव मुखानि पुरुषमुखाकाराणि, इत्येकोनविंशतिमुखत्वं बोध्यम् । इदमुपलक्षणं सप्ताङ्गत्वस्यापि । "सप्ताङ्ग एकोनविंशतिमुखः" इति श्रुतौ दर्शनात् । चत्वारो हस्ताः, द्वौ पादौ, गजमुखत्वाद्गजहस्त एक इति सप्ताङ्गत्वम् ।

4. विश्वात्मा D.

5. °धारिणी A B C.

6. अस्य च शब्दस्य स्थानविशेषनिर्देशपरत्वम्, "जागरितस्थानः" इति श्रुतौ दर्शनात् । यत्र स्थित्वा जागर्ति तच्चक्षुर्जागरितम्, अधिकरणे क्तप्रत्ययः, तदेव स्थानं यस्य स जागरितस्थानः चक्षुस्थान इत्यर्थः, इति हि तदर्थः.

द्रव्यक्रियागुणाकारं नानासामान्यचित्रितम् ॥२४॥
स्थूलं तर्पयते विश्वं विश्वां सृष्टिमयीमजाम् ।

(प्रद्युम्नस्य भोग्यविशेष-स्थानविशेष-निरूपणम्)

[1]विश्वं तदेव सूक्ष्माख्यमन्तःकरणसंमितम् ॥२५॥
स्वाप्नीं तर्पयते शक्तिमुकारस्थां तु तैजसीम् ।

(संकर्षणस्य भोग्यविशेष-स्थानविशेष-निरूपणम्)

[2]विश्वं तदेव सूक्ष्मत्वं विहायानन्दतां गतम् ॥
परां तर्पयते शक्तिं सौषुप्तिं प्राज्ञनामिकाम् ।
उकारशक्तिस्त्रिमुखा सूक्ष्मा स्वाप्नी पुरोदिता ॥
निरञ्जना मकाराख्या शक्तिरानन्दभोजिनी ।

---

1. अत्रायमर्थः—विश्वशब्दः स्थूलजगत्परः । यदेवानिरुद्धस्य भोग्यभूतं स्थूलं जगत्, तदेवेदानीं वासनाजन्यतया बाह्यार्थेभ्यो विविच्य विलक्षणतया ज्ञायमानत्वेन प्रविविक्तापरपर्यायसूक्ष्मशब्दशब्द्यमानं, अन्तःकरणसंमितं बाह्यार्थज्ञानजन्यवासनासचिवेनान्तःकरणसंज्ञेन चित्तेन सम्यक्प्रमितं ज्ञातं सत्, स्वाप्नीं स्वप्ननिर्वाहकत्वेन कण्ठदेशस्थां, उकारस्थां प्रणवस्य द्वितीयाक्षरे उकारे वाच्यतासंबन्धेनावतिष्ठमानां, तैजसीं तेजोमयचित्तस्थतया चित्तसंबन्धित्वेन तैजसनाम्नीं प्रद्युम्नशक्तिं तर्पयत इति.

2. अयमर्थः—विश्वशब्दः प्रविविक्तापरपर्यायसूक्ष्मजगत्परः । यदेव प्रद्युम्नस्य भोग्यभूतं सूक्ष्मं जगत्, तदेवेदानीं सूक्ष्मत्वमपि विहायानन्दरूपतां गतं सत्, सौषुप्तिं जीवस्य सुषुप्तिनिर्वाहकत्वेन हृत्कर्णिकाग्रस्थां, प्राज्ञनामिकां, प्रकर्षेण न ज्ञापयतीति प्राज्ञः, जीवस्वरूपातिरिक्तं बाह्यं स्वाप्नं वा किमपि वस्तुजातं जीवस्य न ज्ञापयतीति प्राज्ञनामिकां, प्रपूर्वादन्तर्णीतणिजर्थकान्नञुपपदाज्ज्ञाधातोः 'आतश्चोपसर्गे' इत्यनुशासनात्कप्रत्ययः । परां अन्तिमां मकारस्थामिति यावत् शक्तिं संकर्षणरूपां तर्पयते । तामिमां तृतीयशक्तिं विशिनष्टि, उकारेत्यादिना भोजिनीत्यन्तेन । आनन्दं स्वयं भुङ्क्ते जीवं च भोजयती-

(अनिरुद्धस्य स्थूलदेहाधिष्ठातृतया प्रवृत्तिः)

स्थूलं पुरमधिष्ठाय देहं विश्वा प्रवर्तते ॥२८॥

(प्रद्युम्नस्य सूक्ष्मदेहाधिष्ठातृतया प्रवृत्तिः)

सूक्ष्मं पुर्यष्टकं स्वाप्नी पुरमादाय वर्तते ।

(संकर्षणस्यानन्दाधिष्ठातृतया प्रवृत्तिः)

प्राज्ञा प्रवर्तते प्राप्य पुरमानन्दजं परम्[1] ॥२९॥

(अनिरुद्धस्य बहिःप्रज्ञत्वम्)

बाह्यप्रमाणभूमिष्ठा विश्वस्य स्थूलता दशा ।

(प्रद्युम्नस्यान्तःप्रज्ञत्वम्)

अन्तःकरणभूमिष्ठा सूक्ष्मता तस्य वै दशा ॥३०॥

(संकर्षणस्यानन्दमयत्वम्)

[2]सदानन्दमयी तस्य विश्वस्य परता दशा ।

(स्थूलत्वादिदशात्रयस्यानिरुद्धादिशक्तित्रयप्रीतिहेतुत्वम्)

एतास्तिस्रो दशास्तिस्रः शक्तीः संप्रीणयन्ति ताः ॥

---

स्यानन्दभोजिनी, वाच्यवाचकयोरभेदविवक्षया मकाराख्या सैषा संकर्षणरूपा तृतीया शक्तिः निरञ्जना निर्लेपा. विषयभोगाद्विना आनन्दमात्रभोक्तृत्वात्. नित्यपूर्णानन्दानुभवैकस्वरूपस्यानिरुद्धरूपेण स्थूलप्रपञ्चभोक्तृत्वं प्रद्युम्नरूपेण प्रविविक्तभोक्तृत्वं च क्रीडारूपमेव, क्रीडार्थमपि तादृशं भोक्तृत्वं शुद्धानन्दभोक्तुः संकर्षणस्य नास्तीति निरञ्जनत्वमिति.

1. पर° D.

2. सत्तानन्दमयी D; चिदानन्दमयी E.

अनिरुद्धादिरूपास्ता भोक्तृशक्तीर्विचिन्तयेत् ।

(अथ वासुदेवाख्यायाश्चतुर्थशक्तेर्नादप्रतिपाद्यत्वम्)

अर्धमात्रा तु या दिव्या [1]मकारोत्था प्रकाशिनी ॥

वासुदेवमयीं शक्तिं विद्धि तामनुपस्कृताम्[2] ।

(शक्तिचतुष्टयविलये सति अखण्डभगवच्छक्तेः स्तैमित्यरूपत्वम्)

तिसृणां सार्धमात्राणां विलये या विराजते ॥३३॥

तां विद्धि भगवच्छक्तिमनुच्चार्यां निरञ्जनाम् ।

(शक्तिचतुष्टयविलापनप्रकारः)

[3]उच्चरन्नोमिति व्यक्तं क्रमाद[4]दीर्वि[5]लोपयेत् ॥३४॥

शक्तीश्चतस्र उद्दिष्टा उत्तरोत्तरभूमिषु ।

---

1. मकारार्थप्रकाशिनी A B C E F.

2. अनुपस्कृताम्—जाग्रत्स्वप्नसुषुप्तिप्रवर्तकानामनिरुद्धप्रद्युम्नसंकर्षणानां तत्तत्प्रवर्तनरूपैर्व्यापारैरनाविष्टामित्यर्थः । "नान्तःप्रज्ञम्" इत्यादिश्रुत्या तुरीयस्य विश्वादित्रयवैधर्म्यप्रतिपादनात् । अत एव "कार्यकारणबद्धौ ताविष्येते विश्वतैजसौ । प्राज्ञः कारणबद्धस्तु द्वौ तु तुर्ये न सिध्यतः" इति मन्त्रार्थसंवादिश्लोकेनापि कार्यकारणबन्धनियमनव्यापारस्य कारणमात्रबन्धनियमनव्यापारस्य च तुर्ये प्रतिषेधं विदधता तुर्यस्य विश्वादिवैधर्म्यमेव स्पष्टीक्रियत इति ध्येयम्.

3. उच्चरेदोमिति A B C E F.

4. आदीः—अः आदिः यासामिति बहुव्रीहिः, द्वितीयाबहुवचनान्तं शक्तीरित्यस्य विशेषणम् ॥

5. विलापयेत् D.

(स्तैमित्यरूपायास्तस्याश्शक्तेः पञ्चमदशारूपत्वम्)

या न किंचिदिवाभाति न सती नापि चासती ॥
सर्वासां ग्रसनी दिव्या शक्तीनां पञ्चमी दशा ।

(प्रणवाभ्यासविशेषस्य तादृशशक्तिसाक्षात्कारहेतुत्वम्)

ओमित्युच्चरतः सम्यक्छाम्यतः क्रमतो मुने ॥
महाभासा निराभासा शक्तिः साऽन्तर्विजृम्भते ।

(तस्याश्शक्तेर्भगवदपृथक्सिद्धविशेषणीभूतलक्ष्मीरूपत्वम्)

अनन्या सा परा शक्तिर्विष्णोर्लक्ष्मीः सनातनी ॥
गौरी सरस्वती धेनुर्वाच्या वाच्यक्रमोज्झिता ।

(ओंकाराभ्यासिनो हृदये लक्ष्म्या निर्हेतुकं स्वस्वरूपप्रकाशनम्)

उदेति स्वयमेवान्तरोंकारं शृण्वतो मुने ॥३८॥

(भवद्रूपे परस्मिन्ब्रह्मणि भावरूपत्वं लक्ष्म्याः)

नित्ये निरञ्जने शुद्धे निष्कले निर्विकल्पके ।
विष्णौ भवितरि व्यक्तं भावो ब्रह्मणि वर्तते ॥

---

1. अयमत्राशयः—"यथा महार्णवे बुद्बुदानां महार्णवजलोन्मेषरूपत्वम्, बुद्बुदत्वावस्थाविगमे च महार्णवजलस्य बुद्बुदग्रसितृत्वम्, ग्रसनोत्तरं च जलस्य बुद्बुदत्वाकारेण सत्त्वाभावादसत्त्वम्, स्वरूपेण सत्त्वादसत्त्वाभावश्च; एवमनिरुद्धादिशक्तिचतुष्टयस्याप्यखण्डभगवच्छक्त्युन्मेषरूपत्वम्, अनिरुद्धत्वाद्यवस्थाविगमे चाखण्डशक्तेरनिरुद्धादिग्रसितृत्वम्, ग्रसनोत्तरं चाखण्डशक्तेरनिरुद्धत्वाद्याकारेण सत्त्वाभावादसत्त्वम्, स्वरूपेण सत्त्वादसत्त्वाभावश्च" इति.

(पौराणिकोक्तस्य ब्रह्मविष्ण्वादिसंज्ञाचतुष्टयस्य लक्ष्मीपरत्वम्)

ब्रह्मविष्णुशिवाख्याभिस्तथैवाव्याकृताख्यया ।
उक्ता चतसृभिर्दिव्या स्तूयते सैव पञ्चमी ॥४०॥

(पाशुपतोक्तस्येशादिसंज्ञाचतुष्टयस्यापि लक्ष्मीपरत्वम्)

ईशविद्यासमाख्याभिस्तथैव च शिवाख्यया ।
उक्ता चतसृभिः सैव शक्तिः पाशुपते मते ॥४१॥

(सांख्ययोगोक्तस्य संज्ञाचतुष्टयस्यापि लक्ष्मीपरत्वम्)

व्यक्ताव्यक्तपुमाख्याभिस्तथा कालाख्यया मुने ।
उक्ता चतसृभिः सैव शक्तिर्वै सांख्ययोगयोः ॥

(लक्ष्मीविशिष्टस्य परस्य ब्रह्मणो मुक्तप्राप्यत्वम्)

प्राप्य तां पञ्चमीं शक्तिं यदन्ते विरमत्यसौ ।
परं ब्रह्म परं धाम तद्विष्णोः परमं पदम् ॥४३॥

---

1. इत आरभ्य सप्तसप्ततिश्लोकपर्यन्तैरष्टत्रिंशता श्लोकैः परिमितमेकं पत्रं विनष्टं A पुस्तके.

2. अयमाशयः—असौ प्रणवाभ्यासाद्विमुक्तसंसारबन्धनः पुमान्, यथोक्तस्वरूपां लक्ष्मीरूपां पञ्चमीं शक्तिं प्राप्य, यदन्ते यदुपान्ते यस्य लक्ष्मीविशिष्टस्य परस्य ब्रह्मणः परिसर इति यावत्, विरमति ततः प्राप्यान्तराभावात्प्राप्यविषयकव्यापारोपरतिमान्भवति, तत् विष्णोः व्यापनशीलस्य, परमं समाभ्यधिकरहितं, पदं पद्यते गम्यते उपास्यते प्राप्यत इति वा पदं स्वरूपमित्यर्थः, तदेव पुनर्विशेष्यते परं ब्रह्म परं धामेति, तदेव बृहत्त्वादिगुणविशिष्टं, परं नत्वपरं हिरण्यगर्भादिरूपम्, तदेव परं धाम अपरिच्छिन्नतेजोरूपम्, यथोक्तलक्ष्मीसंबन्धादेव ह्यप्रमेयतेजोरूपत्वं परस्यापि ब्रह्मणः, यथोक्तमादिकविना—"अप्रमेयं हि तत्तेजो यस्य सा जनकात्मजा" इति । विष्णोः पदमिति व्यतिरेकनिर्देशस्तु "शिलापुत्रकस्य शरीरम्" इत्यादिवदौपचारिकः—इति.

(उक्तार्थस्यैव भङ्ग्यन्तरेण विशदीकरणम्)

अर्धमात्रोर्ध्वगां[1] दिव्यां दीर्घघण्टानदोपमाम् ।
अन्तरास्वादयञ्छक्तिमानन्दात्मानमव्ययाम् ॥
यमन्ते लभते भावं रूपं विष्णोस्तदुज्ज्वलम् ।
इति ते प्रणवस्यार्थः सूक्ष्मात्मा[2] संप्रदर्शितः ॥

(अथ परार्थनिरूपणम्)

योऽर्थः पराह्वयस्तस्य तमिदानीं निबोध मे ।
प्रणवं भावयेदेतदक्षरद्वितयात्मकम् ॥४६॥

(तत्र सृष्ट्याद्युन्मुखशक्त्युपहितस्य स्थूलचिदचिद्विशिष्टस्य ब्रह्मणोऽकारप्रति-
पाद्यत्वम्)

पञ्चकृत्यकरी शक्तिर्या हि सा वैष्णवी परा ।
तयैवोपहितं ब्रह्म नानाकारविकल्पवत् ॥४७॥
अभिधत्ते परं विष्णुं सृष्टिकृत्परमेश्वरः ।

(सृष्ट्याद्यनुन्मुखशक्त्युपहितस्य सूक्ष्मचिदचिद्विशिष्टस्य ब्रह्मण उकार-
प्रतिपाद्यत्वम्)

अव्यक्तपञ्चकृत्याऽसौ तूष्णींभूतेव राजते ॥४८॥

---

1. °मात्रोपगां B C E F.
2. सूक्ष्माख्यः B C E F.

निरञ्जना निराभासा [1]निश्चला वैष्णवी परा ।
सदा प्रतायमानाऽपि सूक्ष्मैर्भावैरलक्षणैः ॥४९॥
निर्व्यापारेव सा भाति स्तैमित्यमिव चोदधेः ।
तयैवोपहितं ब्रह्म निर्विकल्पं निरञ्जनम् ॥५०॥
अभिधत्ते परं विष्णुं व्यापी व्योमेश उज्ज्वलः ।

(ओंकारेण यथोक्तब्रह्मणोरभिन्नत्वबोधनम्)

[2]एकतानयनं यत्तदनयोर्वर्णयोर्द्वयोः । ॥५१॥
तदोमित्यक्षरं ब्रह्म परेयमजपा स्मृता ।
जगद्विलापनं रूपं तदेव प्रणवाह्वयम् ॥५२॥

(उक्तार्थध्याननिष्ठस्य योगनिष्ठासिद्धिः)

अत्र योऽवहितो योगी स समाधिं व्रजेत्परम् ।
इति ते त्रिविधाऽवस्था प्रणवस्य प्रदर्शिता ॥५३॥

---

1. निबद्धा D.

2. अत्रायमाशयः—प्रणवोऽयमकारोकाररूपाक्षरद्वयात्मक एव । तयोरेकीकरणेन निष्पन्नत्वात्तत्संध्यक्षररूप ओकारो न वर्णान्तरम् । मकारस्त्वविवक्षितः । तत्राक्षरद्वयमपि क्रमेण स्थूलचिदचिद्विशिष्टब्रह्मणः सूक्ष्मचिदचिद्विशिष्टब्रह्मणश्च वाचकम् । वाचकद्वयैकीकरणनिष्पन्नेन चौकारेण वाच्यद्वयैकीकरणबोधनप्रक्रियया यथोक्तविशेषणविशिष्टयोर्ब्रह्मणोः प्रकार्यैकत्वरूपमद्वैतं बोध्यत इति कार्यकारणयोरद्वैतसिद्धिरिति.

(अथ तारानुतारयोरर्थवर्णनप्रतिज्ञा)

तारानुतारयोरन्या विधास्तिस्रो निशामय ।

(तत्र तारायाः स्थूलार्थनिरूपणम्)

हरत्यशेषदुरितमीड्यते च सुरासुरैः ॥५४॥
मीयते चाखिलैर्मानैरतो ह्रीमिति कीर्त्यते ।

(अथ सूक्ष्मार्थनिरूपणम्)

इति ते स्थूल उद्दिष्टः सूक्ष्ममद्य निशामय ॥
सर्वत्र प्राणिति व्यक्तमलंभावं न गच्छति ।
नित्योन्नमनरूपा सा कलयत्यखिलं जगत् ॥५६॥

(अथ परार्थनिरूपणम्)

इति ते सूक्ष्म उद्दिष्टः परमद्य निशामय ।
परमात्मा परो योऽसौ देवो नारायणाह्वयः ॥५७॥
तस्यानपायिनी शक्तिर्देवी तद्धर्मधर्मिणी ।
मायाश्चर्यकरत्वेन पञ्चकृत्यकरी सदा ॥५८॥
व्यापिनी विष्णुरूपेण सर्वभावानुगामिनी ।
अशेषभुवनाधारसंकल्पप्रविजृम्भिणी ॥५९॥
समाश्रितानलंभावं विधाय विविधं जगत् ।
व्योमेशव्यापिनी स्पष्टं पुनः सा प्रतितिष्ठति ॥
परोऽयमर्थ उद्दिष्टस्तारिकाया महामुने ।

(अथानुताराया: स्थूलार्थनिरूपणम्)

श्रृणाति[1] निखिलान्दोषाञ्छ्रीणाति[2] च गुणैर्जगत् ॥
श्रीयते चाखिलैर्नित्यं[3] श्रयते च परं पदम् ।
लेशतः स्थूल उद्दिष्टः श्रिय एष महामुने ॥६२॥

(अथ सूक्ष्मार्थनिरूपणम्)

पुण्डरीकं परं धाम नित्यमक्षरमव्ययम् ।
शंकरी श्रयतां तत्र मर्दयन्ती भवोदधिम्[4] ॥६३॥
नानाश्चर्यकरी भूत्वा तत्तद्भोगप्रदानतः ।

(अथ परार्थनिरूपणम्)

इति ते सूक्ष्म उद्दिष्टः परमद्य निशामय ॥६४॥
प्रशान्तं यत्परं ब्रह्म नित्यशुद्धं निरञ्जनम् ।
षाड्गुण्यमचलं दिव्यं नारायणसमाह्वयम् ॥६५॥

---

1. "श्रृ—हिंसायाम्" इति क्रैयादिकाद्धातोर्लटि "पूञ्—पवने" इत्येवमादीनां "प्ली—गतौ" इत्यन्तानां त्रयोविंशतिधातूनां शिति परे ह्रस्वो भवतीत्यर्थकेन "प्वादीनां ह्रस्वः" इति सूत्रेण ह्रस्वे कृते रूपमिदं श्रृणातीति । पुरुषकारत्वेन स्वचरणकमलमुपाश्रितानामनादिकालसंचितान्संचेष्यमाणांश्च निखिलानपि कर्मरूपान्दोषान् श्रृणाति हिनस्ति विनाशयतीति श्रीरिति वाक्यतात्पर्यम्.

2. "श्रीञ्—पाके" इत्यस्मात्क्रैयादिकाद्धातोर्लटि रूपमिदं श्रीणातीति । जगच्छब्दविवक्षितं निखिलचेतनवर्गं स्वीयैः कारुण्यवात्सल्यादिभिर्मातृत्वप्रयुक्तैर्गुणैः श्रीणाति पचति मानसकाठिन्यापाकरणेन मृदूकरोतीति श्रीरिति भावः.

3. नित्यैः D.

4. भवाम्बुधिम् B C E F.

तद्धर्मधर्मिणी देवी शक्तिस्तस्यानपायिनी ।
मायाश्चर्यकरत्वेन पञ्चकृत्यकरी सदा ॥६६॥
व्यापिनी विष्णुरूपेण सर्वभावानुभाविनी ।
अशेषभुवनाधारसंकल्पप्रविजृम्भिणी ॥६७॥
समास्थिताऽनलंभावं विधाय विविधं जगत् ।
व्योमेशव्यापिनी स्पष्टं पुनः सा प्रतितिष्ठति ॥
अर्थोऽयमनुतारायास्ताराया इव वर्णितः ।

(अथोक्तसर्वार्थसंक्षेपः)

सर्ववाच्यार्थविषयं संक्षेपं शृणु नारद ॥६९॥
योऽसौ तवेरितो देवः परमात्मा सनातनः ।
शक्तिमानखिलावासः षाड्गुण्यपरिबृंहितः ॥७०॥
तद्धर्मधर्मिणी शक्तिरेका तस्यानपायिनी ।
सर्वभूतानुगा देवी स्तैमित्यमिव वारिधेः ॥७१॥
अत्यन्तात्पाल्पकांशेन सा स्वेनैव विभाव्यते ।
भाव्यभावकभेदेन भाव्या भूतिः सितेतरा ॥७२॥
भावको विष्णुसंकल्पः सुदर्शनसमाह्वयः ।
भूतिः शब्दार्थभेदेन द्विधा पूर्वा प्रवर्तते ॥७३॥
शब्दस्य शब्दनं यत्तदर्थं प्रति निरूप्यते ।
तत्क्रियारूपतो ज्ञेयं सौदर्शनमयं वपुः ॥७४॥

---

1. ०भावेन E F.
2. यत्तत्तदर्थं प्रति रूप्यते D.

शब्दभावो हि योऽर्थस्य कर्मीभावसमाश्रयः ।
सोऽपि [1]क्रियात्मभावेन सुदर्शनमयः स्मृतः ॥
अतः स्पन्दमयो विष्णोर्यः संकल्पः सुदर्शनम् ।
तन्मय्येव क्रिया सर्वा कारकस्था न संशयः ॥
सर्वः शब्दश्च सर्वश्च वाच्यो द्वेधा प्रवर्तते ।
गुणेन कर्मणा वाऽपि विधाऽन्या नैव विद्यते ॥
अतो नैव प्रवर्तन्ते वाचो ब्रह्मणि रूपतः ।
अवगाह्यतो ब्रह्म एँते तु गुणकर्मणी ॥७८॥
ते च सौदर्शने रूपे विशेषणमयात्मना ।
मन्त्रग्रामो हि यो यावान्ब्रह्मणि प्रविगाहते ॥
सुदर्शनप्रभावेण तत्सर्वमिति चिन्त्यताम् ।
इति ते गदितः सम्यक्संक्षेपः शास्त्रसंमतः ।
अस्य विस्तृतिमव्यग्रो मन्त्रेमन्त्रे निबोध मे ॥

इति श्रीपाञ्चरात्रे तन्त्ररहस्ये अहिर्बुध्न्यसंहितायां
तारादिबीजाक्षरस्वरूप-तदर्थ-वर्णनं नामैकपञ्चाशोऽध्यायः ।

ओम् ।

(आदितः श्लोकाः ३३१७)

---

1. क्रियानुभावेन B E F.
2. तन्मय्यथ क्रियाः सर्वाः A B.
3. अत्र छन्दोऽनुरोधादसंधिः.

ओम् ।

## अथ विष्णु-नारायण-वासुदेव-मन्त्रार्थनिरूपणं नाम द्विपञ्चाशोऽध्यायः ।

ध्यातं सकृद्भवानेककोट्यघौघं हरत्यरम् ।
सुदर्शनस्य तद्दिव्यं भर्गो देवस्य धीमहि ॥

(वृत्तानुवादपूर्वकं विष्ण्वादिमन्त्रार्थकथनप्रतिज्ञा)

अहिर्बुध्न्यः ।

तारताराऽनुताराणां स्वरूपं ते प्रदर्शितम् ।
स्थूलसूक्ष्मपरत्वेषु गुणकर्मनिमित्तजम् ॥१॥
मन्त्राणां विष्णुपूर्वाणामर्थमद्य निशामय ।

(तत्र सर्वमन्त्रसाधारणस्य नमःशब्दस्य स्थूलार्थनिरूपणे शब्दार्थप्रदर्शनम्)

प्रेक्षावतः प्रवृत्तिर्या प्रह्वीभावात्मिका स्वतः ॥२॥
उत्कृष्टं परमुद्दिश्य तन्नमः परिगीयते ।

(उत्कृष्टापकृष्टभेदेन चेतनद्वैविध्यम्)

लोके चेतनवर्गस्तु द्विधैव परिकीर्त्यते ॥३॥
ज्यायांश्चैव तथाऽज्यायान्नेवाभ्यां विद्यते परः ।

(अनवधिकातिशयप्रकर्षविशिष्टस्य ज्यायःशब्दमुख्यार्थत्वम्)

कालतो गुणतश्चैव प्रकर्षो यत्र तिष्ठति ॥४॥
शब्दस्तं मुख्यया वृत्त्या ज्यायानित्यवलम्बते ।

(तदन्येषामज्यायस्त्वम्)

अतश्चेतनवर्गोऽन्यः स्मृतः प्रत्यवरो बुधैः ॥५॥
अज्यायांश्चानयोर्योगः शेषशेषितयेष्यते ।
अज्यायांसः स्मृताः सर्वे ज्यायानेको मतः परः ॥

(जीवपरयोः संबन्धनिरूपणपूर्वकं नन्तृनन्तव्यत्वव्यवस्था)

नन्तृनन्तव्यभावेन तेषां तेन समन्वयः ।
नन्तव्यः परमः शेषी शेषा नन्तार ईरिताः ॥७॥

(जीवेशयोः शेषशेषिभावस्य निरुपाधिकत्वम्)

नन्तृनन्तव्यभावोऽयं न प्रयोजनपूर्वकः ।
नीचोच्चयोः स्वभावोऽयं नन्तृनन्तव्यतात्मकः ॥

(निरुपाधिकोत्कर्षापकर्षज्ञानस्य नमनहेतुत्वम्)

उपाधिरहितेनायं येन भावेन चेतनः ।
नमति ज्यायसे तस्मै तद्वा नमनमुच्यते ॥९॥
[1]भगवान्[2]मत्परो नित्यमहं प्रत्यवरः सदा ।
इति भावो नमः प्रोक्तो नमसः कारणं हि सः ॥

---

1. भगवान्मे परो A B C E F.
2. 'मत्' इति पञ्चम्यन्तं भिन्नं पदम्.

(अन्तर्णीतणिजर्थविवक्षया नमःशब्दस्य निर्वचनान्तरप्रदर्शनम्)

नामयत्यपि वा देवं प्रह्वीभावयति ध्रुवम् ।
प्रह्वीभवति नीचे हि परो नैच्यं विलोकयन् ॥
अतो वा नम उद्दिष्टं यत्तं नामयति स्वयम् ।

(करणत्रयसहितस्य नमसः पूर्णत्वम्)

वाचा नम इति प्रोच्य मनसा वपुषा च यत् ॥
तन्नमः पूर्णमुद्दिष्टमतोऽन्यन्न्यूनमुच्यते ।
इयं करणपूर्तिः स्यादङ्गपूर्तिमिमां शृणु ॥१३॥

(अथ प्रपन्नस्य प्रपत्त्युत्तरभाविसंभावितस्वभावषट्कविवक्षया प्रथमं प्रह्वीभावात्मकात्मनिक्षेपनिरूपणम्)

शाश्वती मम संसिद्धिरियं प्रह्वीभवामि यत् ।
पुरुषं परमुद्दिश्य न मे सिद्धिरतोऽन्यथा ॥१४॥
इत्यङ्गमुदितं श्रेष्ठं

(तद्विरोधिनिरूपणम्)

फलेप्सा तद्विरोधिनी ।

(अथ कार्पण्यनिरूपणम्)

अनादिवासनारोहादनैश्वर्यात्स्वभावजात् ॥१५॥
मलावकुण्ठितत्वाच्च दृक्क्रियाविहृतिर्हि या ।

---

1. अत्र दृक्छब्देन ज्ञातृत्वं क्रियाशब्देन च कर्तृत्वं विवक्षितम् । इदं च भोक्तृत्वस्याप्युपलक्षकम् । तेषां विहृतिः प्रतिहृतिः कुण्ठनमिति यावत् । तदेव कार्पण्यम् ।

तत्कार्पण्यं तदुद्बोधो द्वितीयं ह्यङ्गमीदृशम् ॥१६॥

(तद्विरोधिनिरूपणम्)

स्वस्वातन्त्र्यावबोधस्तु तद्विरोधीत्युदीर्यते ।

(अथ महाविश्वासनिरूपणम्)

परत्वे सति देवोऽयं भूतानामनुकम्पनः ॥१७॥
अनुग्रहैकधीर्नित्यमित्येतत्तु तृतीयकम् ।

(तद्विरोधिनिरूपणम्)

उपेक्षको यथाकर्म फलदायीति या मतिः ॥१८॥
विश्वासात्मकमेतत्तु तृतीयं हन्ति वै सदा ।

(अथ गोप्तृत्ववरणनिरूपणम्)

एवंभूतोऽप्यशक्तः सन्न त्राणं भवितुं क्षमः ॥१९॥

---

तज्ज्ञानं द्वितीयमङ्गमिति । अयमाशयः—चेतनस्य ज्ञातृत्व-कर्तृत्व-भोक्तृत्वानि द्विविधानि स्वाभाविकान्यौपाधिकानि चेति । तत्र सप्रकारकपरमपुरुषविषयकं ज्ञातृत्वं, तदीयपर्यन्त-तच्चरणकमलपरिचर्याविषयकं कर्तृत्वं, "सोऽश्नुते सर्वान्कामान्सह" इत्यादिश्रुतिबोधितं भोक्तृत्वं च स्वरूपानुबन्धित्वात्स्वाभाविकम् । तच्च यथोक्तेनानादिवासनारोहादिरूपेण हेतुत्रयेणामोक्षं कार्त्स्न्येन कुण्ठितम् । यानि तु चेतनस्य सांसारिकतत्तत्पदार्थविषयकाणि ज्ञातृत्वकर्तृत्वभोक्तृत्वानि, तानि कर्मोपाधिकस्वातन्त्र्यज्ञाननिमित्तकत्वादौपाधिकान्युपाध्यनु-गुणमामोक्षात्तत्तज्जन्मसु तरतमभावेन प्रवर्तन्ते । सोऽयं स्वस्वातन्त्र्यावबोधो यथोक्तकार्पण्य-विरोधीत्युच्यत इति.

1. एवंभूत इति हेतुगर्भविशेषणम् । परमपुरुष इति विशेष्यं प्रकरणलभ्यम् । अपिर्विरोधद्योतकः । भवेदिति क्रियापदमध्याहार्यम् । एवंभूतः परमपुरुषः स्वयम-शक्तः सन् चेतनानां त्राणं भवितुं क्षमो न भवेदपि ? अपि तु शक्तः सन् क्षमो भवेदेवेति पदयोजना । एवंभूतस्य तस्याशक्तत्वप्रयुक्तं चेतनत्राणाक्षमत्वं विरुद्धमिति भावः ।

इतिबुद्ध्याऽस्य देवस्य गोप्तृशक्तिनिरूपणम् ।
चतुर्थमङ्गमुद्दिष्टं

(तद्विरोधिनिरूपणम्)

अमुष्य व्याहतिः पुनः ॥२०॥
उदासीनो गुणाभावादित्युपेक्षानिमित्तजा ।

(अथ प्रातिकूल्यवर्जननिरूपणम्)

स्वस्य स्वाम्यनिवृत्तिर्या प्रातिकूल्यविवर्जनम् ॥२१॥
तदङ्गं पञ्चमं प्रोक्तमाज्ञाव्याघातवर्जनम् ।

(तद्विरोधिनिरूपणम्)

अशास्त्रीयोपसेवा तु तद्व्याघात उदीर्यते ॥२२॥

(अथानुकूल्यसंकल्पनिरूपणम्)

चराचराणि भूतानि सर्वाणि भगवद्वपुः ।
अतस्तदानुकूल्यं मे कार्यमित्येव निश्चयः ॥२३॥
षष्ठमङ्गं समुद्दिष्टं

(तद्विरोधिनिरूपणम्)

तद्विघातो निराकृतिः[2] ।

---

1. गोप्तृशक्तिनिरूपणमिति भावप्रधाननिर्देशः । द्वित्वैकत्वयोरित्यर्थे द्व्येकयोरितिवत् । अन्यथा द्व्येकेष्विति बहुवचनं स्यात् .

2. भगवच्छरीरभूतानां चराचरात्मकानां भूतानां निराकृतिः प्रद्वेषादिना तिरस्करणं तद्विघातः आनुकूल्यसंकल्परूपषष्ठाङ्गविरोधिनीत्यर्थः.

(उक्तार्थनिगमनम्)

पूर्णमन्त्रैरुपाङ्गैश्च नमनं ते प्रकीर्तितम् ॥२४॥
स्थूलोऽयं नमसश्चार्थः सूक्ष्ममद्य निशामय ।

(अथ नमःशब्दस्य सूक्ष्मार्थनिरूपणे म इत्यस्याहंकारममकारवाचित्वम्)

चेतनस्य यदा मम्यं स्वस्मिन्स्वीये च वस्तुनि ॥
मम इत्यक्षरद्वन्द्वं तदा मम्यस्य वाचकम् ।

(नमःशब्दस्याहंताममताबुद्धिनिवर्तकत्वम्)

अनादिवासनाधीनमिथ्याज्ञाननिबन्धना ॥२६॥
आत्मात्मीयपदार्थस्था या स्वातन्त्र्यस्वतामतिः ।
मे नेत्येवं समीचीनबुद्ध्या साऽत्र निवार्यते ॥२७॥

(उक्तार्थस्यैव विवरणम्)

नाहं मम स्वतन्त्रोऽहं नास्मीत्यस्यार्थ उच्यते ।
न मे देहादिकं वस्तु स शेषः परमात्मनः ॥२८॥
इति बुद्ध्या निवर्तन्ते तास्ताः स्वीया मनीषिकाः ।

(नमःशब्दार्थज्ञानस्याहंताममताबुद्धिनिवर्तकत्वे उपपत्तिप्रदर्शनम्)

अनादिवासनाजातैर्बोधैस्तैस्तैर्विकल्पितैः ॥२९॥
रूषितं यद्दृढं चित्तं स्वातन्त्र्यस्वत्वधीमयम् ।
तत्तद्वैष्णवसार्वात्म्यप्रतिबोधसमुत्थया ॥३०॥

---

1. अत्र छन्दोऽनुरोधादसंधिः.

नम इत्यनया वाचा नन्त्रा स्वस्मादपोह्यते ।
इति ते सूक्ष्म उद्दिष्टः परमद्य निशामय ॥३१॥

(अथ नमःशब्दस्य परार्थनिरूपणम्)

पन्था नकार उद्दिष्टो मः प्रधानो निरूप्यते ।
विसर्गः परमेशस्तु तत्रार्थोऽयं निरूप्यते ॥३२॥
अनादिः परमेशो यः शक्तिमान्पुरुषोत्तमः ।
तत्प्राप्तये प्रधानोऽयं पन्था नमननामवान् ॥३३॥
इति ते त्रिविधः प्रोक्तो नमःशब्दार्थ ईदृशः ।

(अथ विष्ण्वादिमन्त्रत्रयस्य स्थूलार्थनिरूपणम्)

विष्णुनारायणादीनामर्थमद्य निशामय ॥३४॥
नीचभावेन [1]संयोत्यमात्मनो यत्समर्पणम् ।
[2]विष्णवादिस्था चतुर्थी तत्संप्रदानप्रदर्शनी ॥
नीचीभूतो ह्यसावात्मा यत्संरक्ष्यतयाऽऽप्यते ।
तत्कस्मा इत्यपेक्षायां विष्णवे स [3]इतीर्यते ॥३६॥
क्रियाकारकसंसर्गलभ्योऽर्थः स्थूल ईरितः ।

(अथ विष्णुमन्त्रस्य सूक्ष्मार्थनिरूपणे विष्णौ परत्वद्योतकगुणविशेषनिरूपणम्)

यः प्रातिपदिकप्रेक्षाजन्यः सूक्ष्मः स ईर्यते ॥३७॥

---

1. संयोज्य° A B C E F.
2. विष्ण्वादिषु A B C E F.
3. इतीष्यते A B C E F.

व्याप्तिकान्तिप्रवेशेच्छास्तत्तद्धातुनिबन्धनाः ।
परत्वद्योतिका विष्णोर्देवस्य परमात्मनः ॥३८॥

(तत्र व्याप्तिगुणनिरूपणम्)

व्याप्नोति देशकालाभ्यां सर्वं यद्रूपतोऽपि च ।
तत्परं गदितं सद्भिर्विषेर्धातोर्निरूपणात्[1] ॥३९॥

(कान्तिगुणनिरूपणम्)

कान्तिर्नाम गुणोत्कर्षो गुणा ज्ञानबलादयः ।
अतिवेलं प्रकृष्यन्ते यत्र कान्तः स ईरितः ॥४०॥
अकान्ताश्चेतनाः सर्वे कान्तः स पुरुषः परः ।
कान्तिर्नाम गुणः सोऽयं [2]वशेर्धातोर्निरूपणात् ॥

(प्रवेशगुणनिरूपणम्)

चेतनाचेतनाः सर्वे विशन्त्येव यतः स्वयम् ।
महीयांसं, विशत्येव योऽणीयानणुषु स्वयम् ॥४२॥
स परो गदितः सद्भि[3]र्विशेर्धातोर्निरूपणात् ।

(इच्छागुणनिरूपणम्)

य इष्यते सदा सर्वैरात्मभावेन चेतनैः ॥४३॥
स परो गदितः सद्भिरिषे[4]र्धातोर्निरूपणात् ।

---

1. "विष्लृ-व्याप्तौ";
2. "वश-कान्तौ";
3. "विश-प्रवेशने";
4. "इष-इच्छायाम्" इति धातवोऽत्र क्रमेण बोध्याः.

(विष्णुशब्द एकैकवर्णलभ्यार्थनिरूपणम्)

विश्वं प्रजायते वस्तु [1]समवैति च तत्र हि ॥४४॥
[2]प्रस्नौति च सदा सद्भ्यः पुरुषार्थं चतुर्विधम् ।
[3]वेः [3]सचेश्च [3]स्नुतेश्चैव विष्ष्णुर्धातुत्रयान्वयात् ॥
इति ते लेशतः सूक्ष्मो विष्णुशब्दार्थ ईरितः ।

(अथ परार्थनिरूपणम्)

परस्त्वक्षरलभ्योऽर्थस्तस्य तत्त्वं निशामय ॥४६॥
[4]अमृतायितसर्वार्थो ज्योतिस्त्रयसमिन्धनः ।
ददात्यभयमित्येतत्परो[5]ऽर्थः परिकीर्तितः ॥४७॥
इति ते वैष्णवे मन्त्रे त्रिविधा गतिरीरिता ।

(अथ नारायणमन्त्रस्य सूक्ष्मार्थनिरूपणम्)

नारायणे निबोधैतद्रूपाणां त्रितयं मुने ॥४८॥
क्रियाकारकलभ्योऽर्थस्तत्र स्थूलो नि[6]दर्शितः ।

---

1. समुपैति D.

2. 'प्रस्तौति' इति सर्वत्र.

3. "वी-गतिव्याप्तिप्रजनकान्त्यसनखादनेषु" "षच-समवाये" "ष्णु-प्रस्रवणे" इति धातुत्रयमत्र क्रमेण बोध्यम्। अत एव द्वितीयतृतीयधातुद्वयानुगुण्येनात्र विष्णुशब्देऽपि षकारद्वित्वम्। अत्र सवेश्चेति द्वितीयो धातुः क्वचित्पठ्यते; तत्तु "समवैति च तत्र हि" इति पूर्वोक्तविवरणवाक्याननुगुणत्वादुपेक्षितम्.

4. अविकुण्ठितसर्वार्थो° D.

5. पञ्चत्रिंशषट्त्रिंशश्लोकौ द्रष्टव्यौ.

यः [1]प्रातिपदिकस्थोऽर्थः स [2]सूक्ष्मोऽत्र निरूप्यते ॥
नरसंबन्धिनो नारा नरः स पुरुषोत्तमः ।
नयत्यखिलविज्ञानं [3]नाशयत्यखिलं तमः ॥५०॥
न रिष्यति च सर्वत्र नरस्तस्मात्सनातनः ।
नरसंबन्धिनः सर्वे चेतनाचेतनात्मकाः ॥५१॥
ईशितव्यतया नारा धार्यपोष्यतया तथा ।
नियाम्यत्वेन सृज्यत्वप्रवेशहरणैस्तथा ॥५२॥
अयते निखिलान्नारान्व्याप्नोति क्रियया तथा ।
नाराश्चाप्ययनं तस्य तैस्तद्भावनिरूपणात् ॥५३॥
नाराणामयनं वासस्ते च तस्यायनं सदा ।
परमा च गतिस्तेषां नाराणामात्मनां सदा ॥५४॥
आपो नारा इति प्रोक्तास्ता अप्ययनमस्य च ।
अतो नारायणो नाम हेतुभिर्दर्शितः परः ॥५५॥
इति ते सूक्ष्म उद्दिष्टः परं वर्णाश्रयं शृणु ।

(अथ परार्थनिरूपणम्)

[4]अकुण्ठितश्चक्ररूपः समस्तदुरितानलः ॥५६॥

---

1. प्रातिपदिकस्यार्थः D.
2. सूक्ष्मोऽर्थो° A B C E F.
3. नाशयत्यशुभं समम् D.
4. अकुण्ठीकृतरूपश्च A B C E F.

व्यापकः सर्वशास्त्रेषु प्रथितो गोपनः सताम् ।
सदानन्दमयः पन्था नाराणां च परा[1] गतिः ॥
इत्यर्थः पर उद्दिष्टो वासुदेवे निशामय ।

(अथ वासुदेवमन्त्रस्य सूक्ष्मार्थनिरूपणम्)

क्रियाकारकगो योऽर्थः स्थूलः पूर्वोक्त[2] एव सः ॥
सूक्ष्मोऽर्थो वासुदेवाख्ये मन्त्रे प्रतिपदाश्रयः ।
भगवानिति पूज्यार्थः शब्दोऽयं समुदायतः ॥

(तत्र भगवच्छब्दान्तर्गतभकारार्थनिरूपणम्)

धारयत्यखिलं विश्वं पोषयत्यपि तत्सदा ।
भरते पूरयत्येतत्संभरत्यपि चात्मना[3] ॥६०॥
त्रयीकर्मात्मकं सूक्ष्ममिति भार्थो निरूप्यते ।

(गकारार्थनिरूपणम्)

गीयते निखिलैः शब्दैर्गम्यते चापवर्गिभिः ॥६१॥
स्वतोऽवबुध्यते सर्वं व्याप्नोति निखिलं जगत् ।
नेता च निखिलार्थस्य गकारार्थः स्मृतो मुने ॥

(मतुबर्थनिरूपणम्)

स्वत्वेन वृणुते विश्वं वर्तते चेशतात्मना ।

---

1. सदा A B C E F.
2. पञ्चत्रिंशषट्त्रिंशश्लोकौ द्रष्टव्यौ.
3. चात्मनः D.

वर्धयत्यखिलं कामं [1]वतोऽर्थोऽयं समीरितः ॥६३॥

(वासुदेवशब्दान्तर्गतवासुशब्दसमुदायार्थनिरूपणम्)

छादयत्यखिलं स्वेन ज्ञानानन्दामलात्मना ।
यथा च वह्निनाऽऽविष्टमिन्धनं तन्मयं भवेत् ॥
एवमाच्छादितं तेन विश्वं तन्मयमेव तत् ।
वसत्यस्मिन्यतो विश्वं तत्रापि च वसत्ययम् ॥
[2]वासुशब्दार्थ उद्दिष्टो

(वाशब्दार्थनिरूपणम्)

वा गन्ता परिकीर्त्यते ।
तन्तुवत्सकलार्थेषु संतनोतीति वाः स्मृतः ॥६६॥

(सुशब्दार्थनिरूपणम्)

प्रसूयतेऽखिलान्भावान्[3]सौति प्रेरयतीत्यपि ।
मखेष्वभिष्टुतः सद्भिरिति [4]स्वर्थोऽयमुच्यते ॥६७॥

(देवशब्दसमुदायार्थनिरूपणम्)

द्योतते [5]स्वत एवायं सृष्ट्याद्यैः क्रीडति स्वयम् ।
स्तूयते च सदा देवैरिति देवार्थ ईरितः ॥६८॥

---

1. वकारार्थोऽयमीरितः A B C.
2. वसु° B C D.
3. प्राणिति प्रेरयत्यपि A B C.
4. स्वा° A B C.
5. स्वयमेवायं A B C.

(देकारार्थनिरूपणम्)

दाता च सर्वकामानां शोधकः सर्वदेहिनाम् ।
रक्षिता सर्वभूतानामिति देकार उच्यते ॥६९॥

(वकारार्थनिरूपणम्)

सर्वैः संभजनीयश्च वोढा च सकलात्मनाम् ।
वकारार्थोऽयमुद्दिष्ट इति सूक्ष्मगतिस्त्वियम् ॥७०॥

(अथ परार्थनिरूपणे भगवच्छब्दान्तर्गतभकारार्थनिरूपणम्)

[1]परस्त्वक्षरसंलभ्यस्तस्य रूपं निशामय ।
ध्रुवः पूर्वोऽवधिर्ज्ञेयो यदुपादानमुच्यते ॥७१॥
ध्रुवं जगदुपादानमिति भाक्षरचिन्तनम् ।

(गकारार्थनिरूपणम्)

गां वेदयति [2]सच्छास्त्रमादौ विन्दति वा स्वयम् ॥
गोविन्दो नाम देवोऽसौ गार्थः संकर्षणो मुने ।

(वकारार्थनिरूपणम्)

वरुणो वृणुते विश्वं त्रयीकर्मोभयात्मकम् ॥७३॥
वृणुते कुरुते विश्वमिति वार्थो निरूप्यते ।

(तकारार्थनिरूपणम्)

यत्स्तृज्यते संह्रियते [3]स्रग्धारः परिकीर्त्यते ॥७४॥

---

1. परं त्वक्षरसंलभ्यम् A B C.
2. सच्छास्त्ररूपं सद्वियया स्वयम् A B C.
3. यत्त्रयीकर्म कीर्त्यते A B C E F.

धत्ते तदुभयं देवः स्वनाभिकमलोदरे ।
अतः स्रग्धर इत्येवमनिरुद्धोऽत्र चोदितः ॥७५॥
चतुर्भिरक्षरैरेवं चतुर्व्यूहनिरूपणम् ।

(अथ वासुदेवशब्दान्तर्गतवाकारार्थनिरूपणम् )

वकारेणामृताधारो वासुदेवो निरूप्यते ॥७६॥
आकारेणादिदेवस्तु संकर्षण उदीर्यते ।
यो वासुदेवो भगवान्मोक्षाधारः सनातनः ॥७७॥
संकर्षणः स एवेति वाकारार्थो निरूप्यते ।

(सुकारार्थनिरूपणम् )

भुवनं कर्म चैवादौ योऽसूयत सनातनः ॥७८॥
स सोम उदितस्तेन प्रद्युम्नः पुरुषोत्तमः ।
उद्दाम उदयश्चात्र संकर्षण उदीर्यते ॥७९॥
संकर्षणदशायां हि संपूर्ण उदयो हरेः ।
वासुदेवात्मको यस्स संकर्षण उदीरितः ॥८०॥
प्रद्युम्नोऽपि स एवेति सुकारार्थो निरूप्यते ।

(देकारार्थनिरूपणम्)

दत्तो येनावकाशोऽप्सु शयानेन महात्मना ॥८१॥
क्षेत्रक्षेत्रज्ञयोर्वृद्ध्यै स्वनाभिकमलोदरे ।
दत्तावकाशो दस्यार्थः सोऽनिरुद्ध उदीर्यते ॥८२॥
एकारेण जगद्योनिः प्रद्युम्नः परिपठ्यते ।

संकर्षणात्मको यः स प्रद्युम्नः परिकीर्तितः ॥८३॥
अनिरुद्धः स इत्येवं देकारार्थो निरूप्यते ।

(वकारार्थनिरूपणम्)

एवं वर्णत्रयेणोक्तं व्यूहतादात्म्यमुत्तमम् ॥८४॥
उपसंहाररूपेण पुनर्वेति तदुच्यते ।
लेशतो वासुदेवाख्ये परोऽर्थस्ते प्रदर्शितः ।
[1]जितन्तायामिदानीं मे सर्वमर्थं निशामय ॥८५॥

इति श्रीपाञ्चरात्रे तन्त्ररहस्ये अहिर्बुध्न्यसंहितायां
विष्णु-नारायण-वासुदेव-मन्त्रार्थनिरूपणं नाम द्विपञ्चाशोऽध्यायः ।

ओम् ।

(आदितः श्लोकाः ३४०२)

---

1. मन्त्रवर्णैकदेशानुकरणत्वात्साधुत्वं बोध्यम्.

ओम् ।

# अथ जितन्ताख्यमहामन्त्रार्थनिरूपणं नाम त्रिपञ्चाशोऽध्यायः ।

ध्यातं सकृद्भवानेककोट्यघौघं हरत्यरम्
सुदर्शनस्य तद्दिव्यं भर्गो देवस्य धीमहि ॥

(तत्र प्रथमं मन्त्राद्यपादस्य स्थूलार्थनिरूपणे जिधात्वर्थयोरौज्ज्वल्याविघातयो-र्नमनप्रयोजकत्वकथनम् )

अहिर्बुध्न्यः ।

औज्ज्वल्यमविघातश्च जयतेरर्थ उच्यते ।
प्रयोजकं तदुभयं नन्तुर्नमनकर्मणि ॥ १ ॥

(तयोर्ज्ञानादिषड्गुणजन्यत्वम् )

ज्ञानशक्तिबलाद्यैस्तदुभयं खलु जायते ।

(ज्ञानादिगुणपूर्णत्वाद्भगवत एव नन्तव्यत्वम् )

ज्ञानशक्तिबलैश्वर्यवीर्यतेजोमहोदधिः ॥ २ ॥
भगवानेव विश्वात्मा नन्तव्यः प्रविवक्ष्यते ।

(पुण्डरीकाक्षशब्दस्य यथोक्तार्थप्रकाशकत्वोपपादनम् )

पुण्डरीकाक्षशब्देन तदिदं प्रतिसूच्यते ॥ ३ ॥

प्रयुक्तो रागरोषाभ्यां [1]चक्षुषैव विभाव्यते ।
अयं त्ववाप्तकामत्वात्तत्कृत्यविवर्जितः ॥ ४ ॥
प्रसन्नो वैकृतत्यागात्पुण्डरीकाक्ष उच्यते ।

(तस्यैव शब्दस्य हेयप्रतिभटत्व-कल्याणगुणाकरत्व-रूपोभयलिङ्गत्वपरत्वम् )

रागादिदोषनिर्मुक्तिः कल्याणगुणपूरणम् ॥ ५ ॥
पुण्डरीकाक्षशब्देन शब्द्यते पुरुषोत्तमे ।

(तस्यैव वासुदेवाख्यप्रथमव्यूहनिरूपकत्वम् )

पुण्डरीकाक्षशब्दोऽयमादिव्यूहनिरूपणः ॥ ६ ॥
पुण्डरीकाक्षमामन्त्र्य ब्रह्मा तेनैव हेतुना ।
नन्ता स्वं च समालोक्य जितं त इति वक्त्ययम् ॥
इति संसर्गजः स्थूलः सूक्ष्मं चापि मुने शृणु ।

(अथ सूक्ष्मार्थनिरूपणे पुण्डरीकाक्षशब्देन भगवतोऽकालकाल्यत्वाविष्करणम्)

पुण्डरीकं तु कालाख्यं पुरं जरयते यतः ॥ ८ ॥
तेनाक्षतो बहिर्भावात्तेनानाकलितो यतः ।

(कालत्रैविध्यकथनपूर्वकं तदुपपादनम् )

स्थूलः सूक्ष्मः परः कालस्त्रिविधो न परात्मनि ॥
वासुदेवे परे ब्रह्मण्यवगाहनमर्हति ।
स्थूलो लवादिमान्कालः सूक्ष्मस्तत्त्वनिरूपकः ॥
[2]व्यूहानां चेष्टितव्यापी परः कालो निरूप्यते ।

---

1. चक्षुष्येव D.
2. व्यूहतश्चेष्टनाव्यापी D.

(व्यूहत्रयात्परवासुदेवस्य वैलक्षण्याविष्करणम्)

व्यूहत्रयस्य भवति कालेन कलनं सदा ॥११॥
भगवान्वासुदेवस्तु [1]न व्यूहो नापि कालवान् ।
व्यूहत्रयमपेक्ष्यैव [2]कालव्यूहनिरूपणम् ॥१२॥
कालेनामानतश्चायममितद्युतिरुच्यते ।

(पुण्डरीकाक्षशब्दस्य भगवति नित्यविभूतियोगप्रतिपादकत्वम्)

पुण्डरीकं परं धाम नित्यमक्षयमव्ययम् ॥१३॥
तस्मिन्निवसनान्नित्यं पुण्डरीकाक्ष उच्यते ।

(तथा तस्यैव स्वमहिमप्रतिष्ठितत्वप्रतिपादकत्वम्)

पुण्डरीकं परं धाम स्व एव महिमोज्ज्वलः ॥१४॥
स्वे महिम्नि स्थितो देवः पुण्डरीकाक्ष उच्यते ।
वासुदेवस्ततः प्रोक्तः पुण्डरीकाक्षसंज्ञया ॥१५॥
पुण्डरीकाक्षशब्दस्य सूक्ष्मार्थः सोऽयमीरितः ।

(अथ परार्थनिरूपणारम्भः)

पुण्डरीकाक्ष इत्यस्य परमर्थं निशामय ॥१६॥

(तत्र पकारार्थनिरूपणम्)

[3]रागादिदोषनिर्मुक्तः पवित्रं परमं हरिः ।

---

1. "न व्यूहेनापि कालवान्" इति सर्वत्र; C पुस्तके तु "व्यूहे नापि च कालवान्" इति.

2. गौणं व्यूहनि° D.

3. अत्रेयं योजना—पकारः, उकारः, अनुस्वारः, डकारः, रीकारः, ककारः, आकारः, क्षकारः, इत्येवं पुण्डरीकाक्षशब्दस्यान्वर्णानष्टधा विभज्य तेषामप्रमेयादिभावसंसिद्धः परसंज्ञोऽर्थो रागादीत्युपक्रम्य सार्धश्लोकचतुष्टयेन क्रमात्प्रदर्श्यत इति.

(उकारार्थनिरूपणम्)

नित्योदितस्वरूपत्वादुद्दाम उदयः स्मृतः ॥१७॥

(मकारार्थनिरूपणम्)

व्यूहत्रितयपूर्वत्वात्प्रधानः परिपठ्यते ।

(डकारार्थनिरूपणम्)

शुद्धाशुद्धाध्वसंप्राप्तेः संस्मृतोऽखण्डविक्रमः ॥१८॥

(ईकारशिरस्करेफार्थनिरूपणम्)

संकर्षणादिभूम्यन्तमशेषभुवनं यतः ।
बिभर्त्याधारभावेन व्याप्नोत्यन्तश्च तत्स्वयम् ॥

(आकारसहितककारार्थनिरूपणम्)

आनन्दो नैरपेक्ष्येण परा च प्रकृतिः स्वयम् ।

(क्षकारार्थनिरूपणम्)

शुद्धाशुद्धमयस्यास्य चेतनाचेतनात्मनः ॥२०॥
वर्गस्यान्तः परा सीमा वर्गान्तः परिपठ्यते ।

(पुण्डरीकाक्षशब्दार्थस्य चिरकालादपि कार्त्स्न्येन वक्तुमशक्यत्वम्)

इति वर्णमयी रीतिः पराख्या ते प्रदर्शिता ॥२१॥
वर्षायुतैरपि व्यक्तं न शक्या वक्तुमञ्जसा ।

---

1. व्या° (?) A.

(अथ मन्त्रद्वितीयपादस्य स्थूलार्थनिरूपणम्)

विश्वभावनसंज्ञेयं संकर्षश्रीसमीरणी ॥२२॥
क्रियाकारकसंसर्गजन्यः स्थूलो निरूपितः ।

(अथ सूक्ष्मार्थनिरूपणम्)

सूक्ष्ममर्थमिदानीं तु गदतो मे निशामय ॥२३॥

(तत्र विश्वभावनशब्दस्य सर्वकारणत्वपरत्वम्)

चेतनाचेतनाकारं विश्वं प्रद्युम्नपूर्वकम् ।
भावयन्ननिशं देवः कथितो विश्वभावनः ॥२४॥

(तथा कारणत्वोपयोगिसर्वज्ञत्वपरत्वम्)

विश्वं भावयति व्यक्तं जानात्येव यथार्थतः ।
विश्वभावन उद्दिष्टः सर्वज्ञः शब्दवित्तमैः ॥२५॥

(तथा संकर्षणाख्यद्वितीयव्यूहपरत्वम्)

अनिशं बिभ्रतं प्राप्य विश्वं भवति वै ततः ।
विश्वभावन उद्दिष्टो बलदेवो महाबलः ॥२६॥

(तथा सर्वशेषित्वपरत्वम्)

अनाथमभवद्विश्वं नाथो भावयति स्वयम् ।
तस्मिन्नुदितमात्रे वै विश्वं यन्नवति स्वयम् ॥२७॥
विश्वभावन उद्दिष्टो नाथत्वेन निरीक्षणात् ।

(सर्वाधारत्वपरत्वम्)

विशालोऽयं यदाधारो विश्वस्य भवने स्वयम् ॥
तिलकालकवद्विश्वं यस्मात्तत्रावतिष्ठते ।
विशालाधाररूपेण विशालाक्षो भवेत्स्वयम् ॥२९॥
विश्वं तद्भावयन्विश्वं विश्वभावन ईर्यते ।
इति ते लेशतः प्रोक्तः सूक्ष्मोऽर्थो विश्वभावने ॥

(अथ परार्थनिरूपणारम्भः)

परमर्थमिदानीं त्वं गदतो मे निशामय ।

(तत्रेकारशिरस्कवकारार्थनिरूपणम्)

[1]अमृताधारतस्त्विद्धो [2]वासुदेवादिभूमिकः ॥३१॥

(शकारार्थनिरूपणम्)

सम्यग्ज्ञानोपदेशेन शंकरः सर्वदेहिनाम् ।

(द्वितीयवकारार्थनिरूपणम्)

अह्नां वरमहो यस्माद्वराहः परिपठ्यते ॥३२॥
अहः संकर्षणः प्रोक्तो वासुदेवस्य तत्त्वतः ।

---

1. इयमत्र योजना—इकारशिरस्कः प्रथमवकारः, शकारः, द्वितीयवकारः, भकारः, आकारः, तृतीयवकारः, नकारः, इत्येवं विश्वभावनशब्दस्थान्वर्णान्सप्तधा विभज्य तेषामप्रमेयादिभावसंसिद्धः परसंज्ञोऽर्थः अमृताधारत इत्यादिना सार्धश्लोकपञ्चकेन क्रमात्प्रदर्श्यत इति.

2. ॰वासुदेवादिभूमितः A B C E F; वासुदेवादभूद्युतः D.

(आकारसहितभकारार्थनिरूपणम्)

सिद्धिदः सर्वभूतानां देवानामादिरेव च ॥३३॥

(भकारविवक्षितसिद्धिप्रदत्वोपपादनम्)

तत्तत्सच्छास्त्रसंभूतशुक्लकर्मोपजोषणः ।
सिद्धिं ददाति जीवानामतः सिद्धिद उच्यते ॥

(आकारविवक्षितयोरादित्वदेवत्वयोरुपपादनम्)

आदिर्भूतः स देवानां सव्यूहविभवात्मनाम् ।
आदिश्च दीव्यति व्यक्तमादिदेवः स उच्यते ॥

(तृतीयवकारार्थनिरूपणम्)

आवृणोति तमः सर्वं विवृणोति तदक्षरम् ।
वरुणः सोऽप्रमेयस्थः

(नकारार्थनिरूपणम्)

स च पन्थाः स्मृतो बुधैः ॥
विश्वभावन इत्येवमर्थो वर्णमयः परः ।

(अथ मन्त्रतृतीयपादीयस्थूलार्थस्य पूर्वनिरूपितत्वसूचनम्)

हृषीकेशपदार्थं तु ब्रुवतो मे निशामय ॥३७॥

---

1. °देवानाम् A B C.
2. °देवः A B C.
3. ततः D.

क्रियाकारकसंसर्गजन्योऽर्थः पूर्वमीरितः ।

(अथ सूक्ष्मार्थनिरूपणम्)

यः प्रातिपदिकार्थस्तं सूक्ष्ममद्य निशामय ॥३८॥

(हृषीकेशपदस्य सप्तधाऽर्थवर्णने प्रथमं ज्ञानोत्तेजकत्वपरत्वकथनम्)

प्रद्योतयति विद्यायास्तमो हत्वा मधुं रिपुम् ।
भगवद्भावितं रूपं सत्सत्त्वप्रतिपादकम्[1] ॥३९॥
हृषीकेशत्वमीशस्य तदेव गदितं बुधैः ।

(तथा ज्ञाननिर्मलीकरणद्वारकहर्षहेतुत्वपरत्वेन प्रद्युम्नाख्यतृतीयव्यूहपरत्वम्)

हर्षयत्यमलीकृत्य विद्यामीश इतीदृशम् ॥४०॥
हृषीकेशत्वमेतद्धि प्रद्युम्नत्वमुदीर्यते ।

(ज्ञानेन्द्रियनियामकत्वपरत्वम्)

ज्ञानेन्द्रियं हृषीकं स्यात्तस्य सोऽन्तर्णियामकः ॥
हृषीकेशत्वमेतद्धि[2] प्रद्युम्नस्य निगद्यते ।

(जगन्मयत्वपरत्वम्)

हृषीका विषयाः प्रोक्ताः प्रकृतिप्राकृतात्मकाः ॥
हर्षयन्ति हि ते जीवांस्तेषामीशो जगद्गुरुः ।
जगन्मयत्वमेतद्धि तन्मयत्व[3]समीरणात् ॥४३॥

---

1. सत्सत्त्वप्रतिपादितम् D.
2. सर्वेश्वरत्वमेतद्धि D.
3. तन्मयत्वं D.

(सृष्ट्यादिरूपक्रीडाहेतुकहर्षाश्रयत्व-देवत्व-परत्वम्)

क्रीडया हृष्यति व्यक्तमीशस्तत्सृष्टिरूपया।
हृषीकेशत्वमीशस्य देवत्वं चास्य तत्स्फुटम् ॥

(ऐश्वर्यवीर्यरूपगुणाश्रयत्वपरत्वम्)

अविकारितया हृष्टो हृषीको वीर्यरूपया।
ईशः स्वातन्त्र्ययोगेन नित्यं सृष्ट्यादिकर्मणि ॥
ऐश्वर्यवीर्यरूपत्वं हृषीकेशत्वमुच्यते।

(जगच्छब्दविवक्षितसर्वचेतनशेषित्वपरत्वम्)

हृषी ज्ञानं समुद्दिष्टं हृषीकाश्चेतनात्मकाः ॥४६॥
जङ्गमत्वाज्जगद्रूपास्तदीशो जगतां पतिः।
इति सूक्ष्मोऽयमुद्दिष्टः स प्रातिपदिकाश्रयः ॥४७॥

(अथ परार्थनिरूपणारम्भः)

वर्णाश्रयमिदानीं मे परमर्थं[1] निशामय।

(तत्र हकारार्थनिरूपणम्)

प्राणयत्यखिलं[2] जीवं शुक्लधर्माऽऽत्मभावतः ॥४८॥

(ऋकारार्थनिरूपणम्)

सत्यश्च नामतः सच्च त्यच्च यस्माद्भवत्ययम्।

---

1. परमर्थ A B C.

2. अत्रेयं योजना—हकारः, ऋकारः, ईकारशिरस्कः षकारः, एकारशिरस्कः ककारः, शकारः, इत्येवं हृषीकेशपदस्थान्वर्णान्पञ्चधा विभज्य तेषामप्रमेयादिभावसंसिद्धः परसंज्ञोऽर्थः प्राणयतीत्यादिना सार्धश्लोकद्वयेन क्रमात्प्रदर्श्यत इति.

(ईकारशिरस्कषकारार्थनिरूपणम्)

मायया ऽऽश्चर्ययोगेन भास्करं भरते दिवि ॥४९॥

(एकारशिरस्कककारार्थनिरूपणम्)

करालां जगतो योनिं घोररूपां तमोमयीम्।

(शकारार्थनिरूपणम्)

शमयत्यप्रमेयस्य इति वर्णाश्रया स्थितिः ॥५०॥
अर्थोऽयं त्रिविधः प्रोक्तो हृषीकेशे महामुने।

(अथ मन्त्रचतुर्थपादस्य स्थूलार्थनिरूपणम्)

अर्थं शृणु त्वं त्रिविधं महापुरुषपूर्वजे ॥५१॥
जितं त इतिवाऽऽकृष्य आहार्योऽत्र जयेति वा।
जितं तेऽथ नमस्तेऽस्तु पदमेतदिहोभयम् ॥५२॥
अञ्जसा जगतोऽध्यक्षे चेतनाचेतनात्मनः।
जयः प्रणामरूपोऽर्थो ह्यनिरुद्धेऽभिधीयते ॥५३॥
जितं त इति शब्दोऽयमतिस्वामित्वसूचकः।
संनिकृष्टो नमस्कारः सर्वोत्कृष्टे कथं भवेत् ॥५४॥
अत्युच्चो येन रूपेण संनिकर्षमुपैति[1] सः।
तद्द्वितीयतृतीयौ द्वाविति तत्र[2] नमस्क्रिया ॥५५॥

---

1. °कर्षः D.
2. तन्त्र° D.

भावद्वयेन भगवाननिरुद्धो जगद्धितः ।
इति द्योतयितुं[1] तत्र वाच्ये[2] जयनमस्क्रिये ॥५६॥
क्रियाकारकजन्योऽर्थ इति स्थूलो निरूपितः ।

(अथ सूक्ष्मार्थनिरूपणम्)

यः प्रातिपदिकस्थोऽर्थस्तं त्वं सूक्ष्मं निशामय ॥

(तत्र मकारार्थनिरूपणम् )

मिमीते विविधं वस्तु क्षेत्रक्षेत्रज्ञतन्मयम् ।

(हाकारार्थनिरूपणम्)

जिहीते तदशेषं च प्रविशत्यन्तरात्मना ॥५८॥

(महेतिसमुदायार्थनिरूपणम् )

प्राणयत्यथ तत्सर्वं तत्र तत्र महीयते ।
महत्त्वयश्च महानित्थं महानिति निरुच्यते ॥५९॥

(पुकारार्थनिरूपणम्)

पुष्यति स्थितिमां[3]व्यक्तिं पुनःपुनरुदेति च ।

(रुशब्दार्थनिरूपणम्)

रौति शास्त्रं च नानार्थं रूयते तत्तदात्मना ॥६०॥

---

1. ०ते D.
2. वाक्ये A B C.
3. इत्थमेव सर्वत्र पाठः.

राति पूजामथादत्ते राति चाराधितः फलम्[1]।

(षकारार्थनिरूपणम्)

अन्तं करोति पापानां नाना संभज्यते जनैः[2] ॥

(पुरुषपदसमुदितार्थनिरूपणम्)

पुरमोषति कर्मान्ते पुरुभिः सेव्यते तथा।
पुरि शेते पुरं सौति सत्त्वे पुरुणि सीदति ॥६२॥

(रेफशिरस्कपूकारार्थनिरूपणम्)

पारयत्यखिलं[3] विश्वं वारयत्यखिलं तमः।

(वकारजकारार्थनिरूपणम्)

वनते[4] चाश्रितान्सर्वाञ्जयत्यपि तमोमयम् ॥६३॥
अजति क्षिपति स्पष्टं द्विषतः क्रूरयोनिषु।

(पूर्वजशब्दसमुदितार्थनिरूपणम्)

पूर्वं एव पुराणः संस्तत्तद्योनिषु जायते ॥६४॥
पूर्वजः सर्वदेवानां पूर्वोऽजो यस्य देहजः।
अजो हि पुंस्त्वः[5] पूर्वोऽस्य ब्रह्मा प्रथमकल्पितः ॥६५॥

---

1. चाराधिनाम् D.
2. "षोऽन्तकर्मणि" "षण-संभक्तौ" इति धातुद्वयमत्र बोध्यम्.
3. पाय° A. पाल° B C.
4. धरते D.
5. पुरुषः पूर्वो ब्रह्मा A B C E F.

पूर्वा जीवाः समाख्याताः पुरस्ते वेन्वते[1] यतः ।
स्वेन रूपेण पूर्वास्तान्प्रादुर्भावयति स्वयम् ॥६६॥

(महापुरुषपदसमुदितार्थनिरूपणम्)

महत्त्वमनपेक्षत्वं सर्वभावक्रियाविधौ ।
पुरुषैरविभागो[2] यो महापुरुषताऽस्य सा ॥६७॥
एतदेव च तेजस्तत्सैषा शक्तिरुदीरिता[3] ।
एतदेवानिरुद्धत्वं भगवत्त्वमपीदृशम् ॥६८॥
स्थित्युत्पत्तिलयत्राणहेतुत्वं चैतदीदृशम् ।
इति ते लेशतः प्रोक्तः सूक्ष्मः प्रतिपदाश्रयः ॥

(अथ परार्थनिरूपणारम्भः)

वर्णाश्रयमिदानीं मे परमर्थं निशामय ।

(तत्र मकारार्थनिरूपणम्)

मर्दनः सर्वदुष्टानामप्रमेयपराक्रमः ॥७०॥

(हाकारार्थनिरूपणम्)

अरिभ्यश्च हितो नित्यं गोपनः सर्वदेहिनाम् ।
व्यक्तः क्रियावतां पन्थास्त्रयीकर्मसमुद्भवे[4] ॥७१॥

---

1. 'वनु-याचने' इति तानादिकाद्धातोरात्मनेपदाल्लटि प्रथमपुरुषबहुवचने रूपमिदं 'वन्वते' इति.

2. 'पुरुषैरविभागे या' इति सर्वत्र पाठः.

3. ०रुदीर्यते A B C.

4. इत्थमेव सर्वत्र पाठः.

(उकारशिरस्कपकारार्थनिरूपणम्)

पद्मनाभोऽम्बुशायी सन्मुद्दामभुवनोदयः ।

(तादृशरेफार्थनिरूपणम्)

अशेषभुवनाधारस्तत्तत्कार्योदयस्थितिः ॥७२॥

(षकारार्थनिरूपणम्)

श्वेतद्वीपे नृसिंहः सन्नग्निरूपो हविर्भुजाम्[1] ।

भास्करः सर्वदेवानां[2]

(पकारार्थनिरूपणम्)

पवित्रं परमं[3] सताम् ॥७३॥

(ऊकारार्थनिरूपणम्)

नानाविधानां प्रज्ञानामाधारः कार्यसाधने ।

(द्वितीयरेफार्थनिरूपणम्)

बलवान्सर्वलोकेशः कल्पान्ते कालपावकः ॥

(वकारार्थनिरूपणम्)

वराहो वसुधोद्धारे

(जकारार्थनिरूपणम्)

जन्महन्ता स्मृतः सताम् ।

अजितो देवदैत्याद्यैर्महापुरुषपूर्वजः ॥७५॥

---

1. हविष्मताम् D.
2. °भूतानां D.
3. परम . . . . . A. परमः पुमान् B C.

इति वर्णाश्रया रीतिर्महापुरुषपूर्वजे ।

(प्रकृतमहामन्त्रतात्पर्यसूचनम्)

नानाविधमहार्थोऽयं [1]जितन्ताख्यो महामनुः ।
चक्ररूपं चित्ररूपं वक्ति देवं सनातनम् ॥७९॥

इति श्रीपाञ्चरात्रे तन्त्ररहस्ये अहिर्बुध्न्यसंहितायां
जितन्ताख्यमहामन्त्रार्थनिरूपणं नाम त्रिपञ्चाशोऽध्यायः ।

ओम् ।

(आदितः श्लोकाः ३४७८)

---

1. मन्त्रवर्णैकदेशानुकरणत्वात्साधुत्वं बोध्यमित्युक्तम्.

ओम् ।

## अथ नारसिंहानुष्टुभमन्त्रार्थनिरूपणं नाम चतुःपञ्चाशोऽध्यायः ।

ध्यातं सकृद्भवानेककोट्यघौघं हरत्यरम् ।
सुदर्शनस्य तद्दिव्यं भर्गो देवस्य धीमहि ॥

(तत्र प्रथमं सप्तभिः श्लोकैर्मन्त्रमाहात्म्यनिरूपणम् )

अहिर्बुध्न्यः ।

इति ते लेशतः प्रोक्तो जि[1]तन्ताख्यो महामनुः ।
नारसिंहमिदानीं मे तत्त्वतः शृणु नारद ॥ १ ॥

(तत्र मन्त्रस्यास्यैहिकामुष्मिकनानाविधफलसाधनता)

सर्वाश्चर्यकरः सोऽयं नारसिंहो महामनुः ।
दिव्यान्तरिक्षभौमानां भोगानामुप[2]पादकः ॥ २ ॥
आध्यात्मिकादिरूपाणां त्रिविधानां तथाऽऽपदाम् ।
निवारणस्तथा रक्षोदैत्यदानवमर्दनः ॥ ३ ॥

---

1. शब्दसाधुत्वं पूर्ववत् .
2. ॰कारकः A B C E F.

(सांख्य-योग-पाञ्चरात्र-वेदान्ति-पाशुपतैरप्यस्यावश्योपजीव्यत्वम्)

सांख्यानां परमं ज्ञानमिदमेव महामुने ।
इयं सोपानभूमिः सा योगिनां नियतात्मनाम् ॥
तदेतदयनं ह्येकं सात्वतानां महात्मनाम् ।
एतत्त्रय्यन्तसर्वस्वमेतत्पाशुपतं मतम् ॥५॥

(सर्वचेतनहितकामनया कल्पादौ संकर्षणेनास्य प्रकाशितत्वम्)

संकर्षणो जगत्यस्मिन्स्सृष्टे नानाविधे पुरा ।
हिताय सर्वजीवानां ज्ञानमेतत्परं जगौ ॥६॥

(ब्रह्मरुद्रादीनामपि महता श्रमेण संकर्षणादेतन्मन्त्रप्राप्तिः)

तप्त्वा घोरं तपो ब्रह्मा तस्मादधिजगौ पुरा ।
अधीतवानहं तस्मान्मत्तो दिव्या महर्षयः ॥७॥

(अथ स्थूलार्थनिरूपणे नमामीतिक्रियापदेन शेषत्वज्ञानपूर्वकमात्मात्मीययोर्भगवति समर्पणनिरूपणम्)

नमनं नतिरित्युक्तं नीचीभावश्च स स्मृतः ।
परं प्रत्यात्मनो नीचीभावः शेषत्वमेव हि ॥८॥
आत्मानं शेषतां नीत्वा नमामीतिपदेन तु ।
आत्मीयमर्थं तत्तस्मै निवेदयति मन्त्रवित् ॥९॥

---

1. योगानां नियमात्मनाम् A B C E F.

(मान्त्रवर्णिकैरुग्रादिपदै रौद्रादिरसप्रतिपादनम्)

क्रोधातिशयतो रौद्रो रस उग्र उदीरितः ।
उत्साहातिशयोत्थायी वीरो वीरपदोदितः ॥१०॥
चतुर्भिरद्भुतैः शब्दैर्महाविष्णवादिपूर्वकैः ।
भयातिशयहेतुत्वं[1] भीषणेन भयानकः ॥११॥
रसं वदति श‍ृङ्गारं मन्त्रभद्रपदं मुने ।
मृत्युमृत्युपदं चापि वदत्यद्भुतभीषणौ ॥ १२ ॥

(अहंपदस्य भगवच्छेषत्वेन रूपेणात्मस्वरूपनिष्कर्षकत्वम्)

अहमित्यात्मनिष्कर्षो नन्तुर्भागवतात्मनां[2] ।

(उग्रादिपदाभिहितानां रौद्रादिरसानां विषयव्यवस्थाप्रदर्शनम्)

उग्रः शत्रुधिया देवो वीरो देवगणेक्षया ॥ १३ ॥
महाविष्णुर्ज्वलंश्चैव सर्वतोमुख इत्यपि ।
नृसिंह इति चाश्चर्यो योगसिद्धजनेक्षया[3] ॥ १४ ॥
भीषणो देव उद्दिष्टः क्षुद्ररक्षोगणेक्षया ।
आनन्दवलितापाङ्ग्या लक्ष्म्या भद्रो निरीक्षितः ॥
ऋषीणां मृत्युमृत्युः स भीषणाश्चर्ययोगतः ।
क्रियाकारकसंसर्गजन्योऽर्थः स्थूल ईदृशः ॥१६॥

---

1. 'ºहेतुत्वात्' इति सर्वत्र.
2. ºनः A B C.
3. योगिº D.

(अथ सूक्ष्मार्थनिरूपणारम्भः)

सूक्ष्ममर्थं निबोधेमं यः प्रातिपदिकाश्रयः ।

(तत्रोग्रशब्दार्थनिरूपणम्)

उद्गिरत्यखिलं विश्वमुद्गीर्णं ग्रसति स्वयम् ॥१७॥

(वीरशब्दार्थनिरूपणम्)

वीरयत्यखिलं भावं विविधं रमयत्यपि ।

(महच्छब्देन त्रिविधपरिच्छेदशून्यत्वबोधनम्)

कालदेशाद्यवच्छेदविरहात्स महान्स्मृतः ॥१८॥

(पुनर्महच्छब्दस्य नवधा निर्वचनप्रदर्शनम्)

महीयतेर्मेहतेर्वा मुह्यतेरथवा मिहेः ।
मनुतेः सजहातेर्वा मां जिहीतेऽथवा महान् ॥
मात्यस्मिन्नथवा विश्वं न जहात्यपि वै जगत् ।

(यथाक्रमं तेषामुपपादनम्)

महीयते परे व्योम्नि महानिति निरुच्यते ॥२०॥
मेहतिर्दानकर्माऽयं महान्मेहत्यभीप्सितम् ।

---

1. अत्रैते सप्त धातवो विवक्षिता बोध्याः—"मह-पूजायाम्" भ्वादिः; "मिह-सेचने" भ्वादिः; "मुह-वैचित्त्ये" दिवादिः; "मनु-अवबोधने" तनादिः; "ओ-हाक्-त्यागे" जुहोत्यादिः; "ओ-हाङ्-गतौ" जुहोत्यादिः; "मा-माने" अदादिः; इति। अत्र "मिह-सेचने" इत्यत्र सेचनं मिश्रीकरणं; तेन "मेहतिर्दानकर्माऽयं" इति ग्रन्थोपपत्तिः। यद्यपि नवविधनिर्वचनोपयोगितया नव धातवोऽपेक्षिताः, तथाऽपि मिह-धातोर्हाङ्धातोश्च तात्पर्यभेदेन वारद्वयमावृत्तत्वान्नवसंख्यापूरणं बोध्यम्.

मोहयत्यात्मचेष्टाभिरिति देवो महान्स्मृतः ॥२१॥
स्वं मेहत्यप्सु वै वीर्यमण्डत्वेनेति वै महान् ।
मनुते नित्ययोगेन स्वेन ज्ञानात्मना महान् ॥२२॥
जहाति विविधान्भावान्षड्भावा इति यान्विदुः ।
मेति लक्ष्मीर्मता देवी [1]तां जिहीतेऽभिगच्छति ॥
दिव्यं नित्यपरिष्वक्तं मिथुनं तन्महानतः ।
मात्यस्मिन्निखिलेनेदं कुण्डे बदरवज्जगत् ॥२४॥
न जहाति बहिर्भूतस्तच्च देहे महानतः ।

(विष्णुशब्दार्थनिरूपणम्)

[2]विविनक्ति जगत्यस्मिन्सच्चासच्च विचेष्टते ॥२५॥
[3]वेवेष्टि निखिलान्भोगान्यच्छति प्राणिनां स्वयम् ।
आयत्तैः सकलैर्जीवैः प्रणौत्यन्तः [4]स्वरात्मना ॥२६॥
इति शब्दार्थतत्त्वज्ञा विष्णुं देवं प्रचक्षते ।

(महाविष्णुपदसंपिण्डितार्थनिरूपणम्)

महान्विशति संसारे [5]जायमानो यतो महान् ॥
महाविष्णुमतो धीरा देवमेनं प्रचक्षते ।

---

1. मां E F.
2. "विचिर्-पृथग्भावे" इति रौधादिको धातुः.
3. "विष्लृ-व्याप्तौ" इति जौहोत्यादिकः.
4. सुरात्मना D.
5. "स उ श्रेयान् भवति जायमानः" इत्यादिश्रुतिरत्रानुसंधेया.

(ज्वलच्छब्दार्थनिरूपणम्)

हृदये योगिनां नित्यं सूरीणां परमे पदे ॥२८॥
वितानेषु च विप्राणां यतो ज्वलति वै स्वयम्।
सूर्याचन्द्रमसौ वह्निरिति तेजस्त्रयं[1] परम् ॥२९॥
आविश्य ज्वलयत्यन्तरवतीर्णो ज्वलत्यपि।
ज्ञानात्मना स्वरूपेण ज्वलत्येको जगद्ग्रसन् ॥३०॥
इति ज्वलन्तमाहुस्तं सर्वतो हरिमेधसम्[2]।

(सर्वतोमुखशब्दार्थनिरूपणम्)

मुखं शक्तिः समुद्दिष्टा सर्वतो यस्य सा स्थिता॥
सर्वतोमुखमाहुस्तं सर्वशक्तिं सनातनम्।

(नृसिंहशब्दार्थनिरूपणम्)

नराणां बन्धनं हन्ति [3]हिनस्तीति नृसिंहता॥३२॥

(भीषणशब्दार्थनिरूपणम्)

भियं [4]सनोति दुष्टानां भीषणस्तेन शब्यते।

---

1. ज्योतिस्त्रयं E F D.

2. आश्रितदुरितानि हरन्ती मेधा संकल्पो यस्य स हरिमेधाः, स्वप्राप्तिप्रतिबन्धक-स्वाश्रितदुरितविनाशविषयकामोघसंकल्पविशिष्ट इत्यर्थः.

3. छिनत्तीति A B C E F.

4. "षणु दाने" इति तानादिको धातुः.

(भद्रशब्दार्थनिरूपणम्)

भां ददाति रवौ भद्रां भावं द्रावयते सताम् ॥
भवं द्रावयते घोरं संसारं तापसंततम् ।

(मृत्युमृत्युशब्दार्थनिरूपणम्)

मृत्युरज्ञानमुद्दिष्टं मृत्युः प्राणापहारकः[1] ॥३४॥
मृत्युः संसार उद्दिष्टस्तेषां मृत्युर्यतो हरिः ।

(तदुपपादनाय प्रथममृत्युशब्दस्याज्ञानादित्रयपरत्वे निर्वचनप्रदर्शनम्)

मतिं त्यजत्यनेनेति मृत्युरज्ञानमुच्यते ॥३५॥
मृतिं तनोति जन्तूनामिति मृत्युरिति [2]स्थितिः ।
मृतिसंतानरूपत्वान्मृत्युः संसार उच्यते ॥३६॥

(द्वितीयमृत्युशब्दस्य प्रथममृत्युशब्दोदिताज्ञानादित्रयनाशकत्वपरत्वम्)

नाशकत्वमिहोद्दिष्टं मितमुत्तरमृत्युना ।

(अहंशब्दस्य चतुर्धाऽर्थवर्णनम्)

अं जिहीते हरिं याति स्वरूपेणेह तादृशः ॥३७॥
पूर्णानन्दस्वरूपो हि चेतनो निखिलो यतः ।
अहीनश्चाप्ययं सर्वैर्ज्ञानशक्त्यादिभिः स्वतः ॥
अह्वा वाप्यमितोऽयं स्यात्कालातीतो यतोऽखिलः ।
अह्नि वा माति जीवोऽयमहमर्थः स उच्यते ॥

1. ०हारणम् D.
2. स्थितः D.

अहः संकर्षणो ज्ञेयस्तस्मिञ्जीवोऽखिलः स्थितः ।

(अथ सांख्यमार्गेण मन्त्रार्थं प्रदर्शयितुमुग्र-भीषण-शब्दतात्पर्यार्थनिरूपणम् )

उग्रभीषणशब्दाभ्यां प्रोच्यतेऽव्यक्तरूपता ॥४०॥
उग्रमत्यन्तघोरं यद्भीषणं भयदायि च ।
अव्यक्तं तत्परिज्ञेयं भगवद्रूपमेव हि ॥४१॥

(ज्वलच्छब्दतात्पर्यार्थनिरूपणम् )

ज्वलन्तमितिशब्देन प्रोच्यते जीवरूपता ।
चैतन्यं ज्वलनं प्रोक्तं तत्कर्ता चेतनो ज्वलन् ॥
ज्वलन्नित्युच्यते सोऽयमसमाप्तविदिक्रियः ।
सर्वतः प्रकृतिं दृष्ट्वा दोषांश्चैव तदुद्भवान् ॥४३॥
विरक्तः सर्वथा तत्र यदा वेत्ति परं हरिम् ।
तदा समाप्यते तस्य वेत्तुः सर्वा विदिक्रिया ॥
अतः प्रकृतिनिर्मग्नो बुध्यमानो[1] य ईर्यते ।
संसारी स ज्वलन्सोऽपि भगवानिति भण्यते ॥

(वीरशब्दतात्पर्यार्थनिरूपणम्)

विविधं प्रेरयत्येतच्चेतनाचेतनं जगत् ।
यः कालो भगवद्रूपं वीरशब्देन स स्मृतः ॥४६॥

---

1. बध्यमानो A B C.

(महाविष्णुशब्दतात्पर्यार्थनिरूपणम्)

तत्तत्त्वत्रितयव्याप्तिर्विष्णुशब्देन[1] भण्यते[2] ।
व्याप्तौ तत्राप्यलिप्तत्वं तस्माच्चाधिकता च या ॥
महा[3] महत्त्वं पूज्यत्वं महच्छब्देन वर्ण्यते ।

(सर्वतोमुखशब्दतात्पर्यार्थनिरूपणम्)

सर्वतोमुखशब्देन प्रोच्यते सर्वशक्तिता ॥ ४८ ॥
सर्वज्ञता च देवस्य सर्वकर्तृत्वमेव च ।

(भद्रशब्दतात्पर्यार्थनिरूपणम्)

भद्रशब्देन देवस्य नित्यनिर्दोषतोच्यते ॥ ४९ ॥

(नृसिंहशब्दतात्पर्यार्थनिरूपणम्)

तथा नृसिंहशब्देन पुरुषोत्तमतोच्यते ।

(मृत्युमृत्युशब्दतात्पर्यार्थनिरूपणम्)

मोक्षप्रदत्वमेतस्य मृत्युमृत्युसमीरणात् ॥ ५० ॥

(अहंशब्दतात्पर्यार्थनिरूपणम्)

प्रसंख्यानेन या सिद्धा सिद्धिः कालेन भूयसा ।
प्रकृत्युत्तरता साक्षात्साऽहंशब्देन वर्ण्यते ॥ ५१ ॥

---

1. ०व्यापी D.
2. वर्ण्यते A B C.
3. महो A B C; अत्र मूले महाविष्णुशब्दैकदेशस्य 'महा' इत्यस्यानुकरणं कृतमिति ज्ञेयम्.

हिनस्ति गच्छतीत्यादिः प्राकृती याऽखिला क्रिया।
तत्कर्तृवाची हंशब्दस्तदन्योऽहंपदोदितः ॥५२॥
निरुपाध्यवमर्शोऽयं देहप्राणात्यये स्थितः।
अहमित्यास्पदं याति स जीवो निरुपस्कृतः ॥५३॥

(नमामिशब्दतात्पर्यार्थनिरूपणम्)

प्रसंख्यायेत्थमात्मानं प्रह्वीभवति यत्स्वयम्।
नद्या इवाम्बुधौ देवे प्रह्वीभावो निमग्नता ॥५४॥
इति ते सांख्यमार्गस्थो मान्त्रोऽर्थः सूक्ष्म ईरितः।
तत्प्रसंख्यानतत्त्वज्ञा विशन्ति पुरुषोत्तमम्।
योगमार्गस्थितं तस्य मत्तो रूपं निशामय ॥

इति श्रीपाञ्चरात्रे तन्त्ररहस्ये अहिर्बुध्न्यसंहितायां
नारसिंहानुष्टुभमन्त्रार्थनिरूपणं नाम चतुःपञ्चाशोऽध्यायः।

ओम्।

(आदितः श्लोकाः ३५३३)

---

1. देहप्राणीयबोधितः D.

ओम् ।

## श्रीनारसिंहानुष्टुभमन्त्रार्थनिरूपणं नाम

## पञ्चपञ्चाशोऽध्यायः ।

ध्यातं सकृद्भवानेककोट्यघौघं हरत्यरम् ।
सुदर्शनस्य तद्दिव्यं भर्गो देवस्य धीमहि ॥

(तत्र योगमतानुसारेण मन्त्रार्थनिरूपणप्रतिज्ञा)

अहिर्बुध्न्यः ।

निर्ब्रुवन्ति यथा योगा¹ मन्त्रमेतं विचक्षणाः ।
तथा वाच्यस्तव मुने तन्मे निगदतः शृणु ॥१॥

(उग्रशब्दार्थनिरूपणम् )

उद्गतः² क्रुध इत्येवमुग्रः करणरोधनात्³ ।

(वीरशब्दार्थनिरूपणम् )

विधृता येन विजिता ईरा देहस्थवायवः ॥२॥

---

1. योगं A B C E F.
2. उद्गतः क्रुद्ध A B C E F; उद्गतं रुद्रः D.
3. करुणबोधता (?) A; °बोधनात् B C E.

[1]स वीर उदितो योगैस्तन्त्रविज्ञानपारगैः ।

(ज्वलच्छब्दार्थनिरूपणम् )

जितेन्द्रियो जितश्वासो योऽन्तर्ज्वलति सर्वतः ॥
[2]अनिन्द्रियव्यवच्छेदात्सर्वतः प्रसृतो ज्वलन् ।

(सर्वतोमुखशब्दार्थनिरूपणम् )

सर्वतोमुख उद्दिष्टः सर्वज्ञानमयो हरिः ॥४॥

(भीषणशब्दार्थनिरूपणम्)

भा सम्यग्ज्ञानमुद्दिष्टं तस्याः प्रेरणमीषणम् ।
भेषणो भीषणः प्रोक्तो भगवान्विश्वभावनः ॥५॥

(महाविष्णु-नृसिंह-भद्र-मृत्युमृत्यु-शब्दार्थस्य पूर्वोक्तत्वसूचनम् )

महाविष्णुर्नृसिंहौ च मृत्युमृत्युश्च पूर्ववत् ।

(संपिण्डितवाक्यार्थनिरूपणम् )

जितेन्द्रियसमीराद्यं जीवरूपं व्यवस्थितम् ॥६॥
व्यापिनं महनीयं च धियां सम्यक्प्रचोदकम् ।
संसारमोचकं चैव यं विदुः पुरुषोत्तमम्[3] ॥७॥
नमामि तमहं देवमिति योगानुशासनम् ।

---

1. स इत्यादिश्लोकत्रयं C पुस्तके लुप्तम्.
2. अतीन्द्रिय° E.
3. श्लोकोऽयं C पुस्तके लुप्तः.

(अथ पाशुपतमतानुसारेण मन्त्रार्थनिरूपणे उग्रशब्दार्थनिरूपणम् )

उग्रव्रतसमाराध्य उग्रशब्देन वर्ण्यते ॥८॥

(वीरशब्दार्थनिरूपणम् )

तत्पारयितृवन्द्यत्वं वीरशब्देन वर्ण्यते ।

(सर्वतोमुखशब्दार्थनिरूपणम् )

मलत्रयप्रागभावः सर्वतोमुखशब्दितः ॥९॥

(ज्वलच्छब्दार्थनिरूपणम् )

संविद्घनत्वमाद्यस्य ज्वलच्छब्देन वर्ण्यते ।

(भीषणशब्दार्थनिरूपणम् )

अर्थपञ्चकरूपस्तु पाशो भीशब्ददर्शितः ॥१०॥

भियं स्यति द्यति स्पष्टं पाशं छिन्ते पशोरिति ।

पशुपाशच्छिदं वक्ति शब्दो भीषण इत्ययम् ॥

(मृत्युमृत्युशब्दार्थनिरूपणम् )

शिवंकरत्वमीशस्य मृत्युमृत्युपदोदितम् ।

(पदान्तरार्थस्य पूर्वप्रदर्शितत्वसूचनम् )

महाविष्णुर्नृसिंहश्च पूर्वमेव प्रदर्शितौ ॥१२॥

---

1. उग्रव्रतैः समाराध्यः A B C E F.
2. श्लोकोऽयं भ्रान्त्या त्यक्तः C पुस्तके.
3. पाशच्छित्तिः A B C E F.

(संपिण्डितवाक्यार्थनिरूपणम्)

उग्रव्रतप्रियं नित्यमुग्रव्रतपरार्चितम् ।
मलत्रयापरामृष्टं चिद्घनं पाशभेदिनम् ॥१३॥
शिवं वदन्ति यं विष्णुं महान्तं पुरुषोत्तमम् ।
नमाम्यहं तमित्येवमर्थः पाशुपते स्मृतः ॥१४॥

(त्रय्यन्तमतानुसार्यर्थस्य पूर्वनिरूपितत्वसूचनम्)

त्रय्यन्तपदवीवेद्यः पूर्वमेव निरूपितः ।

(अथ सात्वतमतेन मन्त्रार्थनिरूपणे तस्य परमरहस्यत्वज्ञापनायानवधानता-परिहरणपूर्वकं श्रोतव्यत्वविधिः)

अर्थं सात्वतसंवेद्यमप्रमत्तोऽवधारय ॥१५॥

(तत्रोग्रशब्दस्य संकर्षणाख्यव्यूहपरत्वम्)

उद्गिरत्यमलं शास्त्रमुद्गीर्य रमयत्यपि ।
गिरत्यन्ते च तच्छास्त्रमुग्रः संकर्षणः स्मृतः ॥१६॥

(वीरशब्दस्य प्रद्युम्नाख्यव्यूहपरत्वम्)

विना कृत्वा प्रेरयति रजसा तमसा त्रयीम् ।
वीरां करोति तां विद्यां वेद्यमानवसर्गयोः ॥१७॥
वीरयत्यपि चात्मानं तमोमधुनिघातने ।
व्यापारयति शास्त्रार्थानुष्ठाने कर्म निर्मलम् ॥१८॥
अतो वीरं वदन्त्याद्यं प्रद्युम्नं पुरुषोत्तमम् ।

---

1. पूर्वाध्याये सप्तदशाच्छ्लोकात्प्रक्रम्य चत्वारिंशश्लोकपूर्वार्धान्तैः सार्धत्रयोविंशत्या श्लोकैर्निरूपित इति प्रोध्यम्.

(महाविष्णुशब्दस्यानिरुद्धाख्यव्यूहपरत्वम्)

महान्भवति चेष्टाभिरनिरुद्धश्च सर्वतः ॥१९॥
एकत्रिचतुरीहाभिस्ते पूर्वे मितवृत्तयः ।
कार्यस्य च मितत्वेन तेषां शक्तिर्निरोधिता ॥२०॥
आम्नायन्तेऽनिरुद्धे तु चेष्टाः संख्यानवर्जिताः ।
कार्याण्यपरिमेयानि सृष्टिस्थित्यादिकानि तु ॥
शक्तिस्तद्विषया या तु या व्याप्तिर्विष्णुता च सा ।
सा चानिरुद्धता तस्य तुर्यव्यूहस्य शार्ङ्गिणः ॥
महाविष्णुस्ततः प्रोक्तः सोऽनिरुद्धो विचक्षणैः ।

(ज्वलच्छब्दस्य रामकृष्णादिप्रादुर्भावगणरूपविभवपरत्वम्)

विकासो ज्वलनं प्रोक्तं तस्य ब्रह्माण्डमध्यतः ॥
यद्वदन्त्यवतारं तु वैभवं हरिमेधसः ।

(सर्वतोमुखशब्देनावताराणां सौलभ्यकाष्ठाभूमिभूतनानायोनित्वबोधनम्)

सर्वतोमुखशब्देन नानायोनिनिवेशनम् ॥२४॥

(भद्रशब्दस्यावतारदशायामपि हेयसंबन्धराहित्यपरत्वम्)

भद्रत्वं तत्र तस्यापि ह्यजहत्स्वस्वभावता ।

(भीषणशब्दस्य मोक्षप्रदत्वपरत्वम्)

भियः संसारबन्धस्य सानं भीषणता मता ॥२५॥

---

1. "षोऽन्तकर्मणि" इतिधातोर्ल्युट् सानं उन्मोचनम्.

सा[1] सप्रकारविज्ञान[2]मात्रलभ्योपदिश्यते ।

(मृत्युमृत्युशब्देन भद्रशब्दोदितस्य हेयप्रतिभटत्वस्य स्वाभाविकत्वबोधनम् )

हेयप्रत्यर्थिता या सा ब्रह्मणः सार्वकालिकी ॥२६॥

स्वाभाविकी च सा प्रोक्ता मृत्युमृत्युपदेन तु ।

(नृसिंहशब्दस्य द्विविधव्याप्तिपरत्वम् )

नृनात्मनोऽनुबध्यान्तर्हित्वैनान्परितोऽपि च ॥

या स्थितिस्तस्य देवस्य पुरुषोत्तमताऽऽह्वया ।

सोक्ता नृसिंहशब्देन

(अथ संपिण्डितवाक्यार्थनिरूपणम् )

सैष[3] वाक्यार्थ उच्यते ॥२८॥

---

1. सा च साकार° A B C E F; सा च प्रकार° D.

2. अत्र विज्ञानपदं व्यूहविभवार्चनादिरूपस्य कर्मणोऽप्युपलक्षकम्। ज्ञानपूर्वकनिष्कामकर्मलभ्यत्वात्परमपुरुषार्थस्य । तथा चायमभिप्रायः—वासुदेवाख्यं हि परं ब्रह्म संपूर्णषाड्गुण्यविग्रहं स्वाश्रितजनसौकर्याय सूक्ष्म-व्यूह-विभव-भेदभिन्नं भक्तैर्यथाधिकारं ज्ञानपूर्वेण कर्मणाऽभ्यर्चितं सम्यक्प्राप्यते । तत्र रामकृष्णादिप्रादुर्भावगणस्वरूपं तस्याजहत्स्वस्वभावतां च भद्रशब्दविवक्षितां ज्ञात्वाऽनुष्ठीयमानाद्वर्णाश्रमधर्मसहकृताद्विभवार्चनाद्व्यूहप्राप्तिः ; वासुदेव - संकर्षण-प्रद्युम्ना - निरुद्धा-ख्यव्यूहस्वरूप - तत्कृत्यविशेषादिप्रकारविज्ञानपूर्वकमनुष्ठीयमानात्सेतिकर्तव्यताकाद्व्यूहार्चनाद्वासुदेवपदाभिलप्य-सूक्ष्माख्य - परब्रह्मप्राप्तिः । इतिकर्तव्यतास्थानापन्नवर्णाश्रमधर्मोपकृतात्प्रकारविशिष्टप्रकारिविज्ञानादेव पुरुषार्थलाभ इत्युक्तं भवतीति । अत्र प्रमाणानि तु पौष्करसंहितायां द्रष्टव्यानि.

3. "सोऽचि लोपे चेत्पादपूरणम्" (अष्टा° 6-1-134) इत्यनेन तच्छब्दसंबन्धिनः सोर्लोपः । पादग्रहणेनात्र वामनमते ऋक्पादमात्रग्रहणेऽपि मतान्तरे श्लोकपादस्यापि ग्रहणात्.

संकर्षणादिरूपेण व्यूह्यात्मानं त्रिधा स्थितः ।
तत्तदाश्रितकार्याय यो विभुः सर्वतोमुखः ॥२९॥
नानाविभवरूपेण ज्वलत्यन्तर्भवोदरे ।
एवं ज्वलन्भवत्येव भद्रो भद्रतरस्तथा ॥३०॥
एवं विज्ञातमात्रो यो भीषणो बन्धनाशकृत् ।
मृत्योर्हेयस्वरूपस्य मृत्युः प्रतिभटो यतः ॥३१॥
तमहं व्यूहविभवविज्ञानसुलभं नृणाम्[1] ।
अन्तर्बहिरिदं व्याप्य तिष्ठन्तं पुरुषोत्तमम् ॥३२॥
नृसिंहं करणैः सर्वैरात्मत्वेनानुसंदधे ।
इति सात्वतसिद्धार्थो लेशतस्ते निदर्शितः ॥३३॥
सूक्ष्मो नानाविधोऽर्थो यः

(अथ परार्थवर्णने प्रथममुग्रपदस्य संकर्षणाख्यव्यूहपरत्वकथनम् )

[2]परमद्य निशामय ।
अशेषभुवनाधारः संसारगदनाशनः ॥३४॥

---

1. अनयोरर्धयोः सर्वेषु मातृकाकोशेषु स्थानविनिमयो दृश्यते.

2. इदमत्र रहस्यम्—नारसिंहानुष्टुभमन्त्रस्य परार्थवर्णनं नाम मन्त्रवर्णानाम-प्रमेयादिभावसंसिद्धव्यूह-विभव-परत्वप्रदर्शनम् । तथा हि—आनुष्टुभे ह्येकादश पदानि । तत्र प्रथमान्तं कर्तृकारकबोधकं चरमं पदम् । उत्तमपुरुषैकवचनान्तं नमनक्रियावाचि दशमम् । अवशिष्टानि नव द्वितीयैकवचनान्तानि पदानि नमिकर्मीभूतवस्तुविशेषबोधकानि । तत्राद्यं पदत्रयं क्रमात्संकर्षण-प्रद्युम्ना-निरुद्धाख्य-व्यूहत्रयपरम् । ज्वलदादिपदषट्कं तु पञ्चमाध्यायावसानप्रतिपादितस्य पद्मनाभादेः पातालशयनान्तस्य विभवानामेकोनचत्वा-रिंशतो यथासंभवं प्रतिपादकम् । तत्र 'परमद्य निशामय' इत्यादिनाऽध्यायशेषेण संकर्षणादिव्यूहपरत्वमुग्र-वीर-महाविष्णु-शब्दानां प्रदर्श्यते । बहुवक्तव्यत्वात्पृथगध्याया-रम्भेण ज्वलदादिपदानां पद्मनाभादिपरत्वमुत्तराध्याये प्रदर्शयिष्यत इति । तत्र 'अशेषभुवना-धारः' इत्यादेः सार्धश्लोकत्रयस्यायमाशयः—उग्रपदस्थैरुकार-गकार-रेफैर्व्युत्क्रमेण गुणत्रयं

उद्दाम उदयो विष्णोः संकर्षणसमाह्वयः ।
उग्रवर्णैः समुद्दिष्टो वैष्णवः प्रथमोदयः ॥३५॥

(तदुपपादनम्)

तिलकालकवद्यस्मात्तत्र विश्वं प्रकाशते ।
दिव्यशास्त्रोपदेशेन गदं ध्वंसयते यतः ॥३६॥
उद्दामः सोऽप्रतिहतो विष्णोरुदय उज्ज्वलः ।
अत उग्रपदोद्दिष्टो देवः संकर्षणः प्रभुः ॥३७॥

(अथ वीरपदेन प्रद्युम्नव्यूहप्रतिपादनम्)

अमृताधाररूपश्च मायावांश्च[1] ततोऽनलः ।
प्रद्युम्नो वीरशब्देन गदितः पुष्करेक्षणः[2] ॥३८॥

(तदुपपादनम्)

अमृतं[3] भगवद्धर्मस्तस्याधारः समाश्रयः ।

---

विवक्षितम्। रेफेणाशेषभुवनाधारत्वम्, गकारेण संसारगदनाशकत्वम्, उकारेणोद्दामत्व-विशेषितमुदयरूपत्वम् । रेफादिभिः स्वपर्यायभूताशेषभुवनाधारादिशब्दान्तराण्युपस्थाप्य तन्मुखेन यथोक्तगुणोपस्थापनसंभवात् । अशेषभुवनाधारादिशब्दानां रेफादिपर्यायत्वं च प्रपञ्चितं सप्तदशे । उदये उद्दामत्वं चाप्रतिहतत्वम्। तथा चाशेषभुवनाधारत्वादिगुण-विभूषितोऽप्रतिहतो विष्णोः प्रथमोदयः संकर्षण एव भवतीति स एवोग्रपदावयवैर्वर्णैः समुद्दिष्ट इति । अनयैव दिशा वीरादिपदेष्वप्यर्थगतिरभ्यूह्या ।

1. माधवश्च B.
2. पुरुषोत्तमः B C.
3. अमृतो A B C E F.

सद्धर्मस्य ह्यधिष्ठाता प्रद्युम्नो धर्मसंश्रयः ॥३९॥
माया ज्ञानं यतो विद्यां संबोधयति मायया ।
दहत्यनलवच्चैव विद्यादोषं तमोमयम् ॥४०॥
वीरवर्णैरतो देवः प्रद्युम्नः परिकीर्त्यते ।

(महाविष्णुशब्देनानिरुद्धव्यूहसंकीर्तनम् )

कालः प्रधानमाधारस्तयोः प्राणः सदाऽभवत् ॥
गोपनश्च तयोर्नित्यं वृण्वानः सकला गतीः ।
एधयन्मानवं गर्भं तत्तत्संवत्सरैः क्रमात् ॥४२॥
अग्निरूपो जगत्यस्मिन्भास्करश्च स्वयं भवन् ।
भुवनाभयदश्चैव वैकुण्ठोऽविहतं जगत् ॥४३॥
शासिता स्वयमध्यक्षो महाविष्णुर्विवर्णितः ।

(तदुपपादनम् )

पुष्करं कालरूपेण धत्ते नाभिसमुद्भवम् ॥४४॥
अन्तःस्थपुरुषं चैव प्रधानं तद्गतं दधत् ।
कालप्रधानशब्दाभ्यामभेदेनाभिधीयते ॥४५॥
प्राणयन्कालतः सांख्यकालजीवत्रयीत्रयम् ।
प्राणवर्णेन निर्दिष्टो गोपनो गोपनाख्यया ॥४६॥

---

1. स धर्मस्य A B C E F.
2. धर्मसंज्ञकः D.
3. तयोर्यः प्राणदोऽभवत् B C E F.
4. प्राणयत् (?) A B C D.

कार्याणि गतयः प्रोक्तास्ताश्च वृण्वंश्चिकीर्षया ।
उक्तो वरुणवर्णेन सा हि तस्यानिरुद्धता ॥४७॥
गर्भे कालस्थविद्यायां जीवमन्वष्टकात्मकम् ।
पुष्णन्नब्दसहस्रेण देव इन्द्रार्णवर्णितः ॥४८॥
अग्निसूर्यादिके चैव देवसर्गे हि [1]वैद्यके ।
तत्तद्देवप्रवेशेन तत्तन्नाम दधत्स्वयम् ॥४९॥
अग्निभास्करवर्णेन स्वयं देव उदीर्यते ।
कालाद्यवनिपर्यन्तं चेतनाचेतनात्मकम् ॥५०॥
भुवनार्णोदितं यत्तद्भुवनाङ्गविचित्रितम् ।
तस्य दुष्टनिबर्हेण यो ददात्यभयं सदा ॥५१॥
यश्चाविहत एवासीत्तत्तत्कार्यसमुद्यमे ।
अनुप्रविश्य भूतानि योऽध्यक्षः संनियच्छति ॥
एषोऽभयदवैकुण्ठशास्तृवर्णेन वर्ण्यते ।
इति व्यूहाः समुद्दिष्टा उग्रादित्रितयेन तु ।
ज्वलदादिनिरूप्योऽर्थो ह्यतःपरमुदीर्यते ॥५३॥

इति श्रीपाञ्चरात्रे तन्त्ररहस्ये अहिर्बुध्न्यसंहितायां
नारसिंहानुष्टुभमन्त्रार्थनिरूपणं नाम पञ्चपञ्चाशोऽध्यायः ।

ओम् ।

(आदितः श्लोकाः ३५८६)

---

1. पैतृके A B C E F.

ओम् ।

## श्रीनारसिंहानुष्टुभमन्त्रार्थनिरूपणं नाम

## षट्पञ्चाशोऽध्यायः ।

ध्यातं सकृद्भवानेककोट्यघौघं हरत्यरम् ।
सुदर्शनस्य तद्दिव्यं भर्गो देवस्य धीमहि ॥

(अथ ज्वलदादिपदानां पद्मनाभाद्येकोनचत्वारिंशदवतारपरत्ववर्णनप्रतिज्ञा)

अहिर्बुध्न्यः ।

वैभवं देवताचक्रं ज्वलदाद्यर्णवर्णितम् ।
यथा तद्वर्ण्यते तैस्तैस्तथा तदवधारय ॥ १ ॥

(तत्र ज्वलत्पदविवक्षितेष्वेकादशस्ववतारेषु जकारस्य
पद्मनाभाख्यप्रथमावतारपरत्वम् )

अवतारो हि यो विष्णोः पद्मनाभो महोदयः ।

---

1. अत्रायं तत्तदवतारपरवर्णविभागक्रमः—जकारः, वकारः, वकारोत्तराकारः, लकारः, पुनर्लकारः, पुनश्च लकारः, नकारः, तकारः, पुनस्तकारः, पुनश्च तकारः, अम्प्रत्ययः, इत्येवं ज्वलत्पदावयवैरेकादशभिर्वर्णैः पद्मनाभाद्येकादशावतारविवक्षेति.

2. अत्र तत्तदवताराणां तत्तत्संख्यत्वेन परिगणनं पञ्चमाध्यायोक्तक्रममनुरुध्येति ज्ञेयम्.

अजितः कुत्रचित्कैश्चित्सोऽजितार्णेन वर्ण्यते ॥२॥

(वकारस्य कान्तात्माऽमृतधारकाख्यविंशावतारपरत्वम्)

अमृताधारवर्णेन कान्तात्माऽमृतधारकः ।

(वकारोत्तराकारस्यैकाम्भोनिधिशाय्याख्यचतुर्दशावतारपरत्वम्)

तत्रैवार्णवशायी च वरुणस्थाप्रमेयतः ॥३॥

(लकारस्य शक्त्यात्माख्यचतुर्थावतारपरत्वम्)

धरेशेन तु शक्तीशो धरा शक्तिर्हि वैष्णवी ।

(तस्यैव संज्ञान्तरमुखेन हरि-कृष्णाख्य-त्रयस्त्रिंश-चतुस्त्रिंशावतारद्वयपरत्वम्)

विबुधो हरिरुद्दिष्टः कृष्णस्तु पुरुषेश्वरः ॥ ४ ॥
विबुधाख्येन वर्णेन वर्ण्यते पुरुषेश्वरः ।
तावुभौ कथितौ देवौ नरनारायणात्मकौ[1] ॥ ५ ॥

(नकारस्य धर्माख्यद्वादशावतारपरत्वम्)

स्वर्गापवर्गयोः[2] पन्था यो हि धर्मः सनातनः ।
स धरेशोत्तरेणैव[3] पथा देव उदीर्यते ॥ ६ ॥

(तकारस्यानन्ताख्यतृतीयावतारपरत्वम्)

ताललक्ष्मा हि भगवान्योऽनन्तः परिपठ्यते ।

---

1. नरनारायणानुजौ A E F; नरनारायणावुभौ D.
2. भोगापवर्गयोः A B C E F.
3. षड्वंशेनोत्तरेणैव (?)B E F.

स देवो धरणीधर्ता कथ्यते काललक्ष्मणा ॥ ७ ॥

(तस्यैव संज्ञान्तरमुखेन कूर्म-विद्याधिदेवाख्य-पञ्चदश-षष्ठा-वतारद्वयपरत्वम् )

लोकमालाः स्रजः प्रोक्ताः स्रग्धरः कूर्म[1] उच्यते ।

विराड्विद्योदिता सद्भिर्वैराजश्च तदीश्वरः ॥ ८ ॥

वैराजस्रग्धराख्येन तौ देवौ परिकीर्तितौ ।

(अम्प्रत्ययावयवयोरकारमकारयोः कालनेमिघ्नाख्यद्वाविंशावतारपरत्वम् )

अप्रमेयनिगीर्णेन कालेन पुरुषोत्तमः ॥ ९ ॥

उच्यते कालनेमिघ्नो यः कालः स दुरासदः ।

(अथ सर्वतोमुखशब्दविवक्षितेषु दशस्ववतारेषु[2] सकारस्य पीयूषहरणाख्याष्टादशावतारपरत्वम् )

अप्रमेयसमाक्रान्तममृताक्षरमुत्तमम् ॥ १० ॥

अमृताहरणं वक्ति पुरुषं पुष्करेक्षणम् ।

(तस्यैव संज्ञान्तरमुखेन श्रीपत्याख्यैकोनविंशावतारपरत्वम् )

अप्रमेयसमाक्रान्ता सैव तृप्तिः सनातनी ॥ ११ ॥

श्रीपतिं वक्ति देवेशं श्रीः सा[3] तृप्तिरुदीरिता ।

---

1. कर्म (?) A B C E F; क्रम D.

2. अत्रायं वर्णविभागक्रमः—सकारः, पुनःसकारः, सरेफो वकारः, पुनरकारशिरस्को वकारः, तकारः, ओकारः, पुनरोकारः, पुनश्च मकारशिरस्क ओकारः, उकारपूर्वको मकारशिरस्कः खकारः, पुनः खकारः, इत्येवं सर्वतोमुखशब्दावयवैर्दशभिर्वर्णैः पीयूषहरणाद्यवतारदशकविवक्षेति.

3. स तृप्ति° D.

(सरेफस्य वकारस्य वराहाख्यषोडशावतारपरत्वम्)

अशेषभुवनाधारवराहसमुदायतः ॥ १२ ॥
अशेषभुवनाधारो वराहः परिगीयते ।

(अकारशिरस्कस्य तस्यैव वकारस्य संज्ञान्तरमुखेन पातालशयनाख्यैकोनचत्वारिंशावतारपरत्वम्)

अप्रमेयसमाक्रान्ताद्वरुणादेव चाक्षरात् ॥१३॥
पातालशायी भगवान्देवदेवो निरुच्यते ।

(तकारस्य वागीश्वराख्यत्रयोदशावतारपरत्वम्)

स्रग्वाक्प्रोक्ता मुनीन्द्रैः सा सृजती दधती जगत् ॥
वागीशः स्रग्धरार्णेन द्वि[1]तीयेन निरुच्यते ।

(ओकारस्य त्रिविक्रमाख्यत्रिंशावतारपरत्वम्)

यः स देवो बलेर्नेता पृथिवीं त्रिर्विचक्रमे ॥१५॥
हरिर्विक्रमिणा तेन वर्णेन परिगीयते ।

(तस्यैव संज्ञान्तरमुखेन विश्वरूपाख्याष्टमावतारपरत्वम्)

[2]ओतो देवो हि यो विश्वं रूपेण स्वेन दीव्यता ॥
विश्वरूपः स देवोऽसावोतदेवेन वर्ण्यते ।

(तस्यैव मकारशिरस्कस्य संज्ञान्तरमुखेन वडबावक्त्राख्यैकादशावतारपरत्वम्)

ओदनेन समाक्रान्तो मर्दनो वर्ण उ[3]त्तरः ॥१७॥

---

1. अत्र द्वितीयत्वं ज्वलत्पदस्थतकारापेक्षया.
2. ओत इति कर्तरि क्तः.
3. उत्तमः D.

वक्त्यौर्वं वडवावक्त्रं देवदेवं जलाशनम् ।

(तदुपपादनम्)

ओदनं जलमुद्दिष्टमोदनस्य प्रसूर्यतः ॥१८॥
जलं मृद्नन्स पानेन देव ओदनमर्दनः ।

(उकारपूर्वकस्य मकारशिरस्कस्य खकारस्य वामनदेहाख्यैकोन-त्रिंशावतारपरत्वम्)

खर्वदेहो हि यो वर्णः सोद्दामोदयमर्दनः ॥१९॥
वामनं वक्ति सुव्यक्तं याचितारं बलिं भुवम् ।

(तदुपपादनम्)

उद्दाममुदयं व्याप्तिं स हि मृद्नाति वामनः ॥२०॥

(तस्यैव संज्ञान्तरमुखेन वेदविदाख्यसप्तत्रिंशावतारपरत्वम्)

स एव वर्णो वेदात्मा वक्ति वेदविदं हरिम् ।

(अथ नृसिंहशब्दविवक्षितेषु नवस्ववतारेषु नकारस्य नर-नारायणाख्यैकत्रिंश-द्वात्रिंशावतारद्वयपरत्वम्)

नरो नारायणश्चैव नरनारायणाक्षरात् ॥२१॥

(ऋकारस्य पारिजातहरणाख्यत्रयोविंशावतारपरत्वम्)

सत्या यस्य स सत्योऽसौ पारिजातहरो महान् ।
स सत्यार्णेन कथितः सत्यामङ्कस्थितां वहन् ॥

---

1. अत्रायं वर्णविभागक्रमः—नकारः, पुनर्नकारः, ऋकारः, मकार-नकार-ऋकार-सकार-रूपवर्णचतुष्टयसमुदायः, इकारः,. पुनरिकारः, ङकारः, हकारः, प्रत्ययावयवो मकारः, इत्येवं नृसिंहशब्दावयवैर्नवभिर्वर्णैर्नरनारायणाद्यवतारनवकविवक्षेति.

(मैकार-नकार-ऋकार-सकार-रूपवर्णचतुष्टयसमुदायस्य राहुजिदाख्यैकोन-विंशावतारपरत्वम्)

खर्वदेहात्परो यो हि मर्दनः सहितः पथा ।
अङ्कुशस्तत्परः सोम इति वर्णचतुष्टयात् ॥२३॥
सोमस्य चरतो मार्गाद्योऽङ्कुशो राहुरुच्यते ।
तं मर्दयति यो देवो राहुजित्स निरुच्यते ॥२४॥

(इकारस्य परशुराम-श्रीरामाख्याष्टाविंशैकोनत्रिंशावतारद्वयपरत्वम्)

रामद्वयं समुद्दिष्टं रामवर्णेन नारद ।

(ङँकारस्य क्रोडात्माख्यदशमावतारपरत्वम्)

एकदंष्ट्रेण भगवान्क्रोडँात्मा परिगीयते ॥२५॥

(हकारस्य विहङ्गमाख्यनवमावतारपरत्वम्)

सूर्येण यः सहायाति हंसरूपी जनार्दनः ।
विहङ्गमः स देवेशः सूर्यवर्णेन वर्ण्यते ॥२६॥

---

1. अयं च मकारो मन्त्रपूर्वार्धचरमावयवभूत आकाङ्क्षाऽऽसत्तियोग्यताबलादर्थगत्यनुरोधेनात्रानुषक्तः, न तु नृसिंहशब्दावयवभूतः । मन्त्रशास्त्रप्रक्रियया नृसिंहशब्दे मकारराहित्यस्यानुपदमेव वक्ष्यमाणत्वात् । अत एव मूले 'खर्वदेहात्परः' इति खकारात्परत्वेन मकारोऽयं विशेष्यते ।

2. इदमत्रावधेयम्—सिंहशब्दस्य हि द्वयी गतिः शब्दानुशासनसिद्धा । तद्यथा—"षिच-क्षरणे" इतिधातोः "सिचेः संज्ञायां ह-नुमौ कश्च" इत्यौणादिकानुशासनेन कप्रत्यये नुमागमे धातोरन्त्यस्य चकारस्य हकारादेशे च कृते सिंह इति रूपनिष्पत्तिरित्येका गतिः; पृषोदरादेराकृतिगणत्वात्सिंहशब्दस्य तदन्तःपाठमङ्गीकृत्य "हिसि-हिंसायां" इतिधातोः पचाद्यचि हकारसकारयोः स्थानव्यत्ययेन सिंह इतिरूपसिद्धिरित्यपरा । तामिमां द्वयीमपि गतिमभ्युपगम्यैतावान्भेदो मन्त्रशास्त्रेषु प्रायः स्वीकृतः । यत् सिंहशब्दावयवस्य पवर्गपञ्चमस्य स्थाने कवर्गपञ्चमोच्चारणम् । अतोऽत्र स्वशास्त्रमर्यादामनुरुध्य सिंहशब्दे मकारमसन्तं कृत्वा ङकारस्यैव तत्स्थानपतितत्वबुबोधयिषयैकदंष्ट्रशब्दप्रयोग इति ।

3. क्रोधात्मा E.

(प्रत्ययावयवस्य भकारस्य कल्क्याख्याष्टत्रिंशावतारपरत्वम् )

[1]यो मर्दयति कल्क्याख्यो दस्यूँस्तिष्ययुगान्तजान् ।
सूर्योपरिस्थितेनैव मर्दनेन स गीयते ॥२७॥

(अथ भीषणशब्दविवक्षितेषु [2]चतुर्ष्ववतारेषु भकारस्य ध्रुवाख्यद्वितीयावतारपरत्वम् )

ध्रुवो देवः समुद्दिष्टो ध्रुवार्णेन महामुने ।

(ईकारस्य न्यग्रोधशायिसंज्ञकसप्तविंशावतारपरत्वम् )

मायामयं समास्थाय न्यग्रोधदलमुज्ज्वलम् ॥२८॥
यः शेते कान्तरूपेण स मायावर्णवर्णितः ।

(षकारस्य नारसिंहाख्यसप्तदशावतारपरत्वम् )

नृसिंहो देवदेवस्तु नृसिंहार्णेन वर्ण्यते ॥२९॥

(णकारस्य मधुसूदनाख्यपञ्चमावतारपरत्वम् )

मधुं निहत्य यः पूर्वं प्रधानं मर्दनं विधेः ।
स्वबाहुबलमास्थाय विरिञ्चायाभयं ददौ ॥३०॥
देवो ह्यभयदार्णेन स उक्तो मधुसूदनः ।

(अथ भद्रशब्दविवक्षितेषु [2]त्रिष्ववतारेषु भकारस्य कपिलाख्यसप्तमावतारपरत्वम् )

सिद्धिं ददाति यो दिव्यां प्रसंख्यानमयीं पराम् ॥

---

1. इत आरभ्य श्लोकत्रयं A E पुस्तकयोर्भ्रान्त्या त्यक्तम्.

2. अत्रायं वर्णविभागक्रमः—भकारः, ईकारः, षकारः, णकारः, इत्येवं भीषणशब्दावयवैश्चतुर्भिर्वर्णैर्ध्रुवाद्यवतारचतुष्कविवक्षेति ; भकारः, दकारः, रेफः, इति भद्रशब्दावयवैस्त्रिभिर्वर्णैः कपिलाद्यवतारत्रयविवक्षेति च.

देवः सिद्धिप्रदार्णेन कपिलः स निगद्यते ।

(दकारस्य दत्तात्रेयाख्यषड्विंशावतारपरत्वम्)

दत्तात्रेयस्तु भगवान्दत्तात्रेयार्णवर्णितः ॥३२॥

(रेफस्य शान्तात्माख्यपञ्चविंशावतारपरत्वम्)

दोषकालानलत्वेन तद्वर्णेन स ईर्यते ।

(अथ मृत्युमृत्युशब्दविवक्षितेऽवतारद्वये प्रथममृत्युशब्दस्यैकशृङ्गतनुसंज्ञक-मत्स्यापरपर्यायाष्टाविंशावतारपरत्वम्)

कालः कालः समुद्दिष्टः प्रधानं प्रकृतिः परा ॥३३॥
ऋतधामा पुमांस्तत्स्थो वैराजश्च चतुर्गतिः ।
भुवनं च दधद्देहे यः शङ्खो मीन ईर्यते ॥३४॥
एकशृङ्गतनुर्देवो मृत्युवर्णैः स गद्यते ।

(द्वितीयमृत्युशब्दस्य लोकनाथाख्यचतुर्विंशावतारपरत्वम्)

प्रधानः सत्यरूपश्च वैराजो राजयञ्जगत् ॥३५॥
चतुर्गतिर्देवदेवो लोकनाथो महाप्रभुः ।
मृत्युवर्णसमुद्दिष्टः पूर्वस्माद्भुवनादपि ॥३६॥
इति वर्णाश्रया रीतिः परा ते संप्रदर्शिता ।

(अथाध्यायशेषेण मन्त्रस्य महिमान्तरनिरूपणम्)

शृणु मन्त्रस्य माहात्म्यं भूयोऽपि मुनिसत्तम ॥

---

1. मृत्युशब्दद्वयेनावतारद्वयविवक्षेति स्पष्टमेव । तदेवं ज्वलत्पदेनैकादशावताराः, सर्वतोमुखशब्देन दश, नृसिंहशब्देन नव, भीषणशब्देन चत्वारः, भद्रशब्देन त्रयः, मृत्यु-मृत्युशब्देन द्वौ, इति ज्वलदादीनां षण्णां शब्दानामेकोनचत्वारिंशदवतारपरत्वं प्रपञ्चितम् ।

पादशः प्रतिलोमोऽयं [1]वैकुण्ठास्त्रं निगद्यते ।
अक्षरप्रतिलोमोऽयं स्मृतं नारायणास्त्रकम् ॥३८॥
स्वराणां प्रतिलोमो यः [2]संहिताशब्दरूपवान् ।
नारसिंहमहास्त्रं तन्नखककचसंज्ञितम् ॥३९॥
[4]प्रमित्यपेतो वरुणः कालपावकसं[3]स्थितः ।
अप्रमेयः पुनस्ताद्दक्तृतीयाक्षरमीरितम् ॥४०॥
सूक्ष्मस्थः प्रथमः सूक्ष्मः संस्थितः कालपावकः ।
वरुणः सूक्ष्मयोर्द्वन्द्वं सप्तमाक्षरमीरितम् ॥४१॥
सूक्ष्मस्थो गोपनः पश्चाद्वरुणो भुवनाश्रयः ।
वरजादार इत्येतन्नारसिंहास्त्रमीरितम् ॥४२॥
नवाक्षरमिदं श्रेष्ठं तत्र यत्प्रतिलोमजम् ।
अस्त्रमक्षरशस्तत्तु नारसिंहं महादिकम् ॥४३॥

---

1. अत्र द्वितीयतृतीयपादौ A E पुस्तकयोः पङ्क्तिभ्रमात्परित्यक्तौ.
2. सहिताः शिष्टरूपवान् D.
3. संस्थितम् D.
4. इत आरभ्य सार्धश्लोकद्वयं B C पुस्तकयोर्न दृश्यते; A E पुस्तकयोस्त्वेवं दृश्यते—

"प्रमित्यपेतकालाग्निवाराहानलयोगवान् ।
प्रथमः सूक्ष्माप्रमेयौ कालाग्निवरुणान्वितः ।
अप्रमेयः पुनस्सूक्ष्मस्थितिः *परमसंज्ञितः ।
सूक्ष्मस्थोदन इत्येवं नारसिंहास्त्रमूर्जितम् ।
षडक्षरमिदं श्रेष्ठं तत्र यत्प्रतिलोमतः ।" इति.

अत्र द्विप्रकारेऽपि पाठे मन्त्रोद्धारक्रमसामञ्जस्यं मृग्यं सुधीभिः.

* प्रथम° E.

तत्र स्वरप्रातिलोम्यादस्त्रं त्वतिमहादिकम् ।
व्यापकः सामृताधारो गोपनो ह्यक्षरं तु तत् ॥
तत्र स्वरप्रातिलोम्ये गोपनो गोपनः सताम् ।
सर्वत्र प्रातिलोम्येन यद्यदस्त्रमुदीरितम् ।
तत्र तत्रानुलोम्येन तत्तच्छान्तिरुदीरिता ॥४५॥

इति श्रीपाञ्चरात्रे तन्त्ररहस्ये अहिर्बुध्न्यसंहितायां
नारसिंहानुष्टुभमन्त्रार्थनिरूपणं नाम षट्पञ्चाशोऽध्यायः ।

ओम् ।

(आदितः श्लोकाः ३६३१)

ओम् ।

## अथ ज्योतिश्चक्रमन्त्रार्थनिरूपणं नाम सप्तपञ्चाशोऽध्यायः ।

ध्यातं सकृद्भवानेककोट्यघौघं हरत्यरम् ।
सुदर्शनस्य तद्दिव्यं भर्गो देवस्य धीमहि ॥

(तत्र प्रथमं गायत्र्यर्थे प्रपञ्चने तच्छब्दस्य भगवत्संकल्परूपसुदर्शनपरत्व-निरूपणम् )

**अहिर्बुध्न्यः ।**

यत्तु ज्योतिस्त्रयं पूर्वं ज्योतिश्चक्रे[1] निदर्शितम् ।
सावित्रं नाम यज्ज्योतिस्तत्सावित्रीसमाह्वयम् ॥१॥
तस्य व्याख्यामिमां सम्यग्गदतो मे निशामय ।
संकल्पः कथितो यः स सुदर्शनसमाह्वयः ॥२॥
या सा भूतिर्महाशक्तेर्वैष्णव्याः कोटिभागजा[2] ।
शुद्धाशुद्धमयैर्भावैस्तनुते विस्तृणाति ताम् ॥३॥

---

1. त्रयोविंशेऽध्याये चतुश्चत्वारिंशश्लोकस्योत्तरार्धात्प्रक्रम्य एकोनसप्ततिश्लोक-पूर्वार्धान्तैः पञ्चविंशत्या श्लोकैर्निदर्शितमिदं ज्योतिश्चक्रम्.

2. कोटिशात्मनः A B C E F; कोटिभोगजाः D.

प्रतिसंचरवेलायां तामयत्येव तां पुनः ।
तायते तत्र तत्रैव भूत्यंशे [1]धारकात्मना ॥४॥
प्रमाणत्वेन भूयश्च तत्तदर्थतया पुनः ।
अतस्तदिति संकल्पः प्रोच्यते वैष्णवः परः ॥५॥

(सवितृशब्दस्य जगत्कारणत्व-भोगमोक्षप्रदत्वादि-
गुणविशिष्टपरमपुरुषपरत्वम्)

प्रसौति सकलाश्चेष्टाः प्रसूते सकलं जगत् ।
[2]अवतेर्गतिकान्त्यर्थात्तरतेर्दानकर्मणः ॥६॥
[3]गतो ह्यवति सर्वत्र षड्भिः कान्तो गुणैः परः ।
भोगापवर्गयोर्दाता सवितेति निरुच्यते ॥७॥

(वरेण्यशब्दस्योपास्यत्वपरत्वम्)

वरैर्नेयं वरेण्यं तु वराः [4]ख्यातार ईरिताः ।
वरणीयं वरेण्यं वा वरं नयति तत्परम् ॥८॥

(भर्गःशब्दस्य तच्छब्दविवक्षितसुदर्शननिष्ठगुणविशेषपरत्वम्)

भर्गस्तेजः समाख्यातं प्रभावः कर्तृरूपता ।
भरतीदं जगत्कृत्स्नं संभरत्यपि चेश्वरान् ॥९॥
रमयत्यपि [5]तत्सर्वं राति चार्थमभीप्सितम् ।
गमयत्यपि तन्नाशं स्यति बन्धमशेषतः ॥१०॥

---

1. तारकात्मना B C.
2. भयतेः A B C; वयतेः D.
3. गता ह्यवति A B C; गतो भवति D.
4. धातारः A B C E F.
5. तत्सम्यक् D.

भर्जयत्यखिलं कष्टं [1]भ्रस्जतेऽनेहसं तथा ।
अतो भर्गः परं विष्णोः संकल्पं विदुरद्भुतम् ॥११॥

( देवशब्दस्य द्योतनत्वादिगुणविशेषविशिष्टपरमात्मपरत्वम् )

द्योतनः सर्व[2]भावानां द्योतमानः स्वयं सदा ।
अज्ञानमखिलं चान्यच्छो[3]धयत्यखिलं जगत् ॥१२॥
अतः सकलमेवेदं तत्रोतं मणिसूत्रवत् ।
[4]ईत ईरण ईडयश्च वनितः सकलं वियत् ॥१३॥
देव इत्युदितो विष्णुः परमात्मा सनातनः ।

(धीमहीतितिङन्तस्योपासनात्मकज्ञानविशेषपरत्वम् )

धीमहीत्यत्र धीर्ज्ञानं मननं भावनं तथा ॥१४॥

(अथ तृतीयपादार्थनिरूपणपूर्वकं गायत्र्याः संपिण्डितवाक्यार्थनिरूपणम् )

धियो धीपूर्विकाश्चेष्टाः प्रेरणं तु प्रचोदनम् ।
यः सर्वशक्तिः सविता देवः संविन्मयश्च यः ॥
यश्च सर्वविदीशानो धियस्तास्ताः प्रचोदयात् ।
सृष्टिस्थितिलयत्राणाक्रियाकारणमव्ययम् ॥१६॥
तस्य देवस्य संकल्पं भर्गःसंज्ञमुपास्महे ।
गायन्तं त्रायमाणाया गायत्र्या अर्थ ईदृशः ॥१७॥

---

1. भर्गतत्तेनयत्तथा (?) A B C E F.
2. °देवानां B.
3. चोदयन्सकलं A B C E F.
4. इनः A B C E F.

(संक्षेपतो गायत्रीमहिमवर्णनम्)

संध्ययोरुभयोर्युक्तो ब्राह्मण्यं लभते परम् ।
बहिः सहस्रमभ्यस्ता माससमात्रेण साधिनः ॥१८॥
त्रायते महतः पापात्सर्वस्मादपि चांहसः ।
ओंकारपूर्विकास्तिस्रो महाव्याहृतयोऽव्ययाः ॥
त्रिपदा चेयमित्येतत्त्रितयं पावनं परम् ।

(व्याहृतित्रयस्वरूपनिरूपणपूर्वकं संग्रहेण तदर्थप्रकाशनम्)

या सत्ता सर्वभूतानां विष्णुशक्तिः परावरा ॥२०॥
सा भूरिति समाख्याता भवतीदं जगत्स्वयम् ।
भूत्वशक्तिं समास्थाय याऽवतीदं जगत्स्वयम् ॥
सा भुवः कथिता सद्भिरवन्ती भावितं जगत् ।
वसीयो भोगमोक्षाख्यं सूते या सततं सताम् ॥
सा सुवः कथिता सद्भिर्व्याहृतिर्वाङ्मयी ततः ।

(गायत्रीमन्त्रनिगूढानां ब्रह्मशिरःप्रभृतीनामस्त्राणां दिङ्मात्रप्रदर्शनम्)

पादशो ब्रह्मदण्डास्त्रं प्रतिलोमस्तदित्यृचः ॥२३॥
अस्त्रं ब्रह्मशिरो नाम पदशः परिगीयते ।
वर्णशो ब्राह्ममस्त्रं स्यात्तत्स्वरप्रतिलोमजम् ॥२४॥
सुब्रह्मास्त्रमिति प्रोक्तं सर्वास्त्रविनिबर्हणम् ।
आनन्दो वरुणस्तद्वान्वरुणः सचतुर्गतिः ॥२५॥

---

1. सक्ता E F.
2. अत्र मन्त्रोद्धारक्रमश्चिन्त्यः सुधीभिः.

साप्रमेयस्तृतीयः स्याच्छङ्खस्थो व्यापकस्तथा ।
सानन्दो वरुणश्चैव साप्रमेयश्चतुर्गतिः ॥२६॥
शङ्खद्वयं सदा देवमन्त्रं सप्ताक्षरं परम् ।
अतिब्राह्मं समुद्दिष्टमस्य स्वरविलोमजम् ॥२७॥
आनन्दः केवलस्तत्तु दिव्यमेकाक्षरं स्मृतम् ।
तदित्यृचोऽस्याः सावित्र्या इयती दर्शिता भिदा ॥

(अथ 'जातवेदसे' इति त्रिष्टुभोऽर्थनिरूपणे जातवेदःशब्दस्य सर्वज्ञत्व-सर्वशक्तित्व-सर्वकर्तृत्व-विशिष्टपुरुषोत्तमपरत्वप्रदर्शनम् )

जातवेदस इत्यस्यास्त्रिष्टुभोऽर्थं निशामय ।
जातजातं हि यो वेत्ति भूतेभूतेऽखिलं सदा ॥
जातं स्वभावसंसिद्धं विज्ञानं तस्य सर्वदा ।
वेदः सत्ता महाशक्तिरानन्दस्पन्दलक्षणा ॥३०॥
प्रादुर्भूता सदा यस्य सा देवी जगतां गतिः ।
वेदो विचारणं प्रोक्तं विचारो विविधा क्रिया ॥
प्रादुर्भूता क्रिया यस्य विष्णोः सा सर्वकर्तृता ।
सर्वज्ञः सर्वशक्तिश्च सर्वकृत्पुरुषोत्तमः ॥३२॥
जातवेदाः समुद्दिष्टः

(सोमशब्दस्य बद्धात्मपरत्वम् )

आत्मा सोमः समीरितः ।
स ह्यविद्यावशात्सर्वयोनिस्थः सूयते सदा ॥३३॥

(सुनवामेतितिङन्तस्य बद्धात्मनि भगवच्छेषत्वयोग्यताऽऽपादनपरत्वम्)

**योग्यताऽऽपादनं तस्य प्रोच्यतेऽत्र सुनोतिना ।**

(योग्यताऽऽपादनस्य प्रकृत्यात्मविवेकरूपतां वक्तुं विवक्षितार्थस्य सोमपदगम्ये दृष्टान्ते शिक्षणम्)

**पृथक्कारो हि सोमस्य स्वरसस्य सुनोतिजः ॥३४॥**
**रसीभूतेन सोमेन यागः कर्तुं स शक्यते ।**
**उपमागर्भ एवायं वाक्यार्थः पूर्वपादजः ॥३५॥**

(दृष्टान्ते शिक्षितस्यार्थस्य दार्ष्टान्तिक उपपादनम्)

**सोमं यथाऽभिषुण्वन्ति ह्यध्वरे जातवेदसे ।**
**दित्समानस्तथाऽऽत्मानमृषिः[1] स्वं परमात्मने ॥३६॥**
**देहेन्द्रियमनःप्राणधीगुणेभ्यः स्वरूपतः ।**
**विविनक्ति प्रसंख्यानैः साम्यवैषम्यहेतुजैः ॥३७॥**

(यथोक्तात्महविर्याजिनः स्वेन रूपेणाभिनिष्पत्तिरूपो गुणाष्टकाविर्भावः फलम्)

**एवं विविच्य दत्वाऽस्मै स्वात्मानं जातवेदसे ।**
**तत्स्थः स तन्मना भूत्वा स्वेनाथो संविवित्सते ॥**

(भङ्ग्यन्तरेण नमःशब्दार्थस्यैवात्र प्रथमपादे विवक्षितत्वसूचनम्)

**नमःशब्दार्थ एवायं प्रकारान्तरदर्शितः ।**

(अथ द्वितीयपादेन परमपुरुषस्य चेतनगत-स्वप्राप्तिप्रतिबन्धक-प्रकृतिसंबन्धरूप-बन्धनिवर्तकत्वप्रदर्शनम्)

**अर्थं द्वितीयपादस्य प्रोच्यमानं निबोध मे ॥३९॥**

---

1. आत्मानं हृदिस्थं A B C.

अरातीयान्क्रतुः प्रोक्तो यो ह्यरातिवदाचरेत् ।
स च बन्धः समाख्यातो मिथ्याज्ञाननिबन्धनः ॥
तस्य वेदः स्मृता सत्ता गुणसक्तिरनादिका ।
स्वीकर्तुं स सुतं सोमं जातवेदाः सनातनः ॥४१॥
तत्प्रतिद्वन्द्विनीं बन्धसत्तां [1]निदहतु स्वयम् ।

(उत्तरार्धेन सदृष्टान्तं पूर्वोक्तार्थोपपादनम् )

बद्ध्वा स नितरां सत्तां गुणसंगस्वरूपिणीम् ॥४२॥
हेयतत्त्वानि दुर्गाणि पारयत्यखिलानि नः ।

(उत्तरार्धगतस्याग्निशब्दस्य परमपुरुषपरत्वसमर्थनम् )

जातवेदाः स[2] चात्रापि ह्यग्निशब्देन वर्ण्यते ॥४३॥
अङ्गीकारं समीपं [3]स्वमागतं निखिलं जगत् ।
नयत्यात्मानमित्येवमग्निशब्दो निरुच्यते ॥४४॥
स्वात्मोपसर्पिणं जीवं नेताऽग्निः स्वं परं पदम् ।
जातवेदाः स दुर्गाणि पारयत्यखिलानि नः ॥४५॥

(दृष्टान्तपरस्य चतुर्थपादस्य वाक्यार्थवर्णनम् )

अत्र नावेति दृष्टान्तः सिन्धुर्नाम महोदधिः ।
तं यथा नाविको नावा नौस्थितं पारयेन्नरम् ॥

1. निदहति A B C.
2. स एवात्र D.
3. स्वमापतन्निखिलं E.

दुरितादिपदद्वन्द्वात्पारणे दुरितात्ययः ।
दुरितं गदितं दौस्थ्यं वातवर्षादिसंभवम् ॥४७॥
अतीत्यतीत्य दुरिता दुरितानीति वर्ण्यते ।
दुरितं वातवर्षाद्यं परिहृत्य यथाऽखिलम् ॥४८॥
नाविकः पारयेन्नावा सागरं नौस्थितं नरम् ।

(तस्यार्थस्य दार्ष्टान्तिक उपपादनम्)

एवं स भगवानग्निर्जातवेदा हरिः स्वयम् ॥४९॥
दुरितं क्लेशसंघातमपवर्गविघातकम् ।
सर्वं परिहरन्दुर्गं पारयेत्तत्त्वपद्धतिम् ॥५०॥

(नौदृष्टान्तस्वारस्यात्प्रपत्तुरुपायाध्यवसायव्यतिरिक्तकर्तव्यशून्यत्वोपपादनम्)

[1]अत्र नावेति दृष्टान्तादुपायज्ञानमेव तु ।
नरेण कृत्यमन्यत्तु नाविकस्येव तद्धरेः ॥५१॥

---

1. अत्रेदं तत्त्वम्—अन्तरेणोपेयोपायस्वरूपयाथात्म्यनिष्कर्षं नालं प्रवृत्तिहेतु-मिति व्यक्तं विवेचकानाम्। फलज्ञानम्, फलेच्छा, उपायज्ञानम्, उपायेच्छा, ततः प्रवृत्तिः, इति खलु प्रेक्षापूर्वकारिणां प्रवृत्त्युत्पत्तिक्रमः। तत्रास्य जीवात्मनोऽनाद्यविद्या-संचितविविधदुःखपरंपराक्लेशितस्य निखिलसांसारिकदुःखनिबर्हणपूर्वकमप्राकृतं देशविशेषं प्राप्य तत्र यावदात्मभावितया सर्वतोमुखं क्रियमाणं नित्यसूरिभोग्यपरमपुरुषचरणारविन्द-परिचरणं परमः पुरुषार्थ इत्ययमुपेयस्वरूपयाथात्म्यनिष्कर्षः शास्त्रप्रारम्भ एव "नमश्चक्राय चक्रिणे" इति चतुर्थ्योपक्षिप्तः। प्रपञ्चितश्च द्विपञ्चाशे विष्णु-नारायण-वासुदेव-शब्दस्थ-चतुर्थ्यर्थनिरूपणे। तथा "अं जिहीते हरिं याति स्वरूपेणेह तादृशः" इत्यहंशब्दार्थ-निरूपणमुखेन तस्यैव निष्कर्षस्याप्रकम्प्यतामापाद्य "प्रसंख्यायेत्थमात्मानं प्रह्वीभवति यत्स्वयम्। नद्या इवाम्बुधौ देवे प्रह्वीभावो निमग्नता" इति; "तत्प्रसंख्यानतत्त्वज्ञा विशन्ति पुरुषोत्तमम्" इति च चतुःपञ्चाशे निगमनं कृतम्। तत्सिद्ध उपेयस्वरूपयाथात्म्य-निष्कर्षः। उपायस्वरूपयाथात्म्यनिष्कर्षस्त्ववशिष्यते कर्तुम्। सोऽनेन श्लोकेन क्रियते।

(अथास्मिन्मन्त्रे निगूढानां पावकाद्यस्त्राणां संक्षेपतः स्वरूपसूचनम् )

**पादशः प्रतिलोमः स पावकास्त्रं निगद्यते ।**
**पादशो जातवेदस्स्यमाग्नेयं वर्णशस्तु तत् ॥५२॥**

---

तत्र देहात्मभ्रमवन्तो बाह्याः स्वैरविहरणपूर्वकमिन्द्रियाणां संतर्पणेन शरीरपोषणमेव पुरुषार्थोपायं मन्यन्ते । कुदृष्टिष्वपि च केचन देवतान्तरभजनम्, केचिच्च देवतानैरपेक्ष्येण कर्मैव साधनमाचक्षते । ज्ञानमेव केवलमन्ये । ज्ञानकर्मणोः समुच्चयमपरे । षोडशपदार्थविज्ञानमितरे । अन्ये च शास्त्रजन्यं प्रकृत्यात्मविवेकम् । अपरे तत्त्वसाक्षात्कारम् । त्रयीविदस्तु वर्णाश्रमधर्मेतिकर्तव्यतानुगृहीतं वेदन-ध्यानो-पासन-निदिध्यासनादि-शब्दवाच्यं भक्तिविशेषम् । त्रय्यन्तरहस्यवेदिनस्तु यथोक्तपुरुषार्थावाप्तौ परमपुरुषचरणारविन्दशरणागतिमेवोपायं संगिरन्ते ।

तदेवं वादिविप्रतिपत्त्या दौस्स्थ्यमुपगमित उपायस्वरूपे वेदान्तसंमततया स्वाभिमतश्चरमोपायः प्रपत्तिरेवेति बह्वीभिरुपपत्तिभिर्बहुमिश्च प्रमाणैः सप्तत्रिंशे निरणायि । द्विपञ्चाशे चायमर्थो बहुधा नमश्शब्दार्थनिरूपणमुखेन व्यस्तारि ।

तत्र प्रपत्तिशास्त्रेषु प्रपत्तेरुपायत्वव्यवहारः प्रपत्तव्योपायत्वनिबन्धनो भाक्त इतीममंशं विशदयितुं "अहमस्म्यपराधानामालयोऽकिञ्चनोऽगतिः । त्वमेवोपायभूतो मे भवेति प्रार्थनामतिः । शरणागतिरित्युक्ता सा देवेऽस्मिन्प्रयुज्यताम्" इति प्रपत्तिलक्षणं सप्तत्रिंशे विस्पष्टमभिहितम् । अनुक्तिसहं चेदं यत्प्रपत्तेरुपायत्वं नाम । नन्नुपायाध्यवसायरूपायाः प्रपत्तेरुपायत्वं संभवदुक्तिकम् । न खलु स्वर्गादिसाधनदर्शपूर्णमासादिविषयकस्वर्गादिसाधनत्वाध्यवसायस्य स्वर्गादिसाधनता क्वचिच्छ्रुतचरा । एतावांस्तु विशेषः—यत् स्वयमसिद्धस्याचेतनभूतस्य दर्शपूर्णमासादेः स्वसिद्धौ चेतनसापेक्षत्वं फलप्रदाने च परमचेतनसापेक्षत्वं । प्रकृतस्य तूपायस्य स्वयं सिद्धत्वात्परमचेतनत्वाच्च स्वरूपनिष्पत्तौ फलप्रदाने चाऽनन्यसापेक्षत्वलक्षणं निरपेक्षत्वमिति । यद्यवश्यं प्रपत्तेरुपायत्वव्यवहारो मुख्य एवाभ्युपगम्येत, भज्येत भगवतो निरपेक्षोपायत्वम् ।

न चैवं, "तत्पादाम्बुजद्वयप्रपत्तेरन्यन्न मे कल्पकोटिसहस्रेणापि साधनमस्तीति मन्वानः" इति भगवता भाष्यकारेण प्रपत्तिव्यतिरिक्तानां साधनत्वप्रतिषेधपूर्वकं प्रपत्तेः साधनत्वाभ्युपगमो विरुध्येत, इति भ्रमितव्यम् । उदाहृतवाक्यस्य प्रपत्तिव्यतिरिक्तेषु साधनत्वप्रतिषेधपरत्वं प्रपत्तौ साधनत्वविधिपरत्वं चेत्यर्थद्वयपरत्वाङ्गीकारे वाक्यभेदापत्तेः । प्रपत्तौ साधनत्वविधिपरत्वस्य श्रौतत्वात्साधनान्तरप्रतिषेधस्यार्थिकत्वाच्च श्रुत्याऽर्थद्वयपरत्वाभावेन न वाक्यभेद इति परिहारकल्पना तु न शक्या संभावयितुमपि । अन्यपदविशेषणत्वेनोपात्तस्य साधनशब्दस्य व्यधिकरणविभक्त्यन्तपदनिर्दिष्टप्रपत्तिविशेषणत्वायोगात् ।

स्वरशः प्रतिलोमोऽयमत्याग्नेयं निगद्यते ।
चतुर्गतिः साप्रमेयः सोदयोऽथ चतुर्गतिः ॥५३॥

---

प्रपत्तिव्यतिरिक्तसाधनप्रतिषेधस्यैव श्रौतत्वात्प्रपत्तेः साधनत्वमर्थात्फलिष्यतीति कल्पनापि न साधीयसी। साधनान्तरप्रतिषेधमात्रेण प्रपत्तेः साधनत्वासिद्धेः। न हि "गृहे घटव्यतिरिक्तं मे प्रावरणसाधनं नास्ति" इतिप्रतिषेधमात्रेण घटस्य प्रावरणसाधनत्वं सिध्यति। प्रावरणायोग्यत्वात्तत्साधनत्वं घटस्य न सिध्यतीतिचेत्तुल्यं प्रकृतेऽपि। उपायाध्यवसायात्मिकायाः प्रपत्तेरुपायत्वायोग्यत्वस्येदानीमेवोक्तत्वात्। प्रत्युत भाष्यकृतैवानुपदमेव "तद्गतसर्वभावेन" इत्यत्र सर्वपदसंकोचे प्रमाणाभावादुपायोपेयादिसर्वविषयकभावस्यापि तच्छब्दोपात्तभगवद्गतत्वविधानात्प्रपत्तेरुपायत्वभ्रमोऽपि प्रतिषिद्ध एवेत्यन्यत्र विस्तरः। अतो भाष्यकारवचने प्रपत्तेरुपायत्वस्य फलितत्वकथनं केषांचिद्भ्रममूलकमेव।

तत्सिद्धं शास्त्रेषु प्रपत्तेरुपायत्वव्यपदेशस्य प्रपत्तव्योपायत्वनिबन्धनतया भाक्तत्वमिति परिशेषात्प्रमाणसद्भावाच्च भगवत एव परिपूर्णस्य निरपेक्षोपायत्वमिति। अतस्तादृशोपायज्ञानमात्रमेव चेतनस्य कृत्यं नान्यत्किंचित्। अन्यत्तु स्वप्राप्तिप्रतिबन्धकानां निश्शेषनिबर्हणपूर्वकमिष्टप्रापणपर्यन्तं कृत्स्नं व्यापारजातं भगवत एवोपायभूतस्य भरः, इत्ययमर्थो व्याचिख्यासितस्य मन्त्रस्य चतुर्थपादे "नावेव सिन्धुं दुरिताऽत्यग्निः" इति दृष्टान्तस्वारस्येनोपपाद्यत इति तमिमं श्रुतेर्भावमनुवदति भगवानहिर्बुध्न्योऽनेन श्लोकेन—

"अत्र नावेति दृष्टान्तादुपायज्ञानमेव तु ।
नरेण कृत्यमन्यत्तु नाविकस्येव तद्धरेः ॥" इति ।

अत्र प्रपत्तिव्यतिरिक्तानामुपायत्वव्यावर्तनवत्प्रपत्तेरपि तद्व्यावर्तनस्य विवक्षितत्वान्नाविकस्येव भगवत एव तत्स्थापनाच्च युक्तमुक्तमुपायस्वरूपयाथात्म्यनिष्कर्षकत्वमस्य श्लोकस्येति। अत एव निरुक्ताध्यवसायव्यतिरिक्तस्यानुकूल्यसंकल्पादेः पृथगनुष्ठेयत्वकल्पनं केषांचिन्निर्मूलमवैदिकमेवेत्यनादरणीयम्।

इदमप्यत्राकूतमवधेयम्—प्रपत्तिशास्त्रेषु प्राप्यप्रापकयोरैक्यं विवक्षितम्। तत्रेदं चोद्यमापतति। प्राप्यप्रापकयोरैक्येऽभ्युपगम्यमाने कार्यकारणयोरैक्यं प्रसजेत्। इष्टापत्तौ तयोः साध्यसाधनभावो व्याहन्येत। तत्रापीष्टापत्तौ प्रवृत्तिवैघट्यमापद्येत। साध्यसाधनभावज्ञानपूर्विकैव हि साध्यार्थिनः साधने प्रवृत्तिः। तत्रापीष्टापत्तौ शास्त्रस्य प्रवर्तकत्वासिद्ध्या वैयर्थ्यमननुष्ठापकत्वलक्षणमप्रामाण्यं चापद्येतेत्यनर्थपरंपरापत्तिः, इति। तदिदं चोद्यं, परमपुरुषचरणारविन्दयुगलपरिचर्यायाः प्राप्यत्वं तत्प्राप्तये च तत्पादाम्बुजद्वयप्रपत्तेः प्रापकत्वमिति प्राप्यप्रापकयोर्भेदाभ्युपगमात्परिहृतम्।

सूक्ष्मद्वयं साप्रमेयं साप्रमेयश्चतुर्गतिः ।
चतुर्गतिः साप्रमेयो वराहः शङ्ख एव च ॥५४॥
अप्रमेयश्च पिण्डस्थं त्रयमेकीकृतं स्मरेत् ।
चतुर्गतिः साप्रमेयः सादिदेवश्चतुर्गतिः ॥५५॥
उत्तरार्धविलोमोऽयमथ पूर्वार्धजं शृणु ।
आनन्दः केवलः सूक्ष्मद्वययुक्चाप्रमेयतः ॥५६॥
चतुर्गतिः साप्रमेयो वराहः शङ्ख एव च ।
अप्रमेयश्च पिण्डस्थं त्रयमेकीकृतं स्मरेत् ॥५७॥

---

ननु तर्हि "ब्रह्म वेद ब्रह्मैव भवति" "ब्रह्मविदाप्नोति परम्" इति प्राप्यप्रापकयोरैक्योपदेशः शास्त्रेषु कथं संगच्छेत । ब्रह्मव्यतिरिक्तयोः परिचर्याप्रपत्त्योः प्राप्यत्वप्रापकत्वाभ्युपगमे च "मामेकं शरणं व्रज" "त्वमेवोपायभूतो मे भव" इति ब्रह्मण एवोपायोपेयभावोपदेशश्च कथंतरामुपपद्येत इतिचेत् ।

उच्यते—परिचर्याविषयप्रपत्तिविषययोरेकत्वात्तस्य च ब्रह्माभिन्नत्वात्तादृशविषयैक्यनिबन्धनं शास्त्रद्वयमुपपत्तिमत् । नन्वेवमुभयतःपाशा रज्जुः—प्राप्यप्रापकविषययोरैक्यभेदयोरन्यतराभ्युपगमेऽन्यतरवैयर्थ्यात् इतिचेन्न । अविरोधेनोभयोर्निर्वहणात् । कथम् । परिचर्याजनितप्रीतिविशिष्टत्वाकारेण प्राप्यत्वात्प्रपत्तिजनितप्रसादविशिष्टत्वाकारेण प्रापकत्वाच्च धर्मिण एकत्वेऽपि विशेषणभेदायत्तविशिष्टाकारभेदोपपत्त्या प्राप्यप्रापकयोर्न भेदानुपपत्तिः । विशेष्यैक्याभिप्रायकं चैक्यावबोधि शास्त्रं निर्व्यूढम् । न च वाच्यं "खण्डो मुण्डः पूर्णशृङ्गः" "अजो गजो महिषः" इत्यादौ विशेषणभेदाधीनस्य विशेष्यभेदस्यानुभविकतया प्रकृतेऽपि विशेषणभेदे विशेष्यस्याप्यवर्जनीयो भेद इति । खण्डत्वादीनां विरुद्धविशेषणानां सहानवस्थायित्वलक्षणेन विरोधेन स्वाश्रयभेदकत्वेऽपि "देवदत्तः श्यामो युवा लोहिताक्षः समपरिमाणः" इत्यादाविवाविरुद्धविशेषणानां विशेषणभेदायत्तविशिष्टाकारभेदापादकत्वेऽपि विरोधाभावेन सर्वेषां सामानाधिकरण्योपपत्त्या स्वाश्रयभेदानापादकत्वात् ॥ अत एव खलु सूक्ष्मचिदचिद्विशिष्टत्वाकारेण कारणत्वं स्थूलचिदचिद्विशिष्टत्वाकारेण कार्यत्वमिति कार्यकारणयोराकारभेदसत्त्वेऽपि "स एव सृज्यः स च सर्गकर्ता" इत्यादिप्रमाणशतावगतं कार्यकारणयोरनन्यत्वं प्रकार्यैकत्वाभिर्व्यूढमधस्तादेकपञ्चाशे प्रणवस्य परार्थनिरूपणावसर इत्यास्तां विस्तर इति.

चतुर्गतिः सादिदेवः सानन्दो वरुणस्तथा ।
चतुर्गतिः सादिदेव इति पूर्वार्धजा स्थितिः ॥५८॥
हनद्वयं वर्म सास्त्रमग्निजाया[1] तथाऽन्ततः ।
स्वरशः प्रतिलोमोऽयं स्मृतं पञ्चदशाक्षरम् ॥५९॥
हनाद्यष्टाक्षरं चान्ते यस्स्वरः प्रतिलोमजः[2] ।
त्र्यक्षरः स तु विज्ञेयो [3]द्विवर्णश्चोर्ध्वभाग्भवेत् ॥
एकार्णश्चैव पूर्वार्धे तयो रूपे पुनः शृणु ।
अप्रमेयोऽथ सानन्दो वरुणो द्व्यक्षरो मनुः ॥६१॥
आनन्द एकः पूर्वार्धे संहत्या य[4]त्त्रिवर्णकम् ।
तस्यापि प्रतिलोमोऽयमानन्दः केवलः स्मृतः ॥
प्रतिलोमाविमौ सर्वशान्तिस्वस्त्ययनात्मकौ ।
इत्येषा त्रिष्टुभो रीतिर्लेशतस्ते निदर्शिता ॥६३॥

(अथ 'त्रियम्बकं' इत्यनुष्टुभोऽर्थवर्णने त्रियम्बकशब्दस्य ज्ञान-शक्ति-क्रिया-न्वितपरमपुरुषपरत्वकथनम् )

अधुनाऽनुष्टुभो रीतिं शृणु त्वं पावनीं पराम् ।
इच्छा ज्ञप्तिः क्रिया चेति तिस्रो लोकस्य मातरः ॥
तिस्रस्तु यस्य विद्यन्ते जगद्भाविन्य ऊर्जिताः ।
त्र्यम्बकः स तु विज्ञेयो ज्ञानशक्तिक्रियान्वितः ॥

---

1. °ग्निर्जाया A B C.
2. प्रातिलोम्यजः B C.
3. द्विवर्णश्चोत्तरार्धभाक् A B C E F.
4. यद्विवर्णकः A B C E F.

(यजामह इतिद्वितीयपदार्थनिरूपणम्)

यजतिर्द्रव्यसंत्यागः कांचिदुद्दिश्य देवताम् ।

(सुगन्धिशब्दार्थनिरूपणम्)

शोभनो यस्य गन्धोऽस्ति स सुगन्धिरितीर्यते[1] ॥
शोभनं सूचयन्सर्वैः सुगन्धिरिति शब्द्यते ।
यस्सुष्ठु सर्वतत्त्वानि गन्धयत्यात्मतेजसा ॥६७॥
गन्धयत्यनुवेधेन स्वस्वरूपीकरोति यः ।
गन्धादीनि पृथिव्यादिभूतान्येवाखिलानि च ॥
शोभनं यस्य तिष्ठन्ति वशे देवस्य शासितुः ।
स सुगन्धिः समाख्यातो ज्ञानात्मा सर्वविद्वशी ॥

(पुष्टिवर्धनशब्दार्थनिरूपणम्)

पुष्टिर्भूतिः समाख्याता या सा सदसदात्मिका ।
शक्तिर्विष्णुमयी विष्णोः सं[2] तां वर्धयति स्वयम् ॥
संकल्पेन समुद्भाव्य वितत्य विविधात्मना ।
संधार्य संनियम्याथ प्रतिसंहरते च ताम् ॥७१॥
ततोऽसौ भगवान्विष्णुः कथ्यते पुष्टिवर्धनः ।

(अथ वाक्यार्थवर्णनमुखेन पूर्वार्धस्य भगवति स्वात्महविस्समर्पणपरत्व-
प्रदर्शनम्)

इच्छाज्ञानक्रियाकारं शोभनाख्यं जगत्प्रियम् ॥

---

1. °रुदीर्यते E F.
2. सदा A B C E F.

स्वाकारज्ञापितैश्वर्यं शुद्धं संविन्मयं परम् ।
ईशानं सर्वलोकानां पुरुषं पुष्करेक्षणम् ॥७३॥
देवतां स्वां समुद्दिश्य स्वात्माख्यद्रव्यमुत्तमम् ।
यजाम इति मन्त्रस्य पूर्वभागार्थ ईदृशः ॥७४॥

(अथोत्तरार्धस्य वाक्यार्थनिरूपणम् )

निरुक्तो मृत्युशब्दोऽत्र मृत्युमृत्युनिरूपणे ।
स्वात्मस्वात्मीयसंन्यासी देवेऽद्य परमात्मनि ॥
मृत्योर्मुच्येय संसारान्नानादुःखमहोदधेः ।
उर्वारुकं यथा पक्वमक्लेशेन स्वबन्धनात् ॥७६॥
मुच्यते मृत्युतस्तद्वदहं मुच्येय बन्धनात् ।
संन्यासे स्थैर्यमाशास्ते कृतेऽस्मिन्माऽमृतादिति ॥
अमृताद्ब्रह्मणस्तस्माद्यस्मै मां दत्तवानहम् ।
जातुचिन्मा स्म मुच्येय क्षेमीभावो भवेन्मम ॥

(प्रपत्तुर्ब्रह्मसाधर्म्यापत्तिलक्षणस्य फलस्य तात्पर्यगत्या मन्त्रे विवक्षितत्वप्रदर्शनम् )

इत्यर्थोऽनुष्टुभः प्रोक्तो ब्रह्मभावमयः शुभः ।
ज्योतिस्त्रयं निरुक्तं तु तदिदं छन्दसां त्रयम् ॥

इति श्रीपाञ्चरात्रे तन्त्ररहस्ये अहिर्बुध्न्यसंहितायां
ज्योतिश्चक्रमन्त्रार्थनिरूपणं नाम सप्तपञ्चाशोऽध्यायः ।

ओम् ।

(आदितः श्लोकाः २७१०)

1. शुद्धसंविन्मयं E F.

ओम् ।

## अथ पञ्चहोतृमन्त्रार्थनिरूपणं नाम अष्टपञ्चाशोऽध्यायः ।

ध्यातं सकृद्भवानेककोट्यघौघं हरत्यरम् ।
सुदर्शनस्य तद्दिव्यं भर्गो देवस्य धीमहि ॥

अहिर्बुध्न्यः ।

दशहोता चतुर्होता पञ्चहोता तथैव च ।
षड्ढोता सप्तहोता च पञ्चहोतार ईरिताः ॥ १ ॥

---

1. अत्रेदमवधेयम्—त्रयोविंशेऽध्याये शतारज्योतिश्चक्रनिरूपणानन्तरं ब्रह्मचक्रं निरूपितम् । तत्रातीतेनाध्यायेन ज्योतिश्चक्रमन्त्राणामर्थ उपवर्णिते क्रमप्राप्तं ब्रह्मचक्र-मन्त्रार्थवर्णनमिह प्रस्तूयते । तत्र ब्रह्मचक्रे बहवो मन्त्रा गर्भिताः—सप्रहाः पञ्चहोतारः, संभाराः, देवपत्न्यः, दक्षिणाः, हृदयानि, शतरुद्राणि, इत्येवमादयः ।

तत्र तैत्तिरीयारण्यकस्य तृतीयप्रपाठके "चित्तिः स्रुक्" इत्यारभ्य समाम्नाता आद्याः पञ्चानुवाकाः क्रमेण दशहोत्रादिभिः पञ्चभिः शब्दैर्विवक्षिताः । तेषु यथाक्रमं दशत्वादिसंख्याविशिष्टानां होमसाधनानामभिधानात् । "वाग्घोता" इत्ययं षष्ठोऽनुवाकस्त्वपरः षड्ढोता । यद्यपि 'सूर्यं ते चक्षुः' इति चतुर्थानुवाके होमसाधनानि न प्रतिपाद्यन्ते । तथापीतरेषु चतुर्ष्वपि तत्प्रतिपादनात्सृष्टिन्यायेन बाहुल्यात्तथा व्यवहारः । अत एवोक्तं कविभिरपि—"एको हि दोषो गुणसंनिपाते निमज्जतीन्दोः किरणेष्विवाङ्कः" इति (कुमारसंभवे 1-3). त एते दशहोत्रादयः पञ्चापि चतुर्होतृ-पञ्चहोतृ-नामभ्यामभिधीयन्ते । यत्रैतौ शब्दावेकवचनान्तौ, तत्र मुख्यवृत्त्या यथोक्तद्वितीयतृतीयानुवाकमात्रोपस्थापकौ । यत्र तु बहुवचनान्तौ, तत्र लिङ्गसमवायन्यायेन गौण्या वृत्त्या

विश्वं सिसृक्षतो विष्णोर्यत्तज्ज्ञानमयं तपः ।
होतृभिः क्रतुरूपेण स संकल्पो निरूप्यते ॥ २ ॥

---

दशहोत्रादिसमुदायोपस्थापकौ । यथा चैवं सति तेनैव न्यायेन दशहोतृ-षड्ढोतृ-सप्तहोतृ-शब्दानामपि समुदायोपस्थापकत्वापत्तौ तेषां तदभावः, चतुर्होतृ-पञ्चहोतृ-शब्दयोरेव तद्बोधकत्वम्, तथा तैत्तिरीयब्राह्मणस्य द्वितीयाष्टके द्वितीयतृतीयप्रपाठकयोः प्रपञ्चितं तत एव सुगमम्। तथा तेषामेव मन्त्राणां जगत्सृष्टिहेतुत्वादिना बहुमुखं प्राशस्त्यादिकं, तत्तत्फलसाधनत्वेन तेषां विनियोगभेदादिकं च तत्रैव प्रपञ्चितमिति नेह प्रतन्यते ।

तत्रैते मन्त्राः प्रत्येकं भागत्रयात्मकाः । होमसाधनप्रतिपादकः पूर्वो भागः, उत्तरस्तु स्वाहाकारवियुक्तो ग्रहभागः, स्वाहाकारस्तु तृतीयो भाग इति । तत्र पञ्चदशवाक्यात्मके "चित्तिः स्रुक्" इतिप्रथमानुवाके दश वाक्यानि पूर्वो भागः । उत्तराणि ग्रहभागः, अन्ते स्वाहाकारः । दशवाक्यात्मके "पृथिवी होता" इतिद्वितीयानुवाके वाक्यचतुष्टयात्मकः पूर्वो भागः, तदन्यो ग्रहः, अन्ते स्वाहाकारः । वाक्याष्टकात्मके "अग्निर्होता" इतितृतीयानुवाके अर्धं पूर्वो भागः, अर्धं ग्रहः, अन्ते स्वाहाकारः । नववाक्यात्मके "सूर्यं ते चक्षुः" इतिचतुर्थानुवाके वाक्यषट्कं पूर्वो भागः, उत्तरो ग्रहः, अन्ते स्वाहाकारः । त्रयोदशवाक्यात्मके "महाहविर्होता" इतिपञ्चमानुवाकेऽपि 'वाक्यषट्कम्' इत्यादिः पूर्ववद्विभागः । षष्ठोऽनुवाकश्चतुर्थानुवाकेन तुल्यः ।

सर्वेष्वेतेषु मन्त्रेषूत्तरभागे ग्रहशब्दप्रवृत्तिनिमित्तं तु तैत्तिरीयब्राह्मणद्वितीयाष्टकद्वितीयप्रपाठकस्य प्रथमानुवाके "प्रजापतिरकामयत प्रजाः सृजेयेति । स एतं दशहोतारमपश्यत् । तं मनसानुद्रुत्य दर्भस्तम्बेऽजुहोत् । ततो वै स प्रजा असृजत । ता अस्मात्सृष्टा अपाक्रामन् । ता ग्रहेणागृह्णात् । तद्ग्रहस्य ग्रहत्वम् ।" इति निरूपितम् । तत्रायमर्थः—पुरा कदाचित्प्रजापतिः प्रजासृष्टिं कामयमानस्तदुपायं वेदेषु परीक्ष्य दशहोत्राख्यं मन्त्रं साक्षात्कृतवान् । तं च मनसोच्चार्य कुत्रचिद्दर्भस्तम्ब आज्येन जुहाव । ततो होमसामर्थ्यात्कामिताः प्रजाः ससर्ज । सृष्टास्ताः प्रजा अनुरागरहिता अस्मात्प्रजापतेरपसस्रुः । स च प्रजापतिर्यथोक्तग्रहभागपठनलब्धसामर्थ्योऽपक्रान्ताः प्रजाः पुनरगृह्णात् । ततः प्रजाग्रहणसाधनत्वाद्ग्रहस्य ग्रहत्वं निष्पन्नमिति । तदिदं दशहोतृमन्त्रान्तर्गते ग्रहभागे ग्रहशब्दस्य प्रवृत्तिनिमित्तम् । उत्तरेषु चतुर्ष्वनुवाकेषु तन्निमित्तं तु यथाक्रमं दर्शपूर्णमास-चातुर्मास्य-पशुबन्ध-ज्योतिष्टोम-ग्रहणसाधनत्वमिति तत्रैव द्वितीयानुवाके प्रपञ्चितं बोध्यम्.

तदेवं चतुर्होतृ-पञ्चहोत्रन्यतरशब्दविवक्षितानामेषां मन्त्राणामापस्तम्बेन प्रयोगव्यवस्था प्रदर्शिता—"त इमे चतुर्होतारो यत्र होमार्थाः, सग्रहाः सस्वाहाकारास्तत्र

अव्याप्यवदधानोऽयं योगी तत्तन्निरूपणम् ।
तांस्तान्निर्वर्तयत्येव क्रतून्ज्ञानमयाञ्छुभान् ॥३॥

(तत्र प्रथमं दशहोत्रादिपदविवक्षितमन्त्रविशेषसूचनम् )

[1]चित्तिः स्रुग्दशहोताऽयमग्निहोत्रस्य कारणम् ।
पृथिवीत्यादिको होता चतुर्होता निगद्यते ॥४॥
[2]दर्शस्य पूर्णमासस्य निदानं स द्वयोरपि ।
[3]अग्निर्होता पञ्चहोता चातुर्मास्योद्भवस्तु सः ॥५॥
[4]सूर्यं ते स च वाग्घोता पशुबन्धस्य कारणम् ।
षड्ढोताराविमौ वेदे निर्णीतौ मुनिसत्तमैः ॥६॥

---

प्रयुज्येरन्, यत्राहोमार्थाः, अग्रहा अस्वाहाकाराः" इत्यादिना । तदत्र ब्रह्मचक्रयन्त्राङ्गत्वेन त्रयोविंशे विनियुक्तानामेषां मन्त्राणामहोमार्थत्वेन ग्रहभागरहितानामेव यन्त्राङ्गत्वे प्राप्ते "अस्माच्चक्राद्बहिः पञ्चहोतारः सग्रहाः स्मृताः" इति तत्रैव ग्रहभागस्य प्रतिप्रसवः कृत इति ग्रहसहितानामेवैषां यन्त्रलेखने विनियोग इति तेषां मन्त्राणामर्थनिरूपणायाष्टपञ्चाशोऽध्याय आरभ्यत इति.

1. दशहोतृमन्त्रस्याग्निहोत्रकारणत्वे प्रमाणं तु "तेनैवोद्द्रुत्याग्निहोत्रं जुहुयात् । प्रजातमेवैनज्जुहोति" (तैत्तिरीयब्राह्मणे, 2-2-1.) इतीयं श्रुतिः.

2. चतुर्होतृमन्त्रस्य दर्शपूर्णमासकारणत्वे प्रमाणं तु "प्रजापतिरकामयत दर्शपूर्णमासौ सृजेयेति । स एतं चतुर्होतारमपश्यत् । तं मनसाऽनुद्रुत्याहवनीयेऽजुहोत् । ततो वै स दर्शपूर्णमासावसृजत" (तैत्तिरीयब्राह्मणे 2-2-2.) इतीयं श्रुतिः.

3. एवमत्रापि "सोऽकामयत चातुर्मास्यानि सृजेयेति । स एतं पञ्चहोतारमपश्यत् । तं मनसाऽनुद्रुत्याहवनीयेऽजुहोत् । ततो वै स चातुर्मास्यान्यसृजत" इतीयं श्रुतिस्तत्रैवाम्नाता प्रमाणत्वेनानुसंधेया ।

4. तथाऽत्रापि "सोऽकामयत पशुबन्धꣳसृजेयेति । स एतꣳ षड्ढोतारमपश्यत् । तं मनसाऽनुद्रुत्याहवनीयेऽजुहोत् । ततो वै स पशुबन्धमसृजत" इतीयं श्रुतिस्तत्रैवोदाहृता बोध्या ।

महाहविः सप्तहोता ज्योतिष्टोमस्य कारणम् ।

(अथ यथोक्तानां मन्त्राणामर्थवर्णनप्रतिज्ञा)

अथार्थो दशहोत्रादेर्वर्ण्यते शृणु नारद ॥७॥

(तत्र प्रथमं दशहोतृमन्त्रार्थनिरूपणे चित्त्यादिपदार्थप्रदर्शनम्)

चित्तिर्नाम स्मृता बुद्धिर्व्यवसायस्य कारणम् ।
अहंकारस्तु चित्तं स्यादभिमानस्य कारणम् ॥८॥
मनो नामेन्द्रियं हेतुः स संकल्पविकल्पयोः ।
वाङ्नाम व्याहृता वाणी एवमस्त्वितिरूपिणी ॥
आधीतं नाम वाग्वृत्तिर्यदध्ययनमुच्यते ।
केतो ज्ञानमिति प्रोक्तमुच्चार्यस्यावधारणम् ॥१०॥
विज्ञातं यत्तदुच्चार्यमवधारणगोचरम् ।
यत्तद्वागिन्द्रियं प्रोक्तं तद्व्यक्त्या या सरस्वती ॥
सा वाक्तां सुब्रुवन्पाति यस्स वाक्पतिरुच्यते ।
उच्चारणप्रवृत्तेर्यः प्रयत्नो हेतुरुच्यते ॥१२॥
स प्राणः साम तत्प्रोक्तं यदुच्चारणसौष्ठवम् ।

(दशहोत्रादिसमाख्यानिमित्तप्रदर्शनम्)

दशहोत्रादिहोत्राख्या यागोपकरणाभिधा ॥१३॥

---

1. इदमर्धं मातृकाकोशेष्वनुपलभ्यमानमपि स्वयमनुमाय संनिवेशितमत्र । इतरथा-न्यूनत्वप्रसंगात् । सप्तहोतृमन्त्रस्य ज्योतिष्टोमकारणत्वे प्रमाणं च "सोऽकामयत सौम्यमध्वरꣳ सृजेयेति । स एतꣳ सप्तहोतारमपश्यत् । तं मनसाऽनुद्रुत्याहवनीयेऽजुहोत् । ततो वै स सौम्यमध्वरमसृजत" इतीयं श्रुतिर्बोध्या.

(क्रियाभूतिविभेदेन भगवच्छक्तेर्द्वैविध्यम्)

[1]एकान्तिनो जगद्विष्णोः कुर्वतः शक्तिशालिनः ।
या शक्तिर्वैष्णवी देवी सर्वभावानुगामिनी ॥१४॥
तदेकांशः क्रिया नाम कृत्योपकरणं हरेः ।
तदेकांशो विभूत्याख्यो [2]लक्ष्यतेऽत्र जगत्तया ॥१५॥

(तत्र क्रियायाः संकल्परूपत्वं कृत्योपकरणत्वं च)

संकल्पः प्रोच्यते विष्णोः कृत्योपकरणं क्रिया ।

(संकल्पस्य च निश्चयात्मकमित्यादिरूपत्वम्)

एवमस्त्विवति वाक्यान्तो मित्यादिः स च कथ्यते
बुद्ध्यहंकारमनसां वृत्तिः शब्दे विवक्ष्यते ।
[3]त्रिरूपा मितिरुद्दिष्टा ते स्तब्धो.........त्र शब्दितम्

(चित्त्यादिवाक्योक्तस्रुगादिपदार्थनिरूपणम्)

[4]बुद्ध्यादिमितिपर्यन्तं वृत्तिमद्वृत्तिरूपकम् ।
यज्ञे जगद्विधानाख्ये वितते हरिमेधसः ॥१८॥
स्रुक्तयाऽऽज्यतया चोपवक्तृत्वे[5]नाग्निभावतः ।
[6]उपवक्ता स्मृतो ब्रह्माऽनुज्ञा प्रवचनं स्मृतम् ॥

1. एकाकिनो A B C E F.
2. वक्ष्यतेऽत्र A B C E F.
3. इदमर्धं न दृश्यते A B C E F.
4. बुद्ध्यादिमितिपर्यन्तां वृत्तिमद्वृत्तिपूर्वकम् (?) A B C E F.
5. °नात्म° A B C E F.
6. उपपन्ना स्मृतो ब्रह्माऽनुज्ञोत्सववनं स्मृतम् (?) D.

उच्चार्यत्वेन विज्ञातः शब्दोऽग्निरिति कथ्यते ।
उच्चारणं यदाधीतं तद्बर्हिरिति गीयते ॥२०॥
तस्य हेतुः प्रयत्नो यः प्राणस्स हविरुच्यते ।
वाग्व्याहृता तु वेदिः स्याद्धर्ता होतेति गीयते ॥
उच्चारणस्य साम्यं यत्साम सोऽध्वर्युरुच्यते ।

(यथोक्तस्य जगद्विधानाख्यस्य वैष्णवयज्ञस्य ज्ञेयत्वविधिः)

इत्थं जगद्विधानाख्यो दशोपकरणान्वितः ॥२२॥
यो यज्ञो वैष्णवो वृत्तस्तमद्यत्वे विचिन्तयेत् ।
वाक्यं समुच्चरन्किंचिल्लौकिकं वैदिकं तु वा ॥२३॥
वैष्णवं भावमासाद्य मन्त्रं चेमं विचिन्तयेत् ।

(अथ तात्पर्यार्थनिरूपणमुखेन ग्रहभागस्यात्महविस्समर्पणपरत्वस्फुटीकरणम् )

वाचस्पते विधे नामन्निति तस्यार्थ उच्यते ॥२४॥
वाङ्नाम वैष्णवी शक्तिः शब्दब्रह्ममयी परा ।
वाचस्पतिस्तत्पतिः स्याद्विदधातीति वै विधिः ॥
नामयत्यखिलं स्वस्मिन्निति नामाग्निरुच्यते ।
विधेम भगवन्नाम प्रह्वीभावापराभिधम् ॥२६॥
त्वं चास्माकं विधेः कुर्या नाम प्रवणचित्तताम् ।
एतदेव पुनर्वक्ति मुनिः स्वात्मसमर्पणम् ॥२७॥

1. हर्तेति छेदः व्याहर्तेत्यर्थः
2. नाम निरुच्यते A B C E F.
3. मुनिः—वेदपुरुष इत्यर्थः

(भगवत एवात्महविस्समर्पणजन्यफलभागित्वनिरूपणम्)

वाचस्पतिः स पूर्वोक्तः सोमं सोमरसोपमम् ।
पिबत्वात्मरसं स्वस्मै मया हुतमिवाध्वरे ॥२८॥

(स्वरूपनिरूपकशेषत्वपारतन्त्र्यानुगुणवृत्तिप्रार्थना)

पीत्वा चास्मासु नृम्णं यत्स्वमाधादादधातु तत् ।
मननीयं नृभिर्नृम्णं तदनुग्रहरूपकम् ॥२९॥

(आत्महविस्समर्पणस्य स्वार्थत्वशङ्काव्युदासः)

स्वाहेति स्वात्मसंन्यासः स्वाहुतं तद्भवेदिति ।

(अथ चतुर्होतृमन्त्रेऽपि पूर्वोक्तस्यैव यज्ञस्य भङ्ग्यन्तरेण विवक्षितत्वनिरूपणम्)

अयमेव च यज्ञोऽत्र चतुर्होतृतयेष्यते ॥३०॥

(तत्र पृथिवी-द्यु-रुद्र-शब्दानां प्रकृति-पुरुष-काल-परत्वप्रदर्शनम्)

जगत्प्रथनरूपा सा पृथिवी प्रकृतिः स्मृता ।
पुरुषो द्यौरिति प्रोक्तो द्योतते स स्वया चिता ॥
रुणद्धि प्रलये तौ द्वौ द्रावयत्युदयेऽपि च ।
रुद्र इत्युदितः कालः संयोजकवियोजकः ॥३२॥

(बृहस्पतिशब्दस्य श्रियःपतित्वपुरस्कारेण भगवत्परत्वम्)

बृहत्सा शक्तिरुद्दिष्टा यतो [2]बृंहयतेऽखिलम् ।

---

1. °प्रधान° A B C E F.

2. बृहयते D.

बृहस्पतिः पतिस्तस्या देवदेवो जनार्दनः ॥३३॥

(अथ ग्रहभागार्थनिरूपणे वाचोवीर्यशब्दस्य भगवत्कर्तृकसृष्ट्युद्यमपरत्व-प्रदर्शनम्)

वाचो वीर्यं भवेत्प्राणो विष्णोः सृष्ट्युद्यमः परः।

(संभृततमशब्देन सृष्ट्युद्यमस्य सर्वार्थविषयकत्वविवक्षा)

तत्संभृततमं चैव सर्वार्थविषयत्वतः ॥३४॥

(पूर्वोक्तस्य प्राणस्यैवात्रापि हविष्ट्वविवक्षा)

प्राणो हविरितिन्यायात्प्राणो हविरिहेष्यते ।

(आङ्पूर्वकयजिधात्वर्थनिरूपणपूर्वकं भगवति मन्त्रशेषस्य दास्यमहारस-रूपसुखप्रार्थनापरत्वप्रदर्शनम् )

आयक्ष्यसे पूज्यसेऽद्य यस्त्वं वाचस्पतिः स्वयम् ॥

अतोऽस्मै यजमानाय वार्यं वर्यं सुवः सुखम् ।

आकस्त्वमाकुरुष्वाद्य सोमं पिबति पूर्ववत् ॥३६॥

(मन्त्रचरमवाक्यस्य प्रतिबन्धनिवृत्तिप्रार्थनापरत्वम् )

इरां ददतमिन्द्रं मामिन्द्रियायाद्यशक्तये[1] ।

ब्रह्माप्तिहेतुभूतायै स योग्यं जनयत्वजः ॥३७॥

(अथ पञ्चहोतृमन्त्रार्थनिरूपणम् )

चतुर्होताऽयंमुद्दिष्टः[2] पञ्चहोता निगद्यते ।

1. मामिन्द्रियायत्तशक्तये A B C E F.

2. समुद्दिष्टः D.

अग्निर्निरुदितः पूर्वं स होता परिगीयते ॥३८॥
ज्ञानप्राणावश्विनौ द्वावश्नुवाते यतो जगत् ।
अध्वर्युः प्रतिप्रस्थाता द्वावध्वर्यू प्रकीर्तितौ ॥३९॥
त्वष्टा संकल्प उद्दिष्टस्त्वष्टृकार्यं यतोऽखिलम् ।
मित्रो मैत्री समुद्दिष्टा करुणा हरिमेधसः ॥४०॥

(अथ ग्रहभागस्यात्मयागसाधनत्वेन विनियोगः)

सोम इत्यादिमन्त्रोऽयं यजने तस्य शिष्यते ।

(तत्र षष्ठ्यन्तयोः प्रथमान्तयोश्च सोमशुक्रपदयुगलयोरर्थविवेकः)

षष्ठ्यन्तौ सोमशुक्रौ द्वौ लतासाराभिधायिनौ ॥
इतरावात्मवचनौ पुरोगा हेतुरुच्यते ।

(प्रथमान्तसोमपदविवक्षितस्य जीवस्य षष्ठ्यन्तसोमपदविवक्षिताल्लतासारादुत्तमत्वम्)

जीवः सोमस्य सोमोऽयं पुरोगास्सोमतोऽपि यत्
सोमो ह्यभिष्टुतो यादृक्प्रीणयेत्पुरुषोत्तमम् ।
आत्मयागहुतो जीवो न तादृक्किन्त्वतोऽधिकः ॥

(तदुपपादनम्)

मर्त्यो ह्यभिष्टुतः सोमो यस्त्वमर्त्यो हि चिन्मयः ।

(शुक्रशब्दस्य जीवपरत्वे प्रवृत्तिनिमित्तप्रदर्शनम्)

शुक्र इत्यतिसारत्वाज्जगद्बीजतयाऽपि च ॥४४॥

आख्या [1]जीवस्य

(सोमवाक्यार्थस्य शुक्रवाक्येऽप्यतिदेशः)

तत्रापि योजनैषा पुरोदिता ।

(इन्द्रशब्देन भगवतः संबोधनम्)

इन्द्रेत्यपि च संबोधो देवस्य हरिमेधसः ॥४५॥

(वातापिशब्दस्य व्याप्तिपूर्वकभगवन्निष्ठक्रियाशक्तिवैशिष्ट्यपरत्वम्)

वातापीत्युच्यते व्यापी वातेन क्रियया स्वया ।
जगद्धातुः क्रिया सृष्टिरतर्क्या व्याप्तिपूर्विका ॥
तस्या अविषयो नास्ति भावः कोऽपि कथंचन ।

(हवनश्रुत्पदस्य स्वाश्रितक्रियमाणस्वविषयकाह्वानश्रवणरसिकत्वपरत्वम्)

हवनश्रुत्समाख्यातः शृण्वन्नाह्वानमादरात् ॥४७॥

(श्राता इत्यादिवाक्यद्वयस्य तात्पर्यार्थनिरूपणमुखेन सर्वेष्वप्यात्मसु भगवद्गुण-
कृतदास्यप्रतिपादकत्वप्रदर्शनम्)

हे इन्द्र परमेशान कर्तस्ते हवनश्रुतः ।
श्राताः श्रिता गुणैः सोमा आत्मानस्त इमे वयम्
स्वाहा स्वाहुतमस्त्वेतत्तदिदं परमं हविः ।

(अथ षड्ढोतृमन्त्रार्थनिरूपणम्)

उद्दिष्टः पञ्चहोताऽयं षड्ढोताऽद्य निगद्यते ॥४९॥

---

1. सोमस्य D.

यजमानं पशुं भूतं वक्त्यथात्मानं हविष्कृतम् ।
देहेन्द्रियैः समं विष्णुं प्राप्ताऽथ सहविष्कृतम् ॥
सूते च रमते चैव यजते चैव कथ्यते ।
सूर्यो, विष्णुं विशत्वेनं चक्षुर्विज्ञानकारणम् ॥५१॥
वातो गतिमतः संज्ञा गतिर्व्याप्तिरुदीरिता ।
द्योतमानस्तथा स द्यौर्देवो विज्ञानसारथिः ॥५२॥
अन्तस्समीक्षमाणस्सन्नन्तरिक्षमुदीर्यते ।
सर्वान्संगमयन्प्राणैर्यज्ञ इज्यतयाऽपि च ॥५३॥
पृथिवी वैष्णवी शक्तिः प्रथमाना[2] स्वतेजसा ।
पञ्चात्मावयवः प्राणः पृष्ठं मूर्धाङ्गमुच्यते ॥५४॥
आत्माऽन्तःकरणं प्रोक्तमनाद्यन्तस्थितानि च ।
शरीराण्यथ बाह्याङ्गान्यथो ग्रह उदीर्यते ॥५५॥
वाचस्पतिः समुद्दिष्टः शक्तिर्वाग्वैष्णवी क्रिया ।
सैव प्रोक्ता जुहूः प्राणो होत्राऽऽहुतिरुदीर्यते ॥
नानादेहादिरूपेण वृद्धा देवा उदीरिताः ।
एरयस्व प्रेरयस्व प्रेरणं त्वेरणं मतम् ॥५७॥

(अथापरस्य षड्ढोतृमन्त्रस्यार्थनिरूपणम्)

अथापरस्य[3] षड्ढोतुर्निर्णयं शृणु नारद ।

---

1. D पुस्तकमत्रैव विश्राम्यति.

2. प्रथयन्ती B C.

3. षड्ढोतृमन्त्रो द्विविधः—चतुर्थानुवाकात्मकः "सूर्यं ते चक्षुः" इत्यादिरेकः । षष्ठानुवाकात्मको "वाग्घोता" इत्यादिरपरः । तत्र "वाग्घोता षड्ढोतृणाम्" इति

दीक्षा मानससंकल्पो वागवस्था तु वाक्स्मृता ॥
आपो दयार्द्रता विष्णोर्मन इच्छा निगद्यते ।
तपो विज्ञानमुद्दिष्टं पोता त्वभिगरो मतः ॥५९॥

(अथ सप्तहोतृमन्त्रार्थनिरूपणम्)

महाहविरिति प्रोक्तः सप्तहोता मनीषिभिः ।
मनो हविरिति प्रोक्तं मनो हविरिहोच्यते ॥६०॥
महाविषयता तस्य महत्त्वं परिगीयते ।
यत्नो हविरिति प्रोक्तं प्राणो हविरिहोच्यते ॥६१॥
सत्यता त्वविपर्यासः संततोद्युक्तता तथा ।
पाजस्तेज इह प्रोक्तो नित्यताऽच्युतताऽस्य तु ॥
मनो मतिरिह प्रोक्ता तस्याः पूर्ववदच्युतिः ।
अनाधृष्याप्रधृष्यौ च शक्त्यैश्वर्यनिरूपकौ ॥६३॥
पोता च मैत्रावरुणः स्मृतावभिगराविह ।
अनायासविषयत्वादयास्य इति वर्ण्यते ॥६४॥

(अथ ग्रहभागार्थनिरूपणम्)

हरति स्वीकरोतीह पूजां हृदिति वर्ण्यते ।

---

ब्राह्मणनिर्देशात्स एव चातुर्होत्रचयने प्रयोज्यः । इतरस्य तु "पशुबन्धेन यक्ष्यमाणः षड्ढोतारं मनसाऽनुद्रुत्याहवनीये जुहुयात्" इति होतृब्राह्मणकाण्डे विधिदर्शनात्पशुबन्धे विनियोगः । तदेवं कर्मकाण्डे व्यवस्थितविकल्पेन विनियुक्तयोरपि षड्ढोतृमन्त्रयोर्ब्रह्मचर्ये समुच्चयेन विनियुक्तत्वाद्विविधयोरपि तयोरिह व्याख्यानं कृतमिति बोध्यम् ।

1. मनस्त्वसंकल्प इति सर्वत्र.

दैव्यस्तन्तुरिति प्रोक्ता शिष्याचार्यपरम्परा ॥६५॥
मनुष्यस्तन्तुरित्युक्ता सत्संतानसमृद्धिता ।
द्यावापृथिव्यौ पितरौ पितरौ श्रीतदीश्वरौ ।
व्याख्यातो होतृवर्गोऽयमिति ते लेशतो मुने ॥

इति श्रीपाञ्चरात्रे तन्त्ररहस्ये अहिर्बुध्न्यसंहितायां
पञ्चहोतृमन्त्रार्थनिरूपणं नाम अष्टपञ्चाशोऽध्यायः ।

ओम् ।

(आदितः श्लोकाः ३७७६)

---

ओम् ।

## अथ पुरुषसूक्त-श्रीसूक्त-वाराह-मन्त्रार्थनिरूपणं नाम एकोनषष्टितमोऽध्यायः ।

ध्यातं सकृद्भवानेककोट्यघौघं हरत्यरम् ।
सुदर्शनस्य तद्दिव्यं भर्गो देवस्य धीमहि ॥

(तत्र ब्रह्मचक्रान्तर्गतसंभारादिमन्त्रार्थनिरूपणे कारणनिरूपणम्)

**अहिर्बुध्न्यः ।**

संभारा देवपत्न्यश्च दक्षिणा हृदयानि च ।
रुद्रा ब्रह्माणि[1] चेत्येतन्निगदेन निरूप्यते[2] ॥ १ ॥

---

1. शक्राणि E; शुक्राणि F.

2. अतीतेनाध्यायेन होतृवर्गः सग्रहो व्याख्यातः । अथ संभारादीनां व्याख्यानमवसरप्राप्तम् । तथाऽपि निपुणधियां निगदेनैव तदर्थबोधसंभवाद्ग्रन्थविस्तरभयाच्च तेषां नेह व्याख्यानं प्रस्तूयत इति प्रथमश्लोकाभिप्रायः । संभारादिपदार्थस्वरूपमात्रमिहास्माभिर्बुभुत्सुजनसौकर्याय प्रदर्श्यते । तथा हि—

संभारादीनि षट्पदानि मन्त्रविशेषवाचकानि । तत्रैकविंशतिवाक्यात्मकः "अग्निर्यजुर्भिः" इत्ययं तैत्तिरीयारण्यकतृतीयप्रपाठकस्याष्टमोऽनुवाकः संभारयजुरित्युच्यते । यज्ञाङ्गत्वेन संभरणीयानां यजुःस्तोमादीनां तस्मिन्ननुवाके समाम्नानात् ।

षड्विंशतिवाक्यात्मकः "सेनेन्द्रस्य" इत्ययं नवमोऽनुवाको देवपत्न्याख्यः । "ऊर्ध्वं सूनृता च देवानां पत्नयः" इति मन्त्रलिङ्गोपसंहारदर्शनात् ।

(अथ पुरुषसूक्तश्रीसूक्तयोरर्थं निरूपयितुं जगद्धिताय परमपुरुषाल्लक्ष्म्याश्च तयोराविर्भावकथनम् )

**सूक्तं तु पौरुषं पुंसः परस्मादुत्थितं पुरा ।**
**जगद्धिताय लक्ष्म्याश्च श्रीसूक्तं तत्समुद्गतम् ॥२॥**

एकोनपञ्चाशद्वाक्यात्मकः "देवस्य त्वा सवितुः प्रसवे" इत्ययं दशमोऽनुवाको दक्षिणाप्रतिग्रहमन्त्रः । "राजा त्वा वरुणो नयतु देवि दक्षिणेऽग्नये हिरण्यम्" इत्यादि-मन्त्रलिङ्गात् ।

हृदयशब्देन पञ्चहोतृहृदयाख्यो मन्त्रगणो विवक्षितः । स चाष्टाविंशत्युत्तरशत-वाक्यात्मकः "सुवर्णं घर्मं परिवेद वेनम्" इत्ययमेकादशोऽनुवाकः । हृदयशब्दविवक्षित-रहस्यार्थप्रतिपादकत्वादस्यानुवाकस्य हृदयशब्दबोध्यत्वम् । "चित्तिः स्रुक्" इत्यादीनां हि होतृमन्त्राणां पञ्चानां हृदयं रहस्यं तत्त्वं परमात्मस्वरूपमनेनानुवाकेन विस्पष्टं प्रतिपाद्यते ।

अत एवायमनुवाको भागपञ्चकात्मकः । तत्र "सुवर्णं घर्मं" इत्यादिः "स मानसीन आत्मा जनानाम्" इत्यन्तश्चतुर्दशवाक्यात्मकः प्रथमो भागः "चित्तिः स्रुक्" इत्यादिदशहोतृहृदयभूतपरमात्मतत्त्वप्रकाशकः ।

"ब्रह्मेन्द्रमग्निं जगतः प्रतिष्ठाम्" इत्यादिः "कवयो निचिक्युः" इत्यन्तो द्वादश-वाक्यात्मको द्वितीयो भागः "पृथिवी होता" इत्यादिचतुर्होतृमन्त्रहृदयभूतपरमपुरुषप्रति-पादकः ।

"शतं नियुतः" इत्यादिः "तेन क्लृप्तोऽमृतेनाहमस्मि" इत्यन्तो द्वादशवाक्या-त्मकस्तृतीयो भागः "अग्निर्होता" इत्यादिपञ्चहोतृमन्त्रहृदयभूतभगवत्स्वरूपप्रतिपादकः ।

"सुवर्णं कोशं" इत्यादिः "शतधा चरन्तम्" इत्यन्तो द्वादशवाक्यात्मकश्चतुर्थो भागः "वाग्घोता" इत्यादिषड्ढोतृमन्त्रहृदयभूतपरमपुरुषस्वरूपविशेषप्रतिपादकः ।

"इन्द्रो राजा जगतो य ईशे" इत्यादिरनुवाकसमाप्त्यन्तोऽष्टसप्ततिवाक्यात्मकः पञ्चमो भागः "महाहविर्होता" इत्यादिसप्तहोतृमन्त्रहृदयभूतस्य श्रियः पत्युर्भगवतः स्वरूपविशेषप्रतिपादकः । एकेनैव भागेन भगवत्स्वरूपप्रतिपादने भागान्तरेण पुनस्तत्प्रति-पादनवैयर्थ्याशङ्का तूत्तरोत्तरभागस्य पूर्वपूर्वभागाप्रतिपन्नगुणविशेषविशिष्टभगवत्स्वरूपप्रति-पादनपरत्वान्निराकर्तव्या । तदेवं समस्तोऽयमनुवाको हृदयशब्देन विवक्षितः ।

रुद्राः शतरुद्रीयसंज्ञका मन्त्राः । ते च तैत्तिरीयसंहितायाश्चतुर्थकाण्डस्य पञ्चमप्रपाठके "नमस्ते रुद्र" इत्यादिषु "तं वो जम्भे दधामि" इत्यन्तेष्वेकादशस्वनुवाकेषु समाम्नाताः ।

(तत्र पुरुषसूक्तस्य ऋक्संख्यायां मतभेदप्रदर्शनम्)

नानाभेदप्रपाठं तत्पौरुषं सूक्तमुच्यते ।
ऋचश्चतस्रः केचित्तु पञ्च षट्सप्त चापरे ॥ ३ ॥
ऋचः षोडश चाप्यन्ये तथाऽष्टादश चापरे ।
अधीयते तु पुंसूक्तं प्रतिशाखं तु भेदतः ॥ ४ ॥

(पुरुषसूक्तप्रतिपाद्यप्रमेयप्रदर्शनम्)

समस्तजगदुत्पत्तिहेतुः स्वर्गापवर्गदः ।
पौरुषो मानुषो यज्ञः सूक्तेऽस्मिन्प्रतिपाद्यते ॥ ५ ॥

(आद्यानां चतसृणामृचां वासुदेवादिचातुरात्म्यस्वरूपविवेचकत्वम्)

तत्राद्याभिश्चतसृभिश्चातुरात्म्यं विविच्यते ।

(तत्राद्यमन्त्रस्य लक्ष्मीपतित्वपरिष्कृतवासुदेवाख्यप्रथमव्यूहप्रतिपादकत्वम्)

यः परः पुण्डरीकाक्षः परमात्मा सनातनः ॥ ६ ॥
या च सा जगतां योनिर्लक्ष्मीस्तद्धर्मधर्मिणी ।
भगवान्वासुदेवोऽसावाद्यया प्रतिपाद्यते ॥ ७ ॥

(मन्त्रस्य प्रतिपदमर्थं वर्णयितुं सहस्रशीर्षशब्दस्य श्रियःपतित्वपरत्वप्रदर्शनम्)

सहस्रा सहगा यस्य सहभावमुपेयुषी ।
श्रीर्नाम परमा शक्तिः पूर्णषाड्गुण्यविग्रहा ॥ ८ ॥

---

ब्रह्माणि—ब्रह्मलिङ्गकानि सूक्तानि "ब्रह्म जज्ञानं" इत्यादीनि तैत्तिरीयब्राह्मण-द्वितीयाष्टकस्याष्टमप्रपाठकेऽष्टमानुवाके प्रसिद्धानि.

1. तथाऽष्टौ दश E F.

निस्सक्तासक्तको यश्च नित्यं सन्सकलाश्रयः ।
सहस्रशीर्ष इत्येवं भगवान्परिगीयते ॥ ९ ॥

(पुरुषशब्दस्यावाप्तसमस्तकामत्वपरत्वम् )

पूर्णत्वात्पुरुषो नित्यं पृणातेः पूरणार्थकात् ।

(सहस्राक्षशब्दस्य सहस्रत्वगुणविशिष्टबद्धात्मवैशिष्ट्यपरत्वम् )

अश्नुतेरथवाऽश्नातेरक्षोऽजेरश्नतेरुत ॥१०॥
[2]अक्षः पुरुष उद्दिष्टो यः प्रकृत्याश्रितो विभुः ।

(सहस्रपाच्छब्दस्य सहस्रत्वगुणविशिष्टप्रकृतिवैशिष्ट्यपरत्वम् )

[2]पद्यतेः परिणामार्थात्पदित्येष निरुच्यते ॥११॥
पादिति प्रकृतिः प्रोक्ता सा नित्यपरिणामिनी ।

(प्रकृतिपुरुषयोः सहस्रशब्दप्रवृत्तिनिमित्तप्रदर्शनम् )

षण्णां गुणानां मध्ये या शक्तिः सा ह्स्र उच्यते
प्रधानपुरुषौ तस्याः सृतौ सर्गे सनातनौ ।
तामेवापि श्रितावन्ते तौ सहस्रावतः स्मृतौ ॥

(वासुदेवस्य प्रकृतिपुरुषवैशिष्ट्यनिगमनम् )

सहस्रपुरुषाव्यक्तः सहस्राक्षः सहस्रपात् ।

---

1. निसक्तासक्तको A.

2. अनयोरर्धयोः सर्वेषु कोशेषु स्थानविनिमयो दृश्यते ; अर्थानुगुण्येन त्वस्माभि-[illegible]न तयोः संनिवेशः स्वीकृतः ।

(उत्तरार्धस्य तात्पर्यार्थनिरूपणमुखेन कारणगतापरिच्छिन्नत्वगुण-
परत्वप्रदर्शनम्)

स भूमिं विश्वतो वृत्वेत्येतेनैव निरूप्यते ॥१४॥
यदतीत्य स्तृतं विश्वं नानासत्ताऽऽत्मनः स्थितिः ।
कार्ये हि कारणेयत्ता पयसो दधिसंभवे ॥१५॥
कार्यं सत्संततौ क्वापि कार्येयत्तैव कारणे ।
मधूच्छिष्टमये पिण्डे यथाऽऽकारवियोगिनि ॥१६॥
नैवं भगवतः सर्गे प्रतिसर्गेऽपि चासति ।
कार्येयत्तात्वमस्तीति स भूमिमिति वर्ण्यते ॥१७॥
भगवत्यार्जितानीति शुद्धाशुद्धमयानि च ।
भूमिं जगदुपादानं भूमिशक्तिरिहोच्यते ॥१८॥
शुद्धाशुद्धविभागो यः कालपुंप्रकृतिस्थितः[1] ।
स भूमिं विश्वतो वृत्वा विष्टभ्य स्वेन तेजसा ॥
स्वसंकल्पस्वरूपेण प्रभवाप्ययवेलयोः ।
अत्यतिष्ठदतीत्यैव स्थितो भूयो दशाङ्गुलम् ॥२०॥
दशाङ्गुलिभिरानन्त्यं कारणस्योपदिश्यते ।

(अथ द्वितीयमन्त्रस्य संकर्षणाख्यद्वितीयव्यूहपरत्वप्रतिपादनम्)

अथ संकर्षणावस्था जगद्धेतुर्निरूप्यते ॥२१॥
यदिदं दृश्यते विश्वं भूतभव्यात्मरूपकम् ।

---

1. "स भूमिं" इत्यारभ्य प्रवृत्ते "कालपुंप्रकृतिस्थितः" इत्यन्ते ग्रन्थसंदर्भे वाक्यसांगत्यं चिन्त्यं सुधीभिः.

2. "०स्थितिः" इति सर्वत्र पाठः,

इदं पुरुष एवादौ सिसृक्षायामभूत्किल ॥२२॥

(मन्त्रगतस्य पुरुषशब्दस्य संकर्षणपरत्वोपपादनम्)

पुरुषः स्यन्दति व्यक्तं सम्यग्विज्ञानयोजनात् ।
अतः पुरुष इत्येवं संकर्षण उदीर्यते ॥२३॥

(उत्तरार्धेन संकर्षणस्य ज्ञानोपदेष्टृत्वनिबन्धनमोक्षप्रदत्वगुणप्रतिपादनम् )

तिलकालकवद्विश्वं बिभ्रच्चिदचिदात्मकम् ।
संकर्षण उदेति स्म स एवं पुनरुच्यते ॥२४॥
उतामृतत्वस्येशान इति तस्यार्थ उच्यते ।
अन्नेन भोग्यभूतेन प्रकृतिप्राकृतात्मना ॥२५॥
कालसंकलितेनैव नानाऽऽकारविधाजुषा ।
अचिदंशेन जीवात्मा यश्चिदंशोऽधिरोहति ॥२६॥
स्वस्थासंबन्धपूर्वं यः पूर्वसंगवशादिह ।
तस्य सद्गुणसंसर्गान्नानाबन्धक्षये सति ॥२७॥
अमृतत्वं स्वरूपाविर्भावमोक्षापराह्वयम् ।
तस्य संकर्षणो देव ईशानो ज्ञानदेशनात् ॥२८॥

(अथ तृतीयमन्त्रस्य प्रद्युम्नाख्यतृतीयव्यूहपरत्वप्रतिपादनम् )

संसारानलसंतप्तचेतनानुजिघृक्षया ।
संकर्षणाद्यो विष्णुरुच्यतेऽथ तृतीयया ॥२९॥

---

1. इदमर्धं सर्वेषु कोशेष्वेवमेव दृश्यते.

2. इदमपि तथा.

एतावानस्य महिमा विष्णोः संकर्षणात्मनः ।
यदयं धृतवान्विश्वं समुन्मीलनमादिमम् ॥३०॥
ज्यायानतोऽपि पुरुषः प्रद्युम्न उपकारतः ।

(मन्त्रगतेन पुरुषशब्देन प्रद्युम्नस्य ज्यायस्त्वोपपादनम् )

पुरू प्रकृतिपुंरूपौ पुरुषः सृजतीति यत् ॥३१॥
विश्वोपकारचेष्टाभिर्ज्यायस्त्वं तस्य वर्ण्यते ।

(अथ चतुर्थमन्त्रस्यानिरुद्धाख्यचतुर्थव्यूहपरत्वप्रतिपादनम् )

ऋचा तुरीयया सूक्ते त्रिपादूर्ध्व उदैदिति ॥३२॥
देवोऽपरिमितेहस्सन्ननिरुद्धो निरूप्यते ।

(मन्त्रगतस्य पुरुषशब्दस्यानिरुद्धपरत्वोपपादनम् )

पुरा सीदति कार्याणि कारयन्प्राणिनोऽखिलान् ॥
फलानि पुरुषेभ्यश्च सनोति क्रिययार्चितः ।
ततः पुरुष इत्येवमनिरुद्धोऽभिधीयते ॥३४॥
पुरि सन्सन्पुरीवायं पुरादूर्ध्वमुदैत्[1]परात् ।
[2]तदवस्थेन नाघ्रातमित्यर्थोऽयमिहोच्यते ॥३५॥
पादोऽस्यैकांश एवेह चेतनाचेतनात्मकम्[3] ।
अन्तर्यामितया व्याप्तिस्[4]तत्तन्नियमनेच्छया ॥३६॥

---

1. ०मुदैत्ततः B.
2. तदवस्थेनताघ्रात० (?) A.
3. " चेतनाचेतनात्मनि " इति सर्वत्र.
4. प्राप्तिः E F.

एतदेव व्यनक्तीह ततो विष्वङ्ङिति त्वृचा ।
विष्वक्समन्ततो भूत्वा व्यक्रामत्प्राविशद्द्दु ॥३७॥
साशनानशने प्रोक्ते चेतनाचेतने उभे ।
तस्माद्विराडिति प्रोक्ता विराड्द्विधा पराह्वया ॥३८॥
हिरण्यगर्भो विश्वात्मा स पूरुष इहोच्यते ।

(अवशिष्टानां चतुर्दशमन्त्राणामर्थस्य लोकतो ज्ञेयत्वकथनपूर्वकं पुरुषसूक्तार्थ-निगमनम् )

शेषं तु लोकतः सिद्धमित्ययं सूक्त ईदृशः ॥३९॥

(अथ तन्त्रान्तरे विस्तरेण निरूपितस्य श्रीसूक्तार्थस्यातिसंक्षेपेण सूचनम् )

हिरण्यवर्णां श्रीसूक्तं कृतोऽन्यत्राऽस्य विस्तरः ।
वर्णो वरयते रूपं वर्णो वर [1]उतापतिः ॥४०॥
हितश्च रमणीयश्च यस्या वर्ण इति [2]स्थितिः ।
हिरण्यवर्णा सा देवी श्रीशक्तिः [3]परमाऽमृता ॥
तदेतत्सूक्तमित्युक्तं [4]मिथुनं पराचिह्वितम् ।
आदावन्योन्यमिश्रत्वादन्योन्यप्रतिपादकम् ॥४२॥

(नियमपूर्वकं यथोक्तसूक्तद्वयनिष्ठस्य मोक्षप्राप्तिः फलम् )

नियतो नियताहारो ..............................[5] ।

---

1. उमापतिम् (?) F ; अत्रार्थसांगत्यं चिन्त्यम्.
2. स्मृतः E F.
3. परमात्मिका B ; परमात्मता C E F.
4. परस्परविचिह्वितम् A B.
5. अत्र सर्वेषु कोशेष्वक्षराणि न लिखितानि ; "नियतेन्द्रियसंचयः" इति भवेत्.

भजन्सूक्तद्वयं याति तद्विष्णोः परमं पदम् ॥४३॥

(अथ वराहमन्त्रे स्थूलार्थस्य लोकतो ज्ञेयत्वकथनम्)

वराहो नाम यो मन्त्रो ह्यत्यनुष्टुबितीरितः ।
तस्य सांसर्गिकी मुद्रा विदिता लोकतस्तव ॥

(अथ तस्यैव संक्षेपतः सूक्ष्मार्थनिरूपणम्)

अस्य प्रतिपदार्थो यो मत्तस्तं त्वं निशामय ।
वराहादावभिव्यक्तं यस्य रूपं सनातनम् ॥४५॥
वराहरूपो भगवान्वसुधाहरणोद्यतः ।
संसारो रात्रिरुद्दिष्टो मोक्षो वरमहः स्मृतः ॥४६॥
वराहरूप उद्दिष्टो वरस्याह्नो निरूपणात् ।

(तथैव परार्थनिरूपणम्)

अशेषभुवनाधारो गोपनश्चैव सर्वदा ॥४७॥
प्रज्ञानामपि चाधारो रक्षोदैत्यदवानलः ।
पवित्रः सर्वलोकानामप्रमेयः सनातनः ॥४८॥
परमात्मा वराहोऽभूदित्थं स पर ईरितः ।
दिगियं दर्शिता सम्यग्येषां मन्त्रान्तरो गतिः ॥
न्यायेनानेन मन्त्राणां गतिं पिण्डं निरूपय ।

(अथ शास्त्रार्थमुपसंहर्तुं संक्षेपतः सुदर्शनगतिनिरूपणम्)

भूयश्च शृणु संक्षेपात्सुदर्शनगतिं प्रति ॥५०॥

1. इत्थमेव सर्वत्र पाठः । अर्थसांगत्यं तु चिन्त्यं सुधीभिः.

निमिषच्चोन्मिषच्चैव चरं चाचरमेव च ।
दिव्यं च प्राकृतं चैव सूक्ष्मं च स्थूलमेव च ॥
ह्रस्वं दीर्घं च यत्किंचिदीशितव्यमथेश्वरम् ।
विज्ञानं यदविज्ञानं सुखं वा यदि वाऽसुखम् ॥
इति द्वन्द्वपदाद्यैर्यद्वस्तु किंचिद्विकल्प्यते ।
सुदर्शनसमुन्मेषं तत्तद्विद्धि मुनीश्वर ॥५३॥

(अथ शास्त्रार्थसंक्षेपः)

लेशतो भगवानुक्तः स्वरूपगुणवैभवैः ।
तद्धर्मधर्मिणी शक्तिस्तस्य तत्त्वेन वर्णिता ॥५४॥
तस्या अत्यल्प उन्मेषो भूतिर्भाव्या स ईरिता ।
शुद्धाशुद्धमयी व्यक्तिस्तस्यास्तत्त्वेन वर्णिता ॥
भावकश्चापि शक्त्यंशः संकल्पो वैष्णवः परः ।
रूपतो वर्णितः सम्यक्सुदर्शनपराह्वयः ॥५६॥
देशकालादिका व्याप्तिस्तस्य तत्त्वेन वर्णिता ।
प्राणक्रिया बलं तेजः संकल्पो वैष्णवं यशः ॥
सुदर्शनं परोद्योगः प्राणो विष्णुसमुद्यमः ।
अव्याहतो महायोगो योगात्मा योगभावनः ॥
इत्यादिभिर्महाशब्दैस्तत्तदर्णविगाहिभिः ।
क्रियाशक्तिः परा विष्णोः शास्त्रे शास्त्रे निगद्यते ॥
यथा कारणतां याति यथैवाधारतामपि ।
यथा प्रमाणतां याति यथा याति तदर्थताम् ॥

यथा याति विधाया[1]भिस्तत्तदर्थाधिकारिताम् ।
निष्कलेन स्वरूपेण यथा दिव्योऽभवद्विधिः ॥६१॥
यथा च मध्यमं रूपं यन्त्रं तदुभयात्मकम् ।
सकलं यच्च तद्रूपं शस्त्रास्त्रमयमुज्ज्वलम् ॥६२॥
दिव्याः सौदर्शना व्यूहा वैश्वरूप्यं च तन्महत् ।
राज्ञोऽपि विजयः सर्वो रोदसीविजयस्तथा ॥६३॥
कृत्स्नो योगविधिश्चैव न्यासयां[2]गविधिस्तथा ।
नानोपद्रवशान्तिश्च व्यवस्था यो[3]गगोचरा ॥६४॥
ब्रह्मास्त्रादिस्वरूपं च तत्तन्मन्त्रविधिस्तथा ।
महाभिषेचनविधिरस्त्रयोगविधिस्तथा ॥६५॥
ध्वजादिमन्त्रयोगाश्च सेतिहासाविनिश्चयाः ।
स्थूलसूक्ष्मपरात्मानो दिव्यमन्त्रविनिश्चयाः ॥६६॥
इति ते निखिलेनार्था दर्शितास्ते मुनीश्वर ।
निधाय हृदये तत्त्वं स्वस्थो भव निरामयः ॥६७॥
व्याकृताः संशयाः सर्वे नारदर्षे मनस्स्थिताः ।
करामलकवच्चैव दिव्या सौदर्शनी गतिः ॥६८॥
आदर्शनस्वरूपेण गुणैः सफलवैभवैः ।
संहितेयं समाख्याता नानाशास्त्रावगाहिनी ॥६९॥

---

1. इत्थमेव सर्वत्र पाठः ; सांगत्यं तु चिन्त्यम्.
2. व्योग° E.
3. याग° A B.

(एतत्संहितोपदेशानर्हजनपरिगणनम्)

पञ्चरात्रमयी दिव्या सांख्ययोगादिसंमिता ।
संहितेयं महागुह्या नानामन्त्रमयी परा ॥७०॥
नावासुदेवभक्ताय त्वया देया कथंचन ।
नास्तिके भिन्नमर्यादे कृतघ्नेऽनृतवादने ॥७१॥
निस्स्वाध्यायवषट्कारे देवब्राह्मणदूषके ।
ब्रह्मचर्यव्रतभ्रष्टे पञ्चयज्ञपराङ्मुखे ॥७२॥
दूषणेऽपि च वेदानां ब्राह्मणे मन्त्रवर्जिते ।

(योग्याधिकारिपरिगणनम्)

वेदविद्याव्रतस्नाते श्रोत्रिये गृहमेधिनि ॥७३॥
ब्रह्मचारिणि वा सम्यग्गुरुस्वाध्यायतत्परे ।
वनस्थे वा व्रतोपेते भिक्षौ वा तत्त्ववित्परे ॥७४॥
कर्मणा मनसा वाचा भक्ते देवे जनार्दने ।
पञ्चरात्रप्रिये नित्यं वेदविद्यासुनिष्ठिते ॥७५॥
वक्तव्येयं परा विद्या सर्ववेदान्तबृंहणी ।

(मङ्गलाचरणव्याजेन शास्त्रप्रमेयसारानुवादपूर्वकं शास्त्रसमापनम्)

समस्तजगदुत्पत्तिस्थितिसंहारहेतवे ।
सुदर्शनाभिधानायै नमः शक्त्यै क्रियात्मने ॥७६॥

श्रीनारदः ।

अज्ञानतिमिरध्वंसभास्करायादिवेधसे ।
शिवंकराय भूतानां नमः शान्ताय तेजसे ॥७७॥

इति श्रीपाञ्चरात्रे तन्त्ररहस्ये अहिर्बुध्न्यसंहितायां

पुरुषसूक्त-श्रीसूक्त-वाराह-मन्त्रार्थनिरूपणं नाम एकोनषष्टितमोऽध्यायः ।

ओम् ।

(आदितः श्लोकाः ३८५३)

---

ओम् ।

## अथ शास्त्रवैभवनिरूपणं नाम षष्टितमोऽध्यायः ।

ध्यातं सकृद्भवानेककोट्यघौघं हरत्यरम् ।
सुदर्शनस्य तद्दिव्यं भर्गो देवस्य धीमहि ॥

(भरद्वाजं प्रति दुर्वाससा वृत्तानुवादव्याजेनापेक्षितयावदर्थ-
प्रतिपादकत्वरूपशास्त्रवैभवप्रपञ्चनम् )

दुर्वासाः ।

[1]इत्येतन्नारदायादौ पृष्टः प्रोवाच शंकरः ।
रहस्यं भगवज्ज्ञानं ज्ञानानामुत्तमं महत् ॥ १ ॥

(तत्र शास्त्रस्यास्य प्राधान्येन जगज्जन्मादिकारणभूतब्रह्म-स्वरूप-रूप-
गुण-विभवादि-प्रतिपादनपूर्वकं परदेवतानिष्कर्षकत्वम् )

स्थित्युत्पत्तिप्रलयकृद्भूतानां यत्र चिन्त्यते ।
स विष्णुश्चिन्त्यते यत्र स्वरूपगुणवैभवैः ॥ २ ॥

(तथा प्राधान्येन भगवदिच्छाशक्तिभूत-लक्ष्मीस्वरूप-रूप-गुण-
विभवादि-प्रतिपादकत्वम् )

यत्र सा [2]शक्तिसंशब्द्या विष्णोस्तद्धर्मधर्मिणी ।

1. इत्येवं नारदा° E F.
2. "शक्तिकंनासा" (?) इति सर्वत्र.

शीतरश्मेरिवज्योत्स्ना भावाभावानुगामिनी ॥३॥
अनन्या चान्यरूपा च ज्ञानानन्दक्रियामयी ।
महाविभूतिसंस्थाना निर्विकारा निरञ्जना ॥४॥
निस्सक्ता सक्तसन्मात्रा पूर्णा रिक्ता ऋतंभरा ।
प्रत्यस्तमितभेदा सा समुन्मूलितभेदिनी ॥५॥
षडध्वविषयातीता षडध्वविषयात्मिका ।
निमेषोन्मेषरूपा सा भावाभावस्वलक्षणा ॥६॥
चिन्त्यते यत्र सा लक्ष्मीः स्वरूपगुणवैभवैः ।
भाव्यभावकरूपा सा शक्तिः शक्तिद्वयाभिधा ॥
चिन्त्यते यत्र विस्पष्टं स्वरूपगुणवैभवैः ।
शुद्धाशुद्धस्वरूपा सा विष्णुशक्तिर्जगन्मयी ॥८॥
भूतिर्विचिन्त्यते यत्र भाव्यका यत्र वर्तते ।

(तथा प्राधान्येन भगवत्क्रियाशक्तिभूतसुदर्शनस्वरूपादिप्रतिपादकत्वम्)

उत्प्रेक्षारूपिणी शक्तिः सुदर्शनपराह्वया ॥९॥
सा पङ्कजा जगद्धातुर्भाविका यत्र चिन्त्यते ।
यत्र कारणरूपत्वं क्रियाशक्तेर्विचिन्त्यते ॥१०॥
साकारताकारता च शुद्धाशुद्धविभेदिता ।
चिन्त्यते यत्र विस्पष्टं विष्णुशक्तेः क्रियात्मनः ॥
प्रमाणरूपता यत्र त्रिविधा परिचिन्त्यते ।

---

1. साकारणा° E; अत्रार्थसांगत्यं चिन्त्यम्.

मर्यादाऽस्त्रौघशस्त्रौघशास्त्रौघपरिभेदिता ॥१२॥
पुरुषार्थात्मता शक्तेस्तथा तदधिकारिता ।
जगद्रक्षणरूपत्वं मन्त्रयन्त्रास्त्रविस्तृतम् ॥१३॥
इति सौदर्शनं रूपं निष्कलं यत्र चिन्त्यते ।
नानाव्यूहसमुद्भेदं नानासंस्थानशोभितम् ॥१४॥
चिन्त्यते सकलं रूपं यत्र सौदर्शनं महत् ।
जगद्रक्षणविध्वंसस्मृतिशालि महोदयम् ॥१५॥
सुदर्शनाङ्गसंभूतमस्त्रजातमशेषतः ।
स्वरूपशब्दविक्रान्तैर्निपुणं[1] यत्र चिन्त्यते ॥१६॥

(सांख्ययोगाद्यर्थप्रतिपादकत्वरूपवैभवान्तरसूचनम् )

सांख्ययोगविधिर्यत्र कार्त्स्न्येन परिचिन्त्यते ।
विविधा मन्त्रयोगाश्च मन्त्राश्च विधयोऽखिलाः ॥
नानासामर्थ्यभेदाश्च सेतिहासप्रविस्तराः ।
आत्मन्यासविधिश्चैव विधीनामुत्तमो विधिः ॥
मन्त्रार्था विविधाश्चैव स्थूलसूक्ष्मपरात्मकाः ।
चिन्त्यन्ते यत्र विस्पष्टं विष्णुसंकल्पजृम्भिताः ॥

(अथ एतच्छास्त्राधिकारिनियमनिरूपणम् )

तदेतदुपशान्तेन शान्तेन गुरुसेविना ।

---

1. स्वरूपगुण° E.

अध्येयं तन्त्रसाराख्यमाहिर्बुध्न्यं हि शासनम् ॥

(अनधिकारिनिर्देशपूर्वकं तेभ्यः शास्त्रप्रदाननिषेधः)

नाश्रोत्रियाय नाज्ञाय नाप्रातःस्नायिने तथा ।
न शठाय न दृप्ताय न कूटविधिसेविने ॥२१॥
नानन्तेवासिने चैव नासंवत्सरवासिने ।
नैव देयं कृतघ्नाय नासूयानलशायिने ॥२२॥

(योग्याधिकारिनिर्देशपूर्वकं तेभ्यः शास्त्रप्रदानाभ्यनुज्ञा)

सुपुत्राय[1] सुशिष्याय सर्वस्वप्राणदायिने ।
गुह्यगोपनशीलाय शास्त्रार्थस्थापकाय च ॥२३॥
ऊहापोहसुदक्षाय मन्त्रवत्संस्कृताय[2] च ।
देयमेतत्त्रिवर्णाय नित्यमध्यात्मशालिने ॥२४॥

(शास्त्रवैभवनिगमनम्)

षष्ट्यध्यायैः समुद्दिष्टा संहिता सेयमुत्तमा ।
यां ज्ञात्वा पुरुषः शश्वत्सर्वज्ञत्वमवाप्नुयात् ॥२५॥
परा च मध्यमा चैव ये हि ते संहिते स्मृते ।
तदर्थः सकलोऽप्यत्र संक्षेपेण प्रदर्शितः ॥२६॥

---

1. सत्पुत्राय सशिष्याय E.
2. मन्त्रवित्संस्कृताय E F.

(मङ्गलव्याजेन ग्रन्थसमापनम्)

**नमः शिवाय शान्ताय नारदाय महर्षये ।**
**नमः सुदर्शनायाथ विष्णोः संकल्परूपिणे ॥२७॥**

इति श्रीपाञ्चरात्रे तन्त्ररहस्ये अहिर्बुध्न्यसंहितायां
शास्त्रवैभवनिरूपणं नाम षष्टितमोऽध्यायः ।

हरिः ओम् ।

इति श्रीकौशिकापरपर्यायश्रीमद्वालधन्विकुलावतंसश्रीमन्नृसिंहार्यतनयस्य श्रीशे-
षार्यवंशमुक्ताफलश्रीमत्पाटरार्यतनूभवश्रीवेङ्कटार्यचरणयुगलसेवासमु-
ज्जृम्भितवेदान्तद्वयतत्त्ववैशद्यस्य वाधूलवंशकलशोदधिपूर्ण-
चन्द्र-तर्कतीर्थ-पण्डितरत्न-श्रीमत्कस्तूरिरङ्गनाथार्यक्ष-
पासमुत्तीर्ण-साहिती-धर्मशास्त्र-पूर्वमीमांसादि-
पारावारस्य श्रीदेवशिखामणेः रामानु-
जार्यस्य कृतिषु सिद्धाञ्जनं नामा-
हिर्बुध्न्यसंहिताविषयवि-
वेचनं षष्ठं सामाप्तम् ।

**जिज्ञासन्ते तु ये तत्त्वमहिर्बुध्न्यार्थगोचरम् ।**
**नियतं तेऽभिवीक्षन्तां सिद्धाञ्जनमिदं मुहुः ॥**
**सिद्धाञ्जनमिदं भूयाद्विदुषां मोदवृद्धये ।**
**प्रीयतां तेन भगवान्वासुदेवः श्रियःपतिः ॥**

ओम् ।

(आदितः श्लोकाः ३८८०)

समाप्ता चेयमहिर्बुध्न्यसंहिता ।

---

हरिः ओम् ।

[1]श्रीमते रामानुजाय नमः ।

# [2]श्रीसुदर्शनसहस्रनामस्तोत्र-प्रारम्भः ।

ओम् ।

प्रणम्य शिरसा देवं नारायणमशेषगम् ।
रमावक्षोजकस्तूरीपङ्काङ्कितवक्षसम् ॥ १ ॥
सर्वशास्त्रार्थतत्त्वज्ञः पाराशर्यस्तपोधनः ।
हिताय सर्वजगतां नारदं मुनिमब्रवीत् ॥ २ ॥

---

1. मातृकाकोशद्वयेऽपीदं दृश्यते.

2. यद्यपीदं स्तोत्रं षष्ठ्यध्यायात्मिकायां चरमाहिर्बुध्न्यसंहितायां नान्तर्भावयितुं शक्यम् । विनाप्यनेन षष्ठ्यध्यायानां पूर्णत्वात् । अथापि प्रथमाध्यायोपदर्शितरीत्या विंशत्युत्तरशताध्यायात्मकतया चत्वारिंशदुत्तरशतद्वयाध्यायात्मकतया चावगम्यमानयोर्मध्यमप्रथमाहिर्बुध्न्यसंहितयोरन्यतरत्र शक्यमन्तर्भावयितुम् । स्तोत्रस्यास्याहिर्बुध्न्यसंहितान्तर्भावस्यैवोपदेशपरम्परयाऽवगतत्वात् । अन्ते तथैव शिरोलेखदर्शनाच्च ॥

यद्यपीदं परमरहस्यभूतं स्तोत्रं कुत्रापि न प्रकाशनीयमित्याचार्यशासनमस्माकमासीत्, तथापि " विक्रीते करिणि किमङ्कुशे विवादः " इतिन्यायेन संहितायामेव तन्त्ररहस्यभूतायां कार्त्स्न्येन प्रकाशितायां किमनेनाप्रकाशितेनेतिसमीक्षिकया परमास्तिकबुभुत्सुजनप्रेरणापरतन्त्रैरस्माभिः कुलपरम्परया समागतमेकमेव तालपत्रमयं पुस्तकमादर्शीकृत्य

ज्ञानविद्याविशेषज्ञं कर्पूरधवलाकृतिम् ।
वीणावादनसंतुष्टमानसं मरुतां परम् ॥३॥
हिरण्यगर्भसंभूतं हिरण्याक्षादिसेवितम् ।
पुण्यराशिं पुराणज्ञं पावनीकृतदिक्तटम् ॥४॥

श्रीव्यास उवाच ।

देवर्षे नारद श्रीमन्साक्षाद्ब्रह्माङ्गसंभव ।
भवानशेषविद्यानां पारगस्तपसां निधिः ॥५॥
वेदान्तपारगः सर्वशास्त्रार्थप्रतिभोज्ज्वलः ।
परब्रह्मणि निष्णातः सच्चिदानन्दविग्रहः ॥६॥
जगद्धिताय जनितः साक्षादेव चतुर्मुखात् ।
हन्यन्ते भवता दैत्या दैत्यारिभुजविक्रमैः ॥७॥
कालोऽनुग्रहकर्ता त्वं त्रैलोक्यं त्वद्वशेऽनघ ।
मनुष्या ऋषयो देवास्त्वया जीवन्ति सत्तम ॥८॥
कर्तृत्वे लोककार्याणां वरत्वे परिनिष्ठितः ।
पृच्छामि त्वामशेषज्ञं निदानं सर्वसंपदाम् ॥९॥
सर्वसंसारनिर्मुक्तं चिद्घनं शान्तमानसम् ।
यः सर्वलोकहितकृत्यं प्रशसन्ति योगिनः ॥१०॥

---

तादृशबुभुत्सुजनसौकर्याय समारब्धं मुद्रणमस्य । अत्रान्तरे अस्मदीयपुस्तकालयस्थं देवनागराक्षरलिखितं षट्पत्रात्मकं। (IX, H, 55) इति चिह्नितं पुस्तकान्तरमप्यत्र सहायोऽभूदिति भृशं प्रमोदस्थानमिति युक्तमस्याहिर्बुध्न्यसंहितापरिशिष्टत्वेन मुद्रणमिति कर्मणाऽनेन प्रसीदतु भगवान्वासुदेवः, प्रहृष्यतु च श्रद्धालुर्विबुधगण इति साञ्जलिबन्धमभ्यर्थयामहे.

इदं चराचरं विश्वं धृतं येन महामुने ।
स्पृहयन्तश्च यत्प्रीत्यै यस्मै ब्रह्मादिदेवताः ॥११॥
निर्माणस्थितिसंहारा यतो विश्वस्य सत्तम ।
यस्य प्रसादाद्ब्रह्माद्या लभन्ते वाञ्छितं फलम् ॥
दारिद्र्यनाशो जायेत यस्मिन् श्रुतिपथं गते ।
विवक्षितार्थनिर्वाहा मुखान्निस्सरतीह गीः ॥१३॥
नृपाणां राज्यहीनानां येन राज्यं भविष्यति ।
अपुत्रः पुत्रवान्येन वन्ध्या पुत्रवती भवेत् ॥१४॥
शत्रूणामचिरान्नाशो ज्ञानं ज्ञानैषिणामपि[1] ।
चातुर्वर्ग्यफलं यस्य क्षणाद्भवति सुव्रत ॥१५॥
भूतप्रेतपिशाचाद्या यक्षराक्षसपन्नगाः ।
भूतज्वरादिरोगाश्च यस्य स्मरणमात्रतः ॥१६॥
मुच्यन्ते मुनिशार्दूल यद्वाऽखिलजगद्भृताः ।
तदेतदिति निश्चित्य सर्वशास्त्रविशारद ॥१७॥
सर्वलोकहितार्थाय ब्रूहि मे सकलं गुरो ।
इत्युक्तस्तेन मुनिना व्यासेनामिततेजसा ॥१८॥
बद्धाञ्जलिपुटो भूत्वा सादरं नारदो मुनिः ।
नमस्कृत्य जगन्मूलं लक्ष्मीकान्तं परात्परम् ॥१९॥
[2]उवाच परमप्रीतः करुणाऽमृतधारया ।

1. ज्ञानेप्सुनामपि (?) इति द्वितीयपुस्तके पाठः.

2. श्लोकोऽयं द्वितीयपुस्तके न दृश्यते.

आप्याययन्मुनीन्सर्वान्व्यासादीन्ब्रह्मतत्परान् ॥

श्रीनारदः ।

बहिरन्तस्तमश्छेदिज्योतिर्वन्दे सुदर्शनम् ।
येनाव्याहतसंकल्पं वस्तु लक्ष्मीधरं विदुः ॥२१॥

ओं अस्य श्रीसुदर्शनसहस्रनामस्तोत्रमहामन्त्रस्य—अहिर्बुध्न्यो भगवानृषिः । अनुष्टुप्छन्दः । श्रीसुदर्शनमहाविष्णुर्देवता । रं बीजं । हुं शक्तिः । फट् कीलकम् । 'रां रीं रूं रैं रौं रः' इतिमन्त्रः । श्रीसुदर्शनप्रसादसिद्ध्यर्थे जपे विनियोगः ॥ ओं रां अङ्गुष्ठाभ्यां नमः । ओं रीं तर्जनीभ्यां नमः । ओं रूं मध्यमाभ्यां नमः । ओं रैं अनामिकाभ्यां नमः । ओं रौं कनिष्ठिकाभ्यां नमः । ओं रः करतलकरपृष्ठाभ्यां नमः ।

एवं हृदयादिन्यासः—ओं रां ज्ञानाय हृदयाय नमः । ओं रीं ऐश्वर्याय शिरसे स्वाहा । ओं रूं शक्त्यै शिखायै वषट् । ओं रैं बलाय कवचाय हुं । ओं रौं वीर्यायास्त्राय फट् । ओं रः तेजसे नेत्रत्रयाय वौषट् ।

अथ दिग्बन्धः—ओं ठं ठं पूर्वां दिशं चक्रेण बध्नामि नमश्चक्राय हुं फट् स्वाहा । ओं ठं ठं आग्नेयीं दिशं० । ओं ठं ठं याम्यां दिशं० ।

ओं ठं ठं नैर्ऋतीं दिशं०। ओं ठं ठं वारुणीं दिशं०। ओं ठं ठं वायवीं दिशं०। ओं ठं ठं कौबेरीं दिशं०। ओं ठं ठं ऐशानीं दिशं०। ओं ठं ठं ऊर्ध्वां दिशं०। ओं ठं ठं अधरां दिशं०। ओं ठं ठं सर्वां दिशं चक्रेण बध्नामि नमश्चक्राय हुं फट् स्वाहा। इति दिग्बन्धः।

अथ ध्यानम्।

ओम्।

कल्पान्तार्कप्रकाशं त्रिभुवनमखिलं तेजसा
पूरयन्तं
रक्ताक्षं पिङ्गकेशं रिपुकुलभयदं भीम-
दंष्ट्राट्टहासम्।
शङ्खं चक्रं गदाब्जं पृथुतरमुसलं चाप-
पाशाङ्कुशादी-
न्बिभ्राणं दोर्भिराद्यं मनसि मुररिपोर्भावये
चक्रराजम्॥

शङ्खं चक्रं गदाब्जं शरमसिमिषुधिं चाप-
पाशाङ्कुशादी-
न्बिभ्राणं वज्रखेटं हलमुसललसत्कुन्त-
मत्युग्रदंष्ट्रम्।

ज्वालाकेशं त्रिणेत्रं ज्वलदनलनिभं हार-
केयूरभूषं
ध्यायेत्षट्कोणसंस्थं सकलरिपुजनप्राण-
संहारचक्रम् ॥

इति ध्यानम् ।

हरिः ओम् ।

(तत्रादौ ककारादीनि षोडश नामानि)

कल्याणगुणसंपन्नः कल्याणवसनोज्ज्वलः ।
कल्याणाचलगम्भीरः कल्याणजनरञ्जकः ॥१॥
कल्याणदोषनाशश्च कल्याणरुचिराङ्गकः ।
कल्याणाङ्गदसंपन्नः कल्याणाकारसंनिभः ॥२॥
करालवदनोऽत्रासी करालाङ्गोऽभयंकरः ।
करालतनुजोद्दामः करालतनुभेदकः ॥३॥
करञ्जवनमध्यस्थः करञ्जदधिभोजनः ।
करञ्जासुरसंहर्ता करञ्जमधुराङ्गकः ॥४॥

(अथ खकारादीनि दश)

खञ्जनानन्दजनकः खञ्जनाहारजूषितः ।
खञ्जनायुधभृद्दिव्यखञ्जनाखण्डगर्वहृत् ॥५॥
खरान्तकः खररुचिः खरदुःखैरसेवितः ।
खरान्तकः खरोदारः खरासुरविभञ्जनः ॥६॥

(अथ गकारादीनि द्वादश)

गोपालो गोपतिर्गोप्ता गोपस्त्रीनाथरञ्जकः ।

गोजारुणतनुर्गोजो गोजारतिकृतोत्सवः ॥७॥
गम्भीरनाभिर्गम्भीरो गम्भीरार्थसमन्वितः ।
गम्भीरवैद्यमरुतो गम्भीरगुणभूषितः ॥८॥

(अथ घकारादीन्येकादश)

घनरावो घनरुचिर्घनगम्भीरनिस्वनः ।
घनाघनौघनाशी च घनसंतानदायकः ॥९॥
घनरोचिर्घनचरो घनचन्दनचर्चितः ।
घनहेतिर्घनभुजो घनोऽखिलसुरार्चितः ॥१०॥

(अथ ङकारादीनि चत्वारि)

ङकारावधिविभवो ङकारो मुनिसंमतः ।
ङकारवीतसहितो ङकाराकारभूषितः ॥११॥

(अथ चकारादीनि षट्पञ्चाशत्)

चक्रराजश्चक्रपतिश्चक्राधीशः सुचक्रभूः ।
चक्रसेव्यश्चक्रधरश्चक्रभूषणभूषितः ॥१२॥
चक्रराजरुचिश्चक्रश्चक्रपालनतत्परः ।
चक्रधृक्चक्रवरदश्चक्रभूषणभूषितः ॥१३॥
सुचक्रधीः सुचक्राख्यः सुचक्रगुणभूषितः ।
विचक्रश्चक्रनिरतश्चक्रसंपन्नवैभवः ॥१४॥
चक्रदोश्चक्रदश्चक्रश्चक्रराजपराक्रमः ।
चक्रनादश्चक्रचरश्चक्रगश्चक्रपाशकृत् ॥१५॥

चक्रव्यापी चक्रगुरुश्चक्रहारी विचक्रभृत् ।
चक्राङ्कश्चक्रमहितश्चक्रवाकगुणाकरः ॥१६॥
आचक्रश्चक्रधर्मज्ञश्चक्रकश्चक्रमर्दनः ।
आचक्रनियमश्चक्रः सर्वपापविधूननः ॥१७॥
चक्रज्वालश्चक्रधरश्चक्रपालितविग्रहः ।
चक्रवर्ती चक्रदायी चक्रकारी मदापहः ॥१८॥
चक्रकोटिमहानादश्चक्रकोटिसमप्रभः ।
चक्रराजावनचरश्चक्रराजान्तरोज्ज्वलः ॥१९॥
चञ्चलारातिदमनश्चञ्चलस्वान्तरोमकृत् ।
चञ्चलो मानसोल्लासी चञ्चलाचलभासुरः ॥२०॥
चञ्चलारातिनिरतश्चञ्चलाधिकचञ्चलः ।

(अथ छकारादीनि नव)

छायया5खिलतापघ्नश्छायामदविभञ्जनः ॥२१॥
छायाप्रियो5धिकरुचिश्छायावृक्षसमाश्रयः ।
छाया5न्वितश्छायया5र्च्यश्छाया5धिकसुखप्रदः ॥
छायाम्बरपरीधानश्छायात्मजनमुश्चितः ।

(अथ जकारादीनि षोडश)

जलजाक्षीप्रियकरो जलजानन्ददायकः ॥२३॥
जलजासिद्धिरुचिरो जलजालसमो भरः ।
जलज्वालापसंस्तुत्यो जलजाताय मोदकृत् ॥२४॥
जलजाहारचतुरो जलजाराधनोत्सुकः ।

जनकस्तुतिसंतुष्टो जनकाराधिताधिकः ॥२५॥
जनकामोदनपरो जनकानन्ददायकः ।
जनकाध्यानसंतुष्टहृदयो जनकार्चितः ॥२६॥
जनकानन्दजननो जनकृद्धृदयाम्बुजः ।

(अथ झकारादीनि चत्वारि)

झञ्झामारुतवेगाढ्यो झञ्झामारुतसंगरः ॥२७॥
झञ्झामारुतसंरावो झञ्झामारुतविक्रमः ।

(अथ ञकारादिनी द्वे)

ञकाराम्बुजमध्यस्थो ञकारकृतसंनिधिः ॥२८॥

(अथ टकारादीनि नव)

टङ्कधारी टङ्कवपुष्टङ्कसंहारकारकः ।
टङ्कच्छिन्नसुवर्णाभष्टङ्कारधनुरुज्ज्वलः ॥२९॥
टङ्काराग्निसमाकारष्टङ्काररवमेदुरः ।
टङ्कारकीर्तिभरितष्टङ्कारानन्दवर्धनः ॥३०॥

(अथ डकारादीन्येकोनविंशतिः)

डम्भसंहतिसंहर्ता डम्भसंततिवर्धनः ।
डम्भधृग्डम्भहृदयो डम्भदण्डनतत्परः ॥३१॥
डिम्भधृग्डिम्भकृड्डिम्भो डिम्भसूदनतत्परः ।
डिम्भपापहरो डिम्भसंभावितपदाम्बुजः ॥३२॥
डिम्भरोघत्कटम्बाजो डमरुध्यानतत्परः ।
डमरूद्भवसंहर्ता डमरूद्भवनन्दनः ॥३३॥

डाडिमीवनमध्यस्थो डाडिमीकुसुमप्रियः ।
डाडिमीफलसंतुष्टो डाडिमीफलवर्जितः ॥३४॥

(अथ ढकारादीन्यष्टौ)

ढक्कामनोहरवपुर्ढक्कारवविराजितः ।
ढक्कावाद्येषु निरतो ढक्काधारणतत्परः ॥३५॥
ढकारबीजसंपन्नो ढकाराक्षरमेदुरः ।
ढकारमध्यसदनो ढकारविहितान्त्रकः ॥३६॥

(अथ णकारादीनि चत्वारि)

णकारबीजवसतिर्णकारवसनोज्ज्वलः ।
णकारातिगभीराङ्गो णकाराराधनप्रियः ॥३७॥

(अथ तकारादीनि चतुर्दश)

तरलाक्षीमहाहर्ता तारकासुरहृत्तरिः ।
तरलोज्ज्वलहाराढ्यस्तरलस्वान्तरञ्जकः ॥३८॥
तारकासुरसंसेव्यस्तारकासुरमानितः ।
तुरङ्गवदनस्तोत्रसंतुष्टहृदयाम्बुजः ॥३९॥
तुरङ्गवदनः श्रीमांस्तुरङ्गवदनस्तुतः ।
तमःपटलसंछन्नस्तमःसंततिमर्दनः ॥४०॥
तमोनुदो जलशयस्तमःसंवर्धनो हरः ।

(अथ थकारादीनि चत्वारि)

थवर्णमध्यसंवासी थवर्णवरभूषितः ॥४१॥
थवर्णबीजसंपन्नस्थवर्णरुचिरालयः ।

(अथ दकारादीनि दश)

दरभृद्दरसाराक्षो दरहृद्दरवञ्चकः ॥४२॥
दरफुल्लाम्बुजरुचिर्दरचक्रविराजितः ।
दधिसंग्रहणव्यग्रो दधिपाण्डरकीर्तिभृत् ॥४३॥
दध्यन्नपूजनरतो दधिवामनमोदकृत् ।

(अथ धकारादीनि चतुर्विंशतिः)

धन्वी धनप्रियो धन्यो धनाधिपसमर्चितः ॥४४॥
धरो धरावनरतो धनधान्यसमृद्धिदः ।
धनंजयो धनाध्यक्षो धनदो धनवर्जितः ॥४५॥
धनग्रहणसंपन्नो धनसंमतमानसः ।
धनराजवनासक्तो धनराजयशोभरः ॥४६॥
धनराजमदाहर्ता धनराजसमीडितः ।
धर्मकृद्धर्मभृद्धर्मी धर्मनन्दनसंनुतः ॥४७॥
धर्मराजो धनासक्तो धर्मज्ञाकल्पितस्तुतिः ।

(अथ नकारादीनि षोडश)

नरराजावनायत्तो नरराजाय निर्भरः ॥४८॥
नरराजस्तुतगुणो नरराजसमुज्ज्वलः ।
नवतामरसोदारो नवतामरसेक्षणः ॥४९॥
नवतामरसाहारो नवतामरसारुणः ।
नवसौवर्णवसनो नवनाथदयापरः ॥५०॥

नवनाथस्तुतनदो नवनाथसमाकृतिः ।
नालिकानेत्रमहितो नालिकावलिराजितः ॥५१॥
नालिकागतिमध्यस्थो नालिकासनसेवितः ।

(अथ पकारादीन्यष्टादश)

पुण्डरीकाक्षरुचिरः पुण्डरीकमदापहः ॥५२॥
पुण्डरीकमुनिस्तुत्यः पुण्डरीकसुहृद्द्युतिः ।
पुण्डरीकप्रभारम्यः पुण्डरीकनिभाननः ॥५३॥
पुण्डरीकाक्षसन्मानः पुण्डरीकदयापरः ।
परः परागतिवपुः परानन्दः परात्परः ॥५४॥
परमानन्दजनकः परमान्नाधिकप्रियः ।
पुष्कराक्षकरोदारः पुष्कराक्षः शिवंकरः ॥५५॥
पुष्करव्रातसहितः पुष्कराखसंयुतः ।

(अथ फकारादीनि नव)

फट्कारतः स्तूयमानः फट्काराक्षरमध्यगः ॥५६॥
फट्कारध्वस्तदनुजः फट्कारासनसंगतः ।
फलाहारः स्तुतफलः फलपूजाकृतोत्सवः ॥५७॥
फलदानरतोऽत्यन्तफलसंपूर्णमानसः ।

(अथ बकारादीनि षोडश)

बलस्तुतिर्बलाधारो बलभद्रप्रियंकरः ॥५८॥
बलवान्बलहारी च बलयुग्वैरिभञ्जनः ।

बलदाता बलधरो बलराजितविग्रहः ॥५९॥
बलाढ्लो बलकरो बलासुरनिषूदनः ।
बलरक्षणनिष्णातो बलसंमोददायकः ॥६०॥
बलसंपूर्णहृदयो बलसंहारदीक्षितः ।

(अथ भकारादीनि चतुर्विंशतिः)

भवस्तुतो भवपतिर्भवसंतानदायकः ॥६१॥
भवध्वंसी भवहरो भवस्तम्भनतत्परः ।
भवरक्षणनिष्णातो भवसंतोषकारकः ॥६२॥
भवसागरसंछेत्ता भवसिन्धुसुखप्रदः ।
भद्रदो भद्रहृदयो भद्रकार्यसमाश्रितः ॥६३॥
भद्रश्रीचर्चिततनुर्भद्रश्रीदानदीक्षितः ।
भद्रपादप्रियो भद्रो ह्यभद्रवनभञ्जनः ॥६४॥
भद्रश्रीगानसरसो भद्रमण्डलमण्डितः ।
भरद्वाजस्तुतपदो भरद्वाजसमाश्रितः ॥६५॥
भरद्वाजाश्रमरतो भरद्वाजदयाकरः ।

(अथ मकारादीनि त्रिपञ्चाशत् )

मसारनीलरुचिरो मसारचरणोज्ज्वलः ॥६६॥
मसारसारसत्कार्यो मसारांशुकभूषितः ।
माकन्दवनसंचारी माकन्दजनरञ्जकः ॥६७॥
माकन्दानन्दमन्दारो माकन्दानन्दबन्धुरः ।

मण्डलो मण्डलाधीशो मण्डलात्मा सुमण्डलः ॥
मण्डलेशो मण्डलान्तमण्डलार्चितमण्डलः ।
मण्डलावननिष्णातो मण्डलावरणी घनः ॥६९॥
मण्डलस्थो मण्डलाढ्यो मण्डलाभरणाङ्कितः ।
मधुदानवसंहर्ता मधुमञ्जुलवाग्भरः ॥७०॥
मधुदानाधिकरतो मधुमङ्गलवैभवः ।
मधुजेता मधुकरो मधुरो मधुराधिपः ॥७१॥
मधुवारणसंहर्ता मधुसंतानकारकः ।
मधुमासातिरुचिरो मधुमासविराजितः ॥७२॥
मधुपुष्टो मधुतनुर्मधुगो मधुसंवरः ।
मधुरो मधुराकारो मधुराम्बरभूषितः ॥७३॥
मधुरानगरीनाथो मधुरासुरभञ्जनः ।
मधुराहारनिरतो मधुराह्लाददक्षिणः ॥७४॥
मधुराम्भोजनयनो मधुराधिपसंगतः ।
मधुरानन्दचतुरो मधुरारातिसंगतः ॥७५॥
मधुराभरणोल्लासी मधुराङ्गदभूषितः ।
मृगराजवनीसक्तो मृगमण्डलमण्डितः ॥७६॥
मृगादरो मृगपतिर्मृगारातिविदारणः ।

(अथ यकारादीनि दश)

यज्ञप्रियो यज्ञवपुर्यज्ञसंप्रीतमानसः ॥७७॥
यज्ञसंताननिरतो यज्ञसंभारसंभ्रमः ।

यज्ञयज्ञो यज्ञपदो यज्ञसंपादनोत्सुकः ॥७८॥
यज्ञशालाकृतावासो यज्ञसंभाविताननकः ।

(अथ रेफादीनि विंशतिः)

रसेन्द्रो रससंपन्नो रसराजो रसोत्सुकः ॥७९॥
रसान्वितो रसधरो रसचेलो रसाकरः ।
रसजेता रसश्रेष्ठो रसराजाभिरञ्जितः ॥८०॥
रसतत्त्वसमासक्तो रसदारपराक्रमः ।
रसराजो रसधरो रसेशो रसवल्लभः ॥८१॥
रसनेता रसावासो रसोत्करविराजितः ।

(अथ लकारादीन्यष्टौ)

लवङ्गपुष्पसंतुष्टो लवङ्गकुसुमोचितः ॥८२॥
लवङ्गवनमध्यस्थो लवङ्गकुसुमोत्सुकः ।
लतावलिसमायुक्तो लतारससमर्चितः ॥८३॥
लताभिरामतनुभृल्लतातिलकभूषितः ।

(अथ वकारादीनि सप्तदश)

वीरस्तुतपदाम्भोजो विराजगमनोत्सुकः ॥८४॥
विराजपत्रमध्यस्थो विराजरससेवितः ।
वरदो वरसंपन्नो वरो वरसमुन्नतः ॥८५॥
वरस्तुतिर्वर्धमानो वरधृग्वरसंभवः ।

वरदानरतो वर्यो वरदानसमुत्सुकः ॥८६॥
वरदानार्द्रहृदयो वरवारणसंयुतः ।

(अथ शकारादीनि पञ्चविंशतिः)

शारदास्तुतपादाब्जः शारदाम्भोजकीर्तिभृत् ॥
शारदाम्भोजनयनः शारदाध्यक्षसेवितः ।
शारदापीठवसतिः शारदाधिपसंनुतः ॥८८॥
शारदावासदमनः शारदावासभासुरः ।
शतक्रतुस्तूयमानः शतक्रतुपराक्रमः ॥८९॥
शतक्रतुसमैश्वर्यः शतक्रतुमदापहः ।
शरचापधरः श्रीमान् शरसंभववैभवः ॥९०॥
शरपाण्डरकीर्तिश्रीः शरत्सारसलोचनः ।
शरसंगमसंपन्नः शरमण्डलमण्डितः ॥९१॥
शरातिगः शरधरः शरलालनलालसः ।
शरोद्भवसमाकारः शरयुद्धविशारदः ॥९२॥
शरबृन्दावनरतिः शरसंमतविक्रमः ।

(अथ षकारादीनि षोडश)

षट्पदः षट्पदाकारः षट्पदावलिसेवितः ॥९३॥
षट्पदाकारमधुरः षट्पदी षट्पदोद्भुतः ।
षडङ्गवेदविनुतः षडङ्गपदमेदुरः ॥९४॥
षट्पञ्चकवितावासः षड्बिन्दुरचितद्युतिः ।
षड्बिन्दुमध्यवसतिः षड्बिन्दुविशदीकृतः ॥९५॥

षडाम्नायस्तूयमानः षडाम्नायान्तरस्थितः ।
षट्छक्तिमङ्गलवृतः षट्चक्रकृतशेखरः ॥९६॥

(अथ सकारादीनि विंशतिः)

सारसारसरक्ताङ्गः सारसारसलोचनः ।
सारदीप्तिः सारतनुः सारसाक्षकरप्रियः ॥९७॥
सारदीपी सारकृपः सारसावनकृज्ज्वलः ।
सारङ्गसारदमनः सारकल्पितकुण्डलः ॥९८॥
सारसारण्यवसतिः सारसारवमेदुरः ।
सारगानप्रियः सारः सारसारसुपण्डितः ॥९९॥
सद्रक्षकः सदामोदी सदानन्दनदेशिकः ।
सद्वैद्यवन्द्यचरणः सद्वैद्योज्ज्वलमानसः ॥१००॥

(अथ हकारादीनि चतुष्षष्टिः)

हरिजेता हरिरथो हरिसेवापरायणः ।
हरिवर्णो हरिचरो हरिगो हरिवत्सलः ॥१०१॥
हरिद्रो हरिसंस्तोता हरिध्यानपरायणः ।
हरिकल्पान्तसंहर्ता हरिसारसमुज्ज्वलः ॥१०२॥
हरिचन्दनलिप्ताङ्गो हरिमानससंमतः ।
हरिकारुण्यनिरतो हंसमोचनलालसः ॥१०३॥
हरिपुत्राभयकरो हरिपुत्रसमर्चितः ।
हरिधारणसांनिध्यो हरिसंमोददायकः ॥१०४॥
हेतिराजो हेतिधरो हेतिनायकसंस्तुतः ।
हेतिर्हरिर्हेतिवपुर्हेतिहा हेतिवर्धनः ॥१०५॥

हेतिहन्ता हेतियुद्धकरो हेतिविभूषणः ।
हेतिदाता हेतिपरो हेतिमार्गप्रवर्तकः ॥१०६॥
हेतिसंततिसंपूर्णो हेतिमण्डलमण्डितः ।
हेतिदानपरः सर्वहेत्युग्रपरिभूषितः ॥१०७॥
हंसरूपी हंसगतिर्हंससंनुतवैभवः ।
हंसमार्गरतो हंसरक्षको हंसनायकः ॥१०८॥
हंसदृग्गोचरतनुर्हंससंगीततोषितः ।
हंसजेता हंसपतिर्हंसगो हंसवाहनः ॥१०९॥
हंसजो हंसगमनो हंसराजसुपूजितः ।
हंसवेगो हंसधरो हंससुन्दरविग्रहः ॥११०॥
हंसवत्सुन्दरतनुर्हंससंगतमानसः ।
हंसस्वरूपसारज्ञो हंससंनतमानसः ॥१११॥
हंससंस्तुतसामर्थ्यो हरिरक्षणतत्परः ।
हंससंस्तुतमाहात्म्यो हरपुत्त्रपराक्रमः ॥११२॥

(अथ क्षकारादीनि द्वादश नामानि)

क्षीरार्णवसमुद्भूतः क्षीरसंभवभावितः ।
क्षीराब्धिनाथसंयुक्तः क्षीरकीर्तिविभासुरः ॥११३॥
क्षणदारवसंहर्ता क्षणदारवसंमतः ।
क्षणदाधीशसंयुक्तः क्षणदानकृतोत्सवः ॥११४॥
क्षीराभिषेकसंतुष्टः क्षीरपानाभिलाषुकः ।
क्षीराज्यभोजनासक्तः क्षीरसंभववर्णकः ॥११५॥

(अथ फलश्रुतिः)

इत्येतत्कथितं दिव्यं सर्वपापप्रणाशनम् ।
सर्वशत्रुक्षयकरं सर्वसंपत्प्रदायकम् ॥११६॥
सर्वसौभाग्यजनकं सर्वमङ्गलकारकम् ।
सर्वदारिद्र्यशमनं सर्वोपद्रवनाशनम् ॥११७॥
सर्वशान्तिकरं गुह्यं सर्वरोगनिवारणम् ।
अतिबन्धग्रहहरं सर्वदुःखनिवारकम् ॥११८॥
नाम्नां सहस्रं दिव्यानां चक्रराजस्य सत्पतेः ।
नामानि हेतिराजस्य ये पठन्तीह मानवाः ।
तेषां भवन्ति सकलाः संपदो नात्र संशयः ॥११९॥

इत्यहिर्बुध्न्यसंहितायां तन्त्ररहस्ये व्यासनारदसंवादे
श्रीसुदर्शनसहस्रनामस्तोत्रं संपूर्णम् ।

ओम् ।

[2]श्रीमते रामानुजाय नमः ।

---

1. अत्रेदं चिन्त्यम्—यथोक्तानां नाम्नां परिगणने, तेषां संख्या षष्ट्युत्तराणि पञ्चशतानि नातिक्रामति। तत्र किमेतावत्स्वेव नामसु सहस्रनामशब्द औपचारिकः प्रयुक्तः उत मध्येमध्ये ग्रन्थलोपान्नामसहस्रसंख्याया अपूर्तिरिति। प्रमाणेन प्रबलतरेण विना सहस्र-नामशब्दस्यौपचारिकत्वकल्पनानौचित्यं ग्रन्थलोपावश्यकतामुद्भावयति। आदर्शीकृतयो-रज्ञातपरस्परवृत्तान्तयोर्भिन्नदेशादानीतयोर्द्वयोर्मातृकाकोशयोर्दैवादापतितमैकरूप्यं तु ग्रन्थ-लोपसद्भावशंकां प्रतिरुणद्धि नः। हन्तैवं गहने विबुधाः प्रमाणं तत्त्वविमर्शाय। यदि नाम सुदर्शनचरणनलिननिबद्धमनोभावाः तत्पदकमलसमर्चनकुतूहलिनः तदीयनामसहस्रसंख्या-वैकल्यमसहमाना उदाराशयाः केचन सुधियः स्ववशे स्वसुहृद्वशे वोपलभ्यमानमविकलं सुदर्शननामसहस्रपुस्तकमस्मत्सविधे प्रेषयेयुः, हन्त तर्हि साञ्जलिबन्धमानतेन शिरसा प्रतिगृह्य तमिमं सुदर्शननामसहस्रस्तवराजं द्वितीयसंस्करणे परिष्कृत्य प्रकाशयिष्याम इति विनिवेद्यते.

2. मातृकाकोशद्वयेऽपीदं दृश्यते.

# अहिर्बुध्न्यसंहितायां दृष्टानां महापुरुषाणां पुण्यस्थानानां च नामानि यथा—

---

# रहस्यत्रयव्याख्यायां तात्पर्यदीपिकायां अहिर्बुध्न्यसंहितावचनोदाहरणप्रदेशाः प्रदर्श्यन्ते

अत्र संख्यानिर्देशः

अडयार्पुस्तकालयस्थहस्तलिखित(1)पुस्तकानुसारेण द्रष्टव्यः

प्रथमसंपुटे

| | | | | |
|---|---|---|---|---|
| २५—३० | १२७ | १७९ | २८७ | ३५७ |
| ४० | १२९ | १८७ | ३११ | ३६० |
| ४९ | १३१—१३२ | १९५ | ३१८ | ३६२ |
| ६१ | १३५ | २१८ | ३२२ | ३७३ |
| ६२ | १४१ | २२३ | ३२३ | ३७४ |
| ६५—६६ | १५५ | २२४ | ३२४ | ३७७ |
| ६७—६८ | १५६—१६२ | २३५ | ३२५ | ४२२ |
| ६८—६९ | १६३—१६८ | २४०—२४१ | ३३२—३३३ | |
| ७०—७१ | १६९ | २४४ | ३४३ | |
| ७७ | १७१ | २६१—२८० | ३४४ | |
| १०१ | १७५ | २८४ | ३५६ | |

द्वितीयसंपुटे

| | | | | |
|---|---|---|---|---|
| ४५८ | ६७१ | ८८४ | १०६३—१०६५ | ११११ |
| ४६२ | ६७२ | ८८५ | १०६६ | ११२८ |
| ४९२ | ६७३ | ८८६ | १०७२ | ११६६ |
| ५४१ | ६७४ | ८८७ | १०७७ | ११६९—११७३ |
| ५४६ | ६७५ | ८८८ | १०८३ | ११९७ |
| ५५८ | ६७६ | ९०१ | १०८४ | १२०० |
| ५७० | ७०६ | ९०३ | १०८५ | १२०६ |
| ५८२ | ७७० | ९११ | १०८६ | १२०८ |
| ५९५ | ७९७ | ९२३ | १०९० | १२४४ |
| ६३८ | ८०३ | ९२४ | १०९२ | १२४५ |
| ६४६—६४७ | ८१७ | ९२५ | १०९३ | १२४६ |
| ६४९ | ८११ | ९३० | १०९६ | १२४९ |
| ६५७ | ८३३ | ९३१ | १०९७ | १२५० |
| ६५८ | ८५३ | ९६२ | ११०२ | १२५४ |
| ६६५ | ८७० | ९९० | ११०६ | १२७७ |
| ६६८ | ८७१ | ९९२ | ११०७ | |
| ६६९ | ८८२ | १०४१ | ११०८ | |

(1) VIII. H, 35.

# शुद्धिपत्रिका

| पृष्ठे | पङ्क्तौ | अशुद्धानि | शुद्धानि |
|---|---|---|---|
| १० | १४ | संहितावतारो | शास्त्रावतारो |
| १३ | १ | प्रथमोऽध्यायः | द्वितीयोऽध्यायः |
| १७ | ७ | पिङ्गळम् | पिङ्गलम् |
| २४ | २ | सामान्यतो भगवच्छक्ति-द्वैविध्यम् | इयं पङ्क्तिः त्रयोविंशे पृष्ठे सप्तविंशश्लोकस्य पूर्वार्धादनन्तरं बोद्धया |
| २७ | ३ | शास्त्रतात्पर्यक्रिया | शास्त्रतात्पर्यं क्रिया |
| ४० | ९ | व्यज्यते | व्यज्यन्ते |
| ,, | २० | व्यज्यन्ते D. | व्यज्यते A B C E F. |
| ५३ | ५ | श्रियःपतेर्भ° | श्रियः पत्युर्भ° |
| ६९ | ४ | क्रुर्वन्ति | कुर्वन्ति |
| ८९ | १० | तिष्ठति | तिष्ठतु |
| ,, | ,, | इतीदृशम् | इतीदृशः |
| ,, | ११ | तत्तत्प्रमाणमित्युक्तम् | तत्प्रमाणमिति प्रोक्तम् |
| ,, | २० | तिष्ठतु D. | तिष्ठति A B C E F. |
| ,, | २१ | इतीदृशः A C E F. | इतीदृशम् D. |
| ९१ | ३ | कार्यस्यापि हि ते मते | द्वे कालस्य भिदे मते |
| ,, | २० | द्वे कालस्य भिदे मते D. | कार्यस्यापि हि ते मते A B C E F. |
| ९२ | १५ | प्रतिष्ठिता | प्रकीर्तिता |
| ,, | २१ | प्रकीर्तिता D. | प्रतिष्ठिता A B C E F. |
| ११३ | ३ | प्राणमयो व्यूहो | प्रमाणयोर्व्यूहो |
| ,, | १८ | प्रमाणयोर्व्यूहो A B C. | प्राणमयो व्यूहो D E. |
| १२५ | १४ | कर्मतत्कुरुते | कर्म तत्कुरुते |
| १२६ | ६ | बन्धस्य | अजस्य |
| ,, | १४ | याह्युक्ता | या ह्युक्ता |

[illegible]

| पृष्ठे | श्लो | अशुद्धानि | शुद्धानि |
|---|---|---|---|
| १२६ | २० | E B. | E F. |
| ,, | २१ | अजस्य B C. | कन्यस्य D. |
| ,, | २२ | E; पुस्तकेषु | F पुस्तकेषु |
| १५५ | ४ | पद्म मप्नोति | पद्मम्प्नोति |
| १८५ | ९ | श्रोत्रियोऽर्थी समाहितः | श्रेयोर्थी सुसमाहितः. |
| ,, | २३ | श्रेयोर्थी सुसमाहितः D. | श्रोत्रियोऽर्थी समाहितः A B C E F. |
| २०० | ७ | ताराशक्ति॰ | तारशक्ति॰ |
| २०६ | १० | मन्त्रार्णलक्ष्यौ | मन्त्रार्णलक्ष्म्यौ |
| २०८ | ३ | ,, | ,, |
| २०९ | १३ | ,, | ,, |
| २१२ | ३ | ,, | ,, |
| २१३ | ७ | पत्तयश्चैव | पत्नयश्चैव |
| ,, | २० | पत्नयश्चैव D E. | पत्तयश्चैव A B C. |
| २१५ | ६ | मन्त्रार्णलक्ष्यौ | मन्त्रार्णलक्ष्म्यौ |
| ,, | ११ | ॰संयुता | ॰संयुतम् |
| ,, | १४ | मातृका बीज॰ | मातृकाबीज॰ |
| २१६ | ३ | ॰गोपना | ॰गोपनाः |
| ,, | ४ | व्यापियुता चतुर्थ | व्यापियुताश्चतुर्थ |
| २६४ | १३ | प्रेयच्छद्दूषणानि | प्रयच्छेद्दूषणानि |
| ३१३ | ३ | प्राहुर्य य | प्राहुर्यं यं |
| ४०७ | ११ | प्रश्नमेतत् | प्रश्नमेतं |
| ४८० | १४ | ⁴ददेत् | ⁵ददेत् |
| ४८८ | १८ | तत्रैवं | तत्रैनं |
| ५४३ | २ | इतिबुद्धया | इति बुद्धया |
| ५५० | ५ | वहिना | वह्निना |
| ५६३ | ११ | इतिवा | इति वा |
| ५८१ | ९ | संविद्धन | संविद्धन |
| ५८२ | ४ | विद्धनं | विद्धनं |
| ५९४ | २ | राहुजिदाख्यैकोन॰ | राहुजिदाख्यैक॰ |
| ५९४ | ८ | श्रीरामाख्याष्टाविंशैकोन॰ | श्रीरामाख्यपञ्चत्रिंशपदं |
| ६०५ | २ | अरातीयान्कतुः | अरातीयान्स तु |